॥ श्रीः ॥

श्रीवरदराजप्रणीता

# मध्यसिद्धान्तकौमुदी ।

योगीत्युपाभिधेन गणेशात्मजबालकृष्णशर्मणा

टिप्पण्यादिनिवेशनेन समलङ्कृता,

रैक ( रायकवाल ) जीवरामशास्त्रिणा

संशोधिता,

साच

लवपुरनिवासिना पण्डितविश्वंभरनाथशर्मणा

मोहमय्याख्यराजधान्याम्

'गणपत कृष्णाजी' इत्येतस्य मुद्रणालये

मुद्रापयित्वा प्रकाशिता ।

तस्याः

प्रथमेयमङ्कनावृत्तिः

शकाब्दाः १८१७ ख्रिस्ताब्दाः १८[illegible]

॥ श्रीः ॥

# श्रीशिवौ जयतः ।

## मध्यासिद्धान्तकौमुद्याः

### भूमिका.

अस्मिन् किल जगति तर्कव्याकरणमीमांसादीनि भिन्नभिन्नविषयप्रतिपादकानि बहूनि शास्त्राण्युपलभ्यन्ते; तेषु सर्वेष्वपि व्याकरणशास्त्रमेवाग्रेसरत्वेन वरीवर्ति. तस्य शब्दशुद्धिकरत्वात्. सा च सर्वेष्वपि ऐहलौकिकपारलौकिकसाधनेषु प्रथममवश्यमपेक्षिता यदि तु सा न स्यात्तदा तां विना कृतमपि श्रेयःसाधनमनर्थावहं भवति. अत एव तत्रभवता पाणिनिना शिक्षायामुक्तम् ५२ "मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह । सवाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्" इति इन्द्रशत्रुरित्यस्य हि इत्थं वृत्तान्तः—एकदा कस्मिंश्चिद्यज्ञसमये इन्द्राय हविर्दानार्थमिन्द्राव्हानमन्त्रे इन्द्रशत्रुशब्दे बहुव्रीहिस्वरस्थाने यज्ञकर्त्रा यजमानेन तत्पुरुषस्वरः पठितस्तदा तत्र इन्द्रस्य शत्रोर्दैत्यस्यागमनेन यज्ञोऽनशत् इति तस्मात्कस्मिंश्चिदपि श्रेयःसाधनानुष्ठाने स्वरवर्णादियुता शब्दसिद्धिः सम्यगपेक्षिता सा तु व्याकरणं विना अन्येन केनापि शास्त्रेण दुर्विभाव्या. अत एव भगवान् पतञ्जलिर्महाभाष्ये आह "एकः शब्दः सम्यग्ज्ञातः सुष्टुप्रयुक्तः स्वर्गे लोके स कामधुग्भवति" इति एवं चास्य सम्यक्शब्दप्रयोगद्वारा अदृष्टसाधनेऽपि सर्वेषु शास्त्रेषु श्रेष्ठतरत्वं सिद्धम्. अत एव भगवान् पाणिनिरपि "शिक्षाघ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्" इत्यनेन शिक्षावाक्येन वेदाङ्गेष्वप्यस्य शास्त्रस्य मुख्यत्वमवोचत्. अस्तुतावत् ।

एतत् भगवतापाणिनिना निर्मितं तदित्थम्—एकदा भगवान् पाणिनिः शब्दशास्त्रविविदिषया विपिनं गत्वा तत्र बहुदिनपर्यन्तं तपश्चचार तत्र च भगवन्तं शंकरमाराधयामास तदा तस्य भक्तिदार्ढ्यं दृष्ट्वा भगवान् शंकरः कृपाविष्टचेतास्तत्रागत्य चतुर्दशवारं डमरुं नादयामास तस्मादेव "अइउण्" इत्यादीनि चतुर्दशसूत्राणि निरगमन् तच्छ्रुत्वा पाणिनिः समाधिं विसृज्य नेत्रे उन्मील्य च अग्रेभगवन्तं दृष्ट्वा प्रणम्य स्थितस्तदा भगवता शंकरेणोक्तं भो पाणिने त्वं धन्योऽसि कृतकृत्योऽसि इमां मत्प्रसादाल्लब्धां चतुर्दशसूत्रीं संगृह्य स्वाश्रमं गच्छ त्वमस्या एव चतुर्दशसूत्र्या शब्दशास्त्रस्य प्रणेता भविष्यसि इत्युक्त्वा भगवानन्तर्दधौ ततो भगवान् पाणिनिरपि स्वाश्रमम् आगत्य अष्टाध्यायीरूपेणेदं निर्ममे तस्या अष्टाध्याय्याः सर्वेषां सुबोधार्थं भगवता पतञ्जलिना महाभाष्यमकारि तस्याप्यतीव विस्तरतया दुर्बोधत्वं वीक्ष्य श्रीमन्महामहोपाध्यायैर्भट्टोजीदीक्षितैः सर्वलोकोपकारार्थं संध्यादिप्रकरणानुरोधेन तत्र तत्र यथोपयोगमष्टाध्यायीसूत्राणि संगृह्य भाष्याद्यर्थानुसारेण च सिद्धान्तकौमुदी निर्मिता तस्या अपि मन्दबुद्धीनां शास्त्रान्तराभ्यासनिमग्नानां वा ग्रन्थविस्तरत्वाद्दुर्बोधत्वं वीक्ष्य तदुपकारार्थं तत्र भवता वरदराजेन सिद्धान्तकौमुद्याः सारभूतं तावदेव प्रकरणं संगृह्य इयं मध्यसिद्धान्तकौमुदी निर्मिता इयं तावद्बालानां तर्कादिशास्त्रप्रविष्टानां च संक्षेपेण सर्वव्याकरणस्य सारभूतसिद्धान्तानां सुलभतया च बोधिकेति सर्वैः संग्राह्या अभ्यसनीया चेति प्रशास्महे.

अस्मिन्पुस्तके दृष्टिदोषात्प्रमादाद्वा येये दोषाः स्थिता स्ते ते प्राज्ञैः संशोध्य क्षमापनीया इति तान् सप्रणामं प्रार्थयाम इतिशिवम् ॥

बालकृष्ण शास्त्री.

रैक्क ( रायकवाल ) जीवरामशास्त्री

॥ श्रीः ॥

# मध्यसिद्धान्तकौमुदी ।



## ॥ श्रीगौरीशंकरौ जयतः ॥

श्रीगणेशाय नमः ॥ नत्वा वरदराजः श्रीगुरून् भट्टोजिदीक्षितान् ॥ करोति पाणिनीयानां मध्यसिद्धान्तकौमुदीम् ॥ १ ॥ अइउण् । १ । ऋऌक् । २ । एओङ् । ३ । ऐऔच् । ४ । हयवरट् । ५ । लण् । ६ । ञमङणनम् । ७ । झभञ् । ८ । घढधष् । ९ । जबगडदश् । १० । खफछठथचटतव् । ११ । कपय् । १२ । शषसर् । १३ । हल् ॥ १४ । इति सूत्राण्यणादिसंज्ञार्थानि ॥ हकारादिष्वकार उच्चारणार्थः । लण्मध्येत्वित्संज्ञकः । हकारो द्विरुपात्तोऽयमटि शल्यपि वाञ्छता ॥ अर्हेणाधुक्षदित्यत्र द्वयं सिद्धं भविष्यति ॥ २ ॥ हलन्त्यम् ।१।३।३। उपदेशेऽन्त्यं हलित्

१ सिद्धान्तानां कौमुदी सकलजनानन्दजनकत्वात्प्रकाशकत्वाच्च कौमुदीसाम्यम् । मध्या चासौ सिद्धान्तकौमुदी चेति ताम् । २ एषु संहिताया अविवक्षणान्न सन्धिः । यद्वा 'निपात एकाजनाङ्' इत्यनेन प्रगृह्यत्वे प्लुतप्रगृह्येति प्रकृतिभावः । ३ अण् आदिर्यासां ताः अणादयः । अणादयश्च ताः संज्ञाश्चेति अणादिसंज्ञाः । अणादिसंज्ञाभ्य इमानीत्यस्वपदविग्रहः । 'अर्थेन नित्यसमासो विशेष्यलिङ्गताच्च' इतिवक्ष्यमाणत्वात् ।

स्यात् । उपदेश आद्योच्चारणम् । सूत्रेष्वदृष्टं पदं सूत्रान्तरादनुवर्त्तनीयं सर्वत्र । **अदर्शनं लोपः** ।१।१।६०। प्रसक्तस्यादर्शनं लोपसंज्ञं स्यात् । **तस्यलोपः** ।१।३।९। तस्येतो लोपः स्यात् । णादयोऽणाद्यर्थाः । **आदिरन्त्येन सहेता** ।१।१।७। अन्त्येनेता सहित आदिर्मध्यगानां स्वस्य च संज्ञा स्यात् । यथा अण् इति अइउवर्णानां संज्ञा एवमच्, हल्, अल् इत्यादयः । **ऊकालोज्झ्रस्वदीर्घप्लुतः** ।१।२।२७। उश्चऊश्चउ३श्चवः । वांकाल इव कालो यस्य सोऽच् क्रमाद्ध्रस्वदीर्घप्लुतसंज्ञः स्यात् । स प्रत्येकमुदात्तादिभेदेन त्रिधा । **उच्चैरुदात्तः** ।१।२।२९। ताल्वादिषु सभागेषु स्थानेषूर्द्ध्वभागे निष्पन्नोऽजुदात्तसंज्ञः स्यात् । **नीचैरनुदात्तः** ।१।२।३०। ताल्वादिषु सभागेषु स्थानेष्वधोभागे निष्पन्नोऽजनुदात्तसंज्ञः स्यात् । **समाहारः स्वरितः** ।१।२।३१। स नवविधोऽपि प्रत्येकमनुनासिकाननुनासिकत्वाभ्यां द्विधा । **मुखनासिकावचनोऽनुनासिकः** ।१।१।८। मुखसहितनासिकयोच्चार्यमाणो वर्णोऽनुनासिकसंज्ञः स्यात् । तदित्थम् । अ, इ, उ, ऋ, एषां प्रत्येकमष्टादश भेदाः । लृवर्णस्य द्वादश । तस्य दीर्घाभावात् । एचामपि द्वादश । तेषां ह्रस्वाभावात् । **तुल्यास्यप्रयत्नं सवर्णम्** ।१।१।९। ताल्वादिस्थानमाभ्यन्तरप्रयत्नश्चेत्येतद्द्वयं यस्य येन तुल्यं तन्मिथः स-

---

१ मुखसहिता नासिका मुखनासिका उच्यतेऽनेनेति वचनम् । मुखनासिकावचनमस्येति विग्रहः । तदाह । मुखसहितेति । २ आस्ये भवमास्यं 'शरीरावयवाद्यत्' । आस्यं च प्रयत्नश्चेति समाहारद्वन्द्वः । तुल्यमास्यप्रयत्नं यस्येतिविग्रहः । तदेतत्तत्फलमभिप्रेत्याह । ताल्वादिस्थानमाभ्यन्तरप्रयत्नश्चेति ।

वर्णसंज्ञं स्यात्। (ऋलृवर्णयोर्मिथः सावर्ण्यं वाच्यम्।) अकुहविसर्जनीयानां कण्ठः। इचुयशानां तालु। ऋटुरषाणां मूर्द्धा। लृतुलसानां दन्ताः। उपूपध्मानीयानामोष्ठौ। ञमङणनानां नासिका च। एदैतोः कण्ठतालु। ओदौतोः कण्ठौष्ठम्। वकारस्य दन्तौष्ठम्। जिह्वामूलीयस्य जिह्वामूलम्। नासिकानुस्वारस्य। इति स्थानानि। यत्नो द्विधा। आभ्यन्तरो बाह्यश्च। आद्यः पञ्चधा। स्पृष्टेषत्स्पृष्टेषद्विवृतविवृतसंवृतभेदात्। तत्र स्पृष्टं प्रयतनं स्पर्शानाम्। ईषत्स्पृष्टमन्तस्थानाम्। ईषद्विवृतमूष्मणाम्। विवृतं स्वराणाम्। ह्रस्वस्यावर्णस्य प्रयोगे संवृतम्। प्रक्रियादशायां तु विवृतमेव। बाह्यप्रयत्नस्त्वेकादशधा। विवारः संवारः श्वासो नादो घोषोऽघोषोऽल्पप्राणो महाप्राण उदात्तोऽनुदात्तः स्वरितश्चेति। खरो विवाराः श्वासा अघोषाश्च। हशः संवारा नादा घोषाश्च। वर्गाणां प्रथमतृतीयपञ्चमा यणश्चाल्पप्राणाः। वर्गाणां द्वितीयचतुर्थौ शलश्च माहाप्राणाः। कादयो मावसानाः स्पर्शाः। यणोऽन्तस्थाः। शषसहा ऊष्माणः। अचः स्वराः। ᳵक ᳵख इति कखाभ्यां प्रागर्धविसर्गसदृशो जिह्वामूलीयः। ᳵप ᳵफ इति पफाभ्यां प्रागर्धविसर्गसदृश उपध्मानीयः। अं अः इत्यचः परावनुस्वारविसर्गौ। **अणुदित्सवर्णस्य चाप्रत्ययः।१।१।६९।** अविधीयमानोऽण् उदिच्च सवर्णस्य संज्ञा स्यात्। अत्रैवाण् परेण णकारेण। कुचुटुतुपु एते उदितः। तदेवम् इत्यष्टादशानां संज्ञा।

१ नासिका चेति चकारात्स्वस्ववर्गानुकूलं ताल्वादि समुच्चीयते। २ पूर्वेणैवाण्ग्रहाः सर्वे परेणैवेण्ग्रहा मताः। ऋतेऽणुदित्सवर्णस्य ह्येकमेव परेण तु॥

तथेकारोकारौ । ऋकारस्त्रिंशतः । एवं ऌकारोपि । एचो द्वादशानाम् । अनुनासिकाऽननुनासिकभेदेन यवला द्विधा । तेनानुनासिकास्ते द्वयोर्द्वयोः संज्ञा । **परः सन्निकर्षः संहिता** ।१।१।१०। वर्णानामतिशयितः सन्निधिः संहितासंज्ञः स्यात् । **हलोनन्तराः संयोगः** ।१।१।७। अज्भिरव्यवहिता हलः संयोगसंज्ञाः स्युः । **सुप्तिङन्तं पदम्** ।१-४।१४। सुबन्तं तिङन्तं च पदसंज्ञं स्यात् ॥ **इति सन्ध्युपयोगि संज्ञाप्रकरणम् ॥ १ ॥**

**इको यणचि** ।६।१।७७। इकः स्थाने यण् स्यादचि संहितायां विषये । सुधीउपास्य इति स्थिते । **तस्मिन्निति निर्दिष्टे पूर्वस्य** ।१।१।६६। सप्तमीनिर्देशेन विधीयमानं कार्यं वर्णान्तरेणाव्यवहितस्य पूर्वस्य ज्ञेयम् । **स्थानेऽन्तरतमः** ।१।१।५०। प्रसङ्गे सति सदृशतम आदेशः स्यात् । सुध्य्उपास्य इति जाते । **अनचि च** ।८।४।४७। अचः परस्य यरो द्वे वास्तो न त्वचि । इति धस्य द्वित्वम् । **झलां जश् झशि** ।८।४।५३। झलां जश् स्यात् झशि परे । इति पूर्वधस्य दः । **संयोगान्तस्य लोपः** ।८।२।२३। संयोगान्तं यत्पदं तस्य लोपः स्यात् । **अलोन्त्यस्य** ।१।१।५२। षष्ठीनिर्दिष्टान्त्यस्यादेशः स्यात् । इतिप्राप्ते । ( यणः प्रतिषेधोवाच्यः । ) सुद्ध्युपास्यः । मद्ध्वरिः । धात्त्रंशः । लाकृतिः । **एचोऽयवायावः** ।६।१।७८। एचः क्रमात् अय्, अव्, आय्, आव्, एते स्युरचि । **यथासङ्ख्यमनुदेशः समानाम्** ।१।३।१०। समसंबन्धी विधिर्यथासङ्ख्यं स्यात् । हरये । विष्णवे । नायकः । पावकः । **वान्तो**

यि प्रत्यये ।६।१।७७। यादौ प्रत्यये परे ओदौतोरवावौ स्तः। गव्यम्[1]। नाव्यम्[2]। ( अध्वपरिमाणे च । ) गव्यूतिः । **धातोस्तन्निमित्तस्यैव** ।६।१।८०। यादौ प्रत्यये परे धातोरेचश्चेद्वान्तादेशस्तर्हि तन्निमित्तस्यैव नान्यस्य। लव्यम्[3]। अवश्यलाव्यम्[4]। तन्निमित्तस्य किम्। ओयते[5]। औयत[6]। **क्षय्यजय्यौ शक्यार्थे** ।६।१।८१। यान्तादेशनिपातनार्थमिदम्। क्षय्यम्। जय्यम्। शक्यार्थे किम्। क्षेतुं जेतुं योग्यं क्षेयं पापं जेयं मनः। **क्रय्यस्तदर्थे** ।६।१।८२। क्रेतारः क्रीणीयुरिति बुद्ध्या आपणे प्रसारितं क्रय्यम्। क्रेयमन्यत्। क्रयणार्हमित्यर्थः। **अदेङ्गुणः** १।१।२। अदेङ् च गुणसंज्ञः स्यात्। **तपरस्तत्कालस्य** ।१।१।७०। तपरस्तात्परो वा उच्चार्यमाणो वर्णः समकालस्यैव संज्ञा स्यात्। **आद्गुणः** ।६।१।८७। अवर्णादचि परे पूर्वपरयोरेको गुणादेशः स्यात्। उपेन्द्रः। रमेशः। गङ्गोदकम्। **उपदेशेऽजनुनासिक इत्** ।१।३।२। उपदेशेऽनुनासिकोऽजित्संज्ञः स्यात्। प्रतिज्ञानुनासिक्याः पाणिनीयाः। लण्सूत्रस्थावर्णेन सहोच्चार्यमाणो रेफो रलयोः संज्ञा। **उरण् रपरः** ।१।१।५१। ऋ इति त्रिंशतः संज्ञेत्युक्तं तत्स्थाने योऽण् स रपरः सन्नेव प्रव-

---

१ 'गोपयसोर्यत्' इत्यनेन विकारार्थे यत्। २ नौशब्दात् 'नौवयोधर्म'-इत्यादिना तार्यमित्यस्मिन्नर्थे यत्। ३ लुनातेः 'अचो यत्' इत्यनेन यत्। ४ 'ओरावश्यके' इति ण्यत्। ५ आङ्पूर्वाद्वेञः कर्मणि यकि 'वचि स्वपि' इत्यनेन संप्रसारणे पूर्वरूपे 'अकृत्' इति दीर्घे 'आद्गुण' इत्यनेन गुणे च सिद्धमिदं रूपम्। अत्र गुणस्य परादिवद्भावेन धातोरेच्त्वेपि यादिप्रत्ययनिमित्तकत्वं नास्ति। ६ अत्रापि वेञः कर्मणि लङ्। यगादि सर्वं पूर्ववत्। ७ धातुसूत्रगणोणादिवाक्यलिङ्गानुशासनम्। आगमप्रत्ययादेशा उपदेशाः प्रकीर्तिताः।

र्त्तते । कृष्णर्द्धिः । तवल्कारः । **लोपः शाकल्यस्य** ।८।३।१९। अवर्णपूर्वयोः पदान्तयोर्यवयोर्वा लोपोऽशिपरे । **पूर्वत्रासिद्धम्** ।८।२।१। अधिकारोयम्[1] । तेन सपादसप्ताध्यायीं प्रति त्रिपाद्यसिद्धा । त्रिपाद्यामपि पूर्वं प्रति परं शास्त्रमसिद्धम् । हर इह । विष्णइह । हरयिह । विष्णविह । **वृद्धिरादैच्** ।१।१।१। आदैच्च वृद्धिसंज्ञः स्यात् । **वृद्धिरेचि** ।६।१।८८। आदेचि परे वृद्धिरेकादेशः । गुणापवादः । कृष्णैकत्वम् । गङ्गौघः । देवैश्वर्यम् । कृष्णौत्कण्ठ्यम् । **एत्येधत्यूठ्सु** ।६।१।८९। अवर्णादेजाद्योरेत्येधत्योरूठि च परे वृद्धिरेकादेशः स्यात् । पररूपगुणापवादः । उपैति । उपैधते । प्रष्ठौहः । एजाद्योः किम् । उपेतः । माभवान्प्रेदिधत् । ( स्वादीरेरिणोः ) । स्वैरम् । स्वैरी । स्वैरिणी । ( अक्षादूहिन्यामुपसङ्ख्यानम् । ) अक्षौहिणी सेना । ( प्रादूहोढोढ्येषैष्येषु । ) प्रौहः । प्रौढः । प्रौढिः । प्रैषः । प्रैष्यः । ( ऋते च तृतीयासमासे । ) सुखेन ऋतः । सुखार्तः । तृतीयेति किम् । परमर्तः । ( प्रवत्सतरकम्बलवसनार्णदशानामृणे ) । प्रार्णमित्यादि । **उपसर्गाः क्रियायोगे** ।१।४।५९। प्रादयः क्रियायोगे उपसर्गसंज्ञाः स्युः । प्र । परा । अप । सम् । अनु । अव । निस् । निर् । दस् । दुर् । वि । आङ् । नि । अधि । अपि । अति । सु । उत् । अभि । प्रति । परि । उप । एतेप्रादयः । **भूवादयो धातवः**[2] ।१।३।१। क्रियावा-

---

१ स्वदेशवाक्यार्थं विना परदेशैकवाक्यार्थतयार्थबोधजनकत्वमधिकारत्वम् ।

२ भूश्च वाश्चेति द्वन्द्वः । आदिशब्दयोर्व्यवस्थाप्रकारवाचिनोरेकशेषः । आदिश्च आदिश्च आदी भूवौ आदी येषामितिविग्रहः । भूप्रभृतयो वासदृशाः सादृश्यं च क्रियावाचकत्वेनेत्यभिप्रेत्याह । क्रियावाचिन इति ।

चिनो भ्वादयो धातुसंज्ञाः स्युः । **उपसर्गादृति धातौ** ।६।१।९१। अवर्णान्तादुपसर्गादृकारादौ धातौ परे वृद्धिरेकादेशः स्यात् । प्रार्छति । **वासुप्यापिशलेः** ।६।१।९२। आदुपसर्गादृकारादौ सुब्धातौ परे वृद्धिर्वा । आपिशलिग्रहणं पूजार्थम् । **अचो रहाभ्यां द्वे** ।८।४।४। अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वास्तः । इतिप्राप्ते । **शरोऽचि** ।८।४।४९। द्वे न । प्रार्षभीयति । प्रर्षभीयति । **एङि पररूपम्** ।६।१।९४। आदुपसर्गादेङादौ धातौ परे पररूपमेकादेशः । प्रेजते । उपोषति । **अचोन्त्यादिटि** ।१।१।६४। अचां मध्ये योन्त्यः स आदिर्यस्य तट्टिसंज्ञं स्यात् । ( शकन्ध्वादिषु पररूपं वाच्यम् ) ( तच्च टेः ) । शकन्धुः । कर्कन्धुः । कुलटा । सीमन्तः । केशवेशे । सीमान्तोन्यः । मनीषा । हलीषा । लाङ्गलीषा । पतञ्जलिः । सारङ्गः पशुपक्षिणोः । साराङ्गोन्यः । आकृतिगणोऽयम् । ( एवेचानियोगे ) । क्केव भोक्ष्यसे । अनियोगे किम् । तवैव ।( ओत्वोष्ठयोः समासे वा )। स्थूलोतुः । स्थूलौतुः । बिम्बोष्ठः । बिम्बौष्ठः । समासे किम् । तवौष्ठः । **ओमाङोश्च** ।।६।१।९५।। ओमि आङि चात् परे पररूपमेकादेशः स्यात् । शिवायोन्नमः । शिव आ इहि । इति स्थिते । शिव एहि । शिवेहि । **अकः सवर्णे दीर्घः** ।६।१।१०१। अकः सवर्णेऽचिपरे दीर्घ एकादेशः स्यात् । दैत्यारिः । श्रीशः विष्णूदयः । ( ऋति सवर्णे ऋ वा ) होतृकारः । होतॄकारः । **एङः पदान्तादति** ।६।१।१०६। पदान्तादेङोऽति परे पूर्वरूपमेकादेशः स्यात् । हरेऽव । विष्णोऽव । **सर्वत्र विभाषा गोः** ।६।१।१२२। लोके वेदे चैङन्तस्य

गोरति वा प्रकृतिभावः पदान्ते । गो अग्रम् । गोऽग्रम् । एङन्तस्य किम् । चित्रग्वग्रम् । पदान्तस्य किम् गोः । **अनेकाल् शित् सर्वस्य** ।१।१-।५५। इति प्राप्ते । **ङिच्च** ।१।१।५३। ङिदनेकालप्यन्तस्यैव स्यात् । **अवङ्स्फोटायनस्य** ।६।१।१२३। पदान्ते एङन्तस्य गोरवङ् वा स्यादचि । गवाग्रम् । पदान्ते किम् । गवि । **इन्द्रे च** ।६।१।१२४। गोरवङिन्द्रे । गवेन्द्रः । व्यवस्थितविभाषया । गवाक्षः । **दूराद्धूते च** ।८।२।८४। दूरात्सम्बोधने वाक्यस्य टेः प्लुतो वा ॥

**अथप्रतिभावः** ॥ **प्लुतप्रगृह्या अचि नित्यम्** ।६।१।१२५। एतेऽचि प्रकृत्या स्युः । आगच्छ कृष्ण ३ अत्र गौश्चरति । **ह्रस्वं लघु** ।१।४।१०। **संयोगे गुरु** ।१।४।११। संयोगे परे ह्रस्वं गुरुसंज्ञं स्यात् । **दीर्घं च** ।१।४।१२। गुरु स्यात् । **गुरोरनृतोनन्त्यस्याप्येकैकस्य प्राचाम्** ।८।२।८६। प्लुतो वा । दे ३[१] वदत्त ३ । गुरोःकिम् । वकारादकारस्य माभूत् । अनृतः किम् । कृष्ण ३। एकैकग्रहणं पर्यायार्थम् । **ईदूदेद्द्विवचनं प्रगृह्यम्** ।१।१।११। ईदूदेदन्तं द्विवचनं प्रगृह्यं स्यात् । हरी एतौ । विष्णू इमौ । गङ्गे अमू । मणीवोष्ट्रस्येति तु इवार्थे वशब्दो वाशब्दो वा बोध्यः । **अदसो मात्** ।१।१।१२। अस्मात्परावीदूतौ प्रगृह्यौ स्तः । अमी ईशाः । रामकृष्णावमू आसाते । मात्किम् । अमुकेऽत्र । असति माद्ग्रहणे एकारोऽप्यनुवर्तेत । **चादयोऽसत्वे** ।१-

---

१ अपिशब्देगुरोरगुरोश्च टेः प्लुतार्थः । २ वाक्यत्वसंपत्तये अस्यादिरिहीति शब्दो बोध्यः ।

।४।५७। अद्रव्यार्थाश्चादयो निपातसंज्ञाः स्युः। **प्रादयः** ।१।४।५८। एतेऽपि तथा। वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते द्रव्यमित्युच्यते सोऽर्थोऽभेद्यत्वेन विवक्षितः। लिङ्गसङ्ख्यान्वययोग्यं द्रव्यम्। **निपात एकाजनाङ्** ।१।१।१४। एकोऽज्निपात आङ्वर्जः प्रगृह्यः। इ इन्द्रः। उ उमेशः। वाक्यस्मरणयोरङित्[1]। आ एवं नु मन्यसे। आ एवं किल तत्। अन्यत्र ङित्। ईषदुष्णम्। ओष्णम्। **ओत्** ।१।१।१५। ओदन्तो निपातः प्रगृह्यः। अहो ईशाः। **संबुद्धौ शाकल्यस्येतावनार्षे** ।१।१।१६। संबुद्धिनिमित्तक ओकारो वा प्रगृह्योऽवैदिके इतौ परे। विष्णो इति। विष्णविति। विष्ण इति। **मयउञो वो वा** ।८।३।३३। मयः परस्य उञो वो वा स्यादचि। किमु उक्तम्। किम्वुक्तम्। **इकोऽसवर्णेशाकल्यस्य ह्रस्वश्च** ।६।१।१२६। पदान्ता इको ह्रस्वाः प्रकृत्या च वा स्युरसवर्णेऽचि। ह्रस्वविधिसामर्थ्यान्न[2] स्वरसन्धिः। चक्रि अत्र। चक्र्यत्र। पदान्ताः किम्। गौर्यौ। (नसमासे)। वाप्यश्वः। **ऋत्यकः** ।६।१।१२८। ऋति परे पदान्ता अकःप्राग्वत्। ब्रह्मऋषिः। ब्रह्मर्षिः। पदान्ताः किम्। आर्छत्। **इति स्वरसन्धिः** ॥

**स्तोःश्चुना[3] श्चुः** ।८।४।४०। सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गौ स्तः॥ हरिश्शेते। रामश्चिनोति। सच्चित्। शार्ङ्गिञ्जय। **शात्** ।८।४।४४। शात्परस्योक्तं न स्यात्। विश्नः। प्रश्नः। **ष्टुना ष्टुः**।

१ ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः। एतमातङ्ङितं विद्याद्वाक्यस्मरणयोरङित्। २ इति तु भाष्याशयः। ३ अत्र स्थान्यादेशयोर्यथासङ्ख्यम्। निमित्तकार्यिणोस्तु न शादिति ज्ञापकात्।

८।४।४१। स्तोः ष्टुना योगे ष्टुः। रामष्षीकते। पेष्टा। तट्टीका। चक्रिण्ढौकसे। नपदान्ताट्टोरनाम् ।८।४।४२। पदान्ताट्टवर्गात् परस्यानामः स्तोः ष्टुर्न। षट् सन्तः। षट् ते। पदान्तात्किम्। ईट्टे। टोः किम्। सर्पिष्टमम्। (अनाम्नवतिनगरीणामुपसङ्ख्यानम्)। षण्णाम्। षण्णवतिः। षण्णगर्यः। **तोः षि** ।८।४।४३। न ष्टुत्वम्। सन्षष्ठः। **झलां जशोऽन्ते** ।८।२।३९। पदान्ते झलां जशः स्युः। वागीशः। चिद्रूपम्। **यरोऽनुनासिकेऽनुनासिको वा** ।८।४।४५। यरः पदान्तस्याऽनुनासिके परेऽनुनासिको वा। एतन्मुरारिः। एतद्मुरारिः। स्थानप्रयत्नाभ्यामन्तरतमे स्पर्शे चरितार्थो विधिरयं रेफे न प्रवर्त्तते। चतुर्मुखः। (प्रत्यये भाषायां नित्यम्)। तन्मात्रम्। चिन्मयम्। **तोर्लि** ।८।४।६०। परसवर्णः। तल्लयः। विद्वाँल्लिखति। नस्याऽनुनासिको लः। **उदः स्थास्तम्भोः पूर्वस्य** ।८।४।६१। उदः परयोः स्थास्तम्भोः पूर्वसवर्णः। **तस्मादित्युत्तरस्य** ।१।१।६७। पञ्चमीनिर्देशेन क्रियमाणं कार्यं वर्णान्तरेणाव्यवहितस्य परस्य ज्ञेयम्। **आदेः परस्य** ।१।१।५४। परस्य यद्विहितं तत्तस्यादेर्बोध्यम्। अघोषस्य महाप्राणस्य विवारस्य श्वासस्य सस्य तादृश एव थकारः। **झरो झरि सवर्णे** ।८।४।६५। हलः परस्य झरो लोपो वा सवर्णे झरि। **खरि च** ।८।४।५५। झलां चरः स्युः। इत्युदो दस्य तः। उत्थानम्। उत्तंभनम्। **झयो होऽन्यतरस्याम्** ।८।४।६२। झयः परस्य हस्य वा पूर्वसवर्णः। संवारस्य नादस्य घोषस्य महाप्राणस्य हस्य तादृशो वर्गचतुर्थः। वाग्घरिः। वाग्हरिः।

**शश्छोऽटि** ।८।४।६३। पदान्ताज्झयः परस्य शस्य छो वा स्यादटि। तच्छिवः । तच्शिवः । पदान्तात्किम् । विरप्शम् । ( छत्वममीति वाच्यम् ) । तच्छ्लोकेन । **मोऽनुस्वारः** ।८।३।२३। मान्तस्य पदस्यानुस्वारो हलि । हरिं वन्दे । पदस्य किम् । गम्यते । **नश्चापदान्तस्य झलि** ।८।३।२४। नस्य मस्य चापदान्तस्य झल्यनुस्वारः । यशांसि । आक्रंस्यते । झलि किम् । मन्यते । **अनुस्वारस्य ययि परसवर्णः**। ८।४।५८। शान्तः । अङ्कितः । **वा पदान्तस्य** ।८।४।५९। त्वङ्करोषि । त्वं करोषि । **मो राजिसमःक्वौ** ।८।३।२६। क्विबन्ते राजतौ परे समो मस्य म एव स्यात् । सम्राट् । **हे मपरे वा** ।८।३।२६। मपरे हकारे मस्य मो वा । किम्ह्मलयति । किं ह्मलयति । ( यवलपरे यवला वेति वक्तव्यम् ) । किं ह्यः, किँय्ह्यः । किँव्ह्वलयति । किं ह्वलयति । किँल्ह्लादयति । किंह्लादयति । **नपरे नः** ।८।३।२७। नपरे हकारे मस्य नो वा । किन्ह्नुते । किं ह्नुते । **ङः सि धुट्** ।८।३।२९। ङात्परस्य सस्य धुड् वा । **आद्यन्तौ टकितौ** ।१।१।४६। टित्कितौ यस्योक्तौ तस्य क्रमादाद्यन्तावयवौ स्तः । षट्त्सन्तः । षट्सन्तः । **ङ्णोः कुक्टुक् शरि** ।८।३।२८। वा स्तः । प्राङ्क्षष्ठः । प्राङ्क्षष्ठः । सुगण्ट्षष्ठः । सुगण्षष्ठः **नश्च**। ८।३।३०। नान्तात्परस्य सस्य धुड्वा । सन्त्सः । **शि तुक्** ।८।३।३१। नस्य पदान्तस्य शे तुक् वा । सञ्छम्भुः । सञ्च्छम्भुः । सञ्च्शम्भुः । सञ्शम्भुः । ञ्छौ ञ्चछा ञ्चशा ञशाविति चतुष्टयम् । रूपाणामि-

---

१ उभयनिर्देशे पञ्चमीनिर्देशो बलीयान् । इत्यभिमेत्याह । सस्येति ।

ह तुक्छत्वचलोपानां विकल्पनात् । **ङमो ह्रस्वादचि ङमुण्नित्यम्** ।८।३।३२। ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्मात्परस्याऽचो नित्यं ङमुट् ।प्रत्यङ्ङात्मा। सुगण्णीशः । सन्नच्युतः । **समः सुटि** ।८।३।५।समो रुः सुटि। **अत्राऽनुनासिकः पूर्वस्य तु वा** ।८।३।२। अत्र रुप्रकरणे रोः पूर्वस्यानुनासिको वा । **अनुनासिकात्परोऽनुस्वारः** ।८।३।४। अनुनासिकं विहाय रोः पूर्वस्मात्परोऽनुस्वारागमः। **खरवसानयोर्विसर्जनीयः** ।८।३।१५। खरि अवसाने च पदान्तस्य रेफस्य विसर्गः ( संपुंकानां सो वक्तव्यः ) सँस्कर्ता । संस्कर्ता । **पुमः खय्यम्परे** ।८।३।६। अम्परे खयि पुमो रुः । पुँस्कोकिलः । पुंस्कोकिलः । **नश्छव्यऽप्रशान्** ।८।३।७। अम्परे छवि नान्तस्य पदस्य रुः। **विसर्जनीयस्यसः** ।८।३।३४। खरि । चक्रिँस्त्रायस्व । चक्रिंस्त्रायस्व । अप्रशान् किम् । प्रशान्तनोति । पदस्य किम् । हन्ति । अम्परे किम् । सन्त्सरुः खड्गमुष्टिः । **नॄन्पे** । ।८।३।१०। नॄनित्यस्य रुर्वा पे । **कुप्वोः ≍क ≍पौ च** ।८।३।३७। कवर्गे पवर्गे च परे विसर्गस्य ≍क ≍पौ स्तः चाद्विसर्गः । नॄँ≍पाहि । नॄँः पाहि । नॄं≍पाहि । नॄंः पाहि । नॄन्पाहि । **सोपदादौ** ।८।३।३८। विसर्गस्य सः स्यादपदाद्योः कुप्वोः । पयस्पाशम् । पयस्कल्पम् । यशस्काम्यति । ( अनव्ययस्येति वाच्यम् ) प्रातःकल्पम् । ( काम्ये रोरेवेति वाच्यम् ) । नेह गीः काम्यति । **इणः षः** । ८।३।३९। इणः परस्य विसर्गस्य षः स्यात् पूर्वविषये । सर्पिष्पाशम् । सर्पिष्कल्पम् । सर्पि-

---

१ ल्यब्लोपे पञ्चमीत्याशयेनाह । अनुनासिकं विहायेति ।

ष्कम्। सर्पिष्काम्यति। **कस्कादिषु च** ।८।३।४। एष्विण उत्तरस्य विसर्गस्य षः स्यादन्यस्य तु सः। कस्कः। कौतस्कुतः। सर्पिष्कुण्डिका। धनुष्कपालमित्यादि। आकृतिगणोयम्। **तस्य परमाम्रेडितम्।** ।८।१।२। द्विरुक्तस्य परमाम्रेडितं स्यात्। **कानाम्रेडिते।** ८।३।१२। कान्नकारस्य रुराम्रेडिते। काँस्कान् कांस्कान्। **छे च** ।६।१।७३। ह्रस्वस्य छे तुक्। स्वच्छाया शिवच्छाया। **आङ्माङोश्च** ।६।१।७४। तुक् छे। आच्छादयति। माच्छिदत्। **दीर्घात्।** ६।१।७५। तुक् छे। म्लेच्छति। **पदान्ताद्वा** ।६।१।७६। दीर्घात्पदान्ताच्छे तुग्वा। लक्ष्मीच्छाया। लक्ष्मीछाया। इतिहल्सन्धिः।

**विसर्जनीयस्यसः** ।८।३।३४। खरि। विष्णुस्त्राता। **शर्परे विसर्जनीयः** ।८।३।३५। शर्परे खरि विसर्गस्य विसर्गो न त्वन्यत्। कः त्सरुः। घनाघनः क्षोभणः। **वा शरि** ।८।३।३६। शरि विसर्गस्य विसर्गो वा। हरिः शेते। हरिश्शेते (खर्परे शरि विसर्गस्य लोपो वा वक्तव्यः)। हरिस्फुरति। हरिः स्फुरति। **ससजुषो रुः** ।८।२।६६। पदान्तस्य सस्य सजुष् शब्दस्य च रुः स्यात्। **अतो रोरप्लुतादप्लुते** ।६।१।११३। अप्लुतादतः परस्य रोरुः स्यादप्लुतेऽति। शिवोऽर्च्यः। अतः किम्। देवा अत्र। अतीति किम्। श्व आगन्ता। अप्लुतात्किम्। एहि सुश्रोत ३ अत्र स्नाहि। प्लुतस्याऽसिद्धत्वादतः परोयम्। अप्लुतादिति विशेषणे तु तत्सामर्थ्यान्नासिद्धत्वम्। तपरकरणस्य तु न सामर्थ्यम्।

---

१ कान् कानितिवाच्ये आम्रेडितग्रहणं यत्र द्विरुक्तिस्तत्रैव यथा स्यात्। इह माभूत्। कान् कान् पश्यसि। अत्र एकः किंशब्दः प्रश्ने द्वितीयः क्षेपे कान् कुत्सितान् पश्यसीत्यर्थः।

दीर्घनिवृत्त्या चरितार्थत्वात् । अप्लुतेति किम् । तिष्ठतु पय अ३ग्निद-त्त । **हशि च** ।६।१।११४। तथा । शिवो वन्द्यः । **भोभगोअघोअ-पूर्वस्य योऽशि** ।८।३।१७। एतत्पूर्वस्य रोर्यादेशोऽशि । देवा इह । देवायिह । भोस् भगोस् अघोस् इति सान्ता निपाताः । तेषांरुत्वेय-त्वे च कृते । **व्योर्लघुप्रयत्नतरः[1] शाकटायनस्य** ।८।२।१८। अशि पदा-न्ते । **ओतो गार्ग्यस्य** ।८।३।२०। ओकारात्परस्य पदान्तस्याऽलघु-प्रयत्नस्य यस्य नित्यं लोपः । भो अच्युत । लघुप्रयत्नपक्षे । भोयच्यु-त । पदान्तस्य किम् । तोयम् । **हलि सर्वेषाम्** । ८।३।२२। भोभगोअघोअपूर्वस्य यस्य नित्यं लोपः स्याद्धलि । भोदेवाः । भगो नमस्ते । अघोयाहि । देवा यान्ति । **रोऽसुपि** ।८।२।६९।अह्नो रेफा-देशो न तु सुपि । अहरहः । अहर्गणः । असुपि किम् । अहोभ्याम् । अत्राहन्निति रुत्वम् । ( रूपरात्रिरथन्तरेषु रुत्वं वाच्यम् ) अहो रूपम् । गतमहो रात्रिरेषा । एकदेशविकृतन्यायेना[2]होरात्रः । अहोरथन्तरम् । ( अहरादीनां पत्यादिषु वा रेफः ) विसर्गापवादः । अहर्पतिः । गीर्पतिः । धूर्पतिः । पक्षे विसर्गोपध्मानीयौ । **रोरि** ।८।३।१४। रेफस्य रेफे परे लोपः । **ढ्रलोपे[3] पूर्वस्य दीर्घोऽणः** ।६।३।१११ ढरेफयोर्लोपनिमित्तयोः । पुना रमते । हरी रम्यः । शंभू राजते । **ढोढे लोपः** ।८।२।९३। लीं-

१ लघूच्चारणतरः । सञ्चान्तरतम्यात्स्वस्य यः यस्य स यः । २ एकदेशविकृतमनन्यवदित्यनेनेत्यर्थः । ३ ढश्च रश्च ढ्रौ तौ लोपयतीति तस्मिन् । अर्थाड्ढकाररेफात्मके परे पूर्वस्याणो दीर्घ इत्यर्थः । ४ ढ्रलोपे इतिसूत्रस्यपूर्वग्रहणस्यानुत्तरपदेऽपि पूर्वभागस्य दीर्घार्थत्वादिदं संगच्छते । अन्यथासूत्रस्योत्तरपदाधिकारस्थत्वादस्योदाहरणस्यानुपपत्तिरेव ।

ढः । अणः किम् । तृढः । मनस्‌रथ इत्यत्र रुत्वे कृते । हशि चेत्युत्वे रोरीति लोपे च प्राप्ते । **विप्रतिषेधे परं कार्यम्** ।१।४।२। तुल्यबलविरोधे परं कार्यं स्यात् । इति लोपे प्राप्ते । पूर्वत्रासिद्धमिति रोरीत्यस्यासिद्धत्वादुत्वमेव । मनोरथः । **एतत्तदोः सुलोपोऽकोरनञ्समासे हलि** ।६।१।१३२। अककारयोरेतत्तदोर्यः सुस्तस्य लोपो हलि न तु नञ्समासे । एष विष्णुः । स शंभुः । अकोः किम् । एषको रुद्रः । अनञ्समासे किम् । असः शिवः । हलि किम् एषोऽत्र । **सोऽचि लोपे चेत्पादपूरणम्** ।६।१।१३४। स इत्यस्य सोर्लोपः स्यादचि पादश्चेल्लोपे सत्येव पूर्येत । सेमामविड्ढि प्रभृतिम् । सैष दाशरथी रामः । ४। इति विसर्गसन्धिः ।

**अर्थवदधातुरप्रत्ययः प्रातिपदिकम्** ।१।२।४५। धातुं प्रत्ययं प्रत्ययान्तं च वर्जयित्वा अर्थवच्छब्दस्वरूपं प्रातिपदिकसंज्ञं स्यात् । **कृत्तद्धितसमासाश्च** ।१।२।४६। कृत्तद्धितान्तौ समासाश्च तथा स्युः । **स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप्** ।४।१।२। सु औ जसिति प्रथमा । अमौट् शस् द्वितीया । टा भ्यां भिस् तृतीया । ङे भ्यां भ्यस् चतुर्थी । ङसि भ्यां भ्यस् पञ्चमी । ङसोसाम्षष्ठी । ङ्योस्सुप्सप्तमी । **ङ्याप्प्रातिपदिकात्**

१ विप्रतिपूर्वात्सेधतेर्विरोधार्थकत्वमभिप्रेत्य व्याचष्टे । तुल्यबलविरोधे इति । अत एवास्यातुल्यबलेषूत्सर्गापवादनित्यान्तरङ्गबहिरङ्गविधिषु न प्रवृत्तिः । २ सूत्रे सु इति लुप्तषष्ठीकं पृथक्पदमित्याह । एतत्तदोर्यः सुरिति । एतत्तदर्थगतसंख्याभिधायी यः सुस्तस्येत्यर्थः । ३ सूत्रे तन्त्रादिनोभयं विवक्षितमिति भावः ।

।४।१।१। ङ्यन्तादाबन्तात्प्रातिपदिकाच्च परे स्वादयः प्रत्ययाः स्युः। **सुपः** ।१।४।१०३। सुपस्त्रीणि त्रीणि वचनान्येकश एकवचनद्विवचन-बहुवचनसंज्ञानि स्युः। **द्व्येकयोर्द्विवचनैकवचने** ।१।४।२२। द्वित्वैकत्वयोरेते स्तः। **विरामोऽवसानम्** ।१।४।११०। वर्णानामभावोऽवसान-संज्ञः स्यात्। रुत्वविसर्गौ। रामः। ( अयोगवाहानामस्योपरि शर्षु-त्वेति वाच्यम्। ) यमानुस्वारविसर्गजिह्वामूलीयोपध्मानीया अयोगवा-हाः। तेनेह विसर्गस्य यत्वादऽनचिचेति द्वित्वपक्षे राम्मः। **सरूपा-णामेकशेष एकविभक्तौ** ।१।२।६४। एकविभक्तौ यानि सरूपाण्येव दृष्टानि तेषामेक एव शिष्यते[२]। **प्रथमयोः[३] पूर्वसवर्णः** ६।१।१०२। अकः प्रथमाद्वितीययोरचि परे पूर्वसवर्णदीर्घ एकादेशः स्यात्। इति प्राप्ते। **नादिचि** ।६।१।१०४। आदिचि न पूर्वसवर्णदीर्घः। **वृद्धिरेचि**। रामौ। **बहुषु बहुवचनम्** ।१।४।२१। **चुटू** ॥१।३।७। प्रत्ययाद्यौ चुटू इतौ स्तः। **विभक्तिश्च** ।१।४।१०४। सुप्तिङौ विभ-क्तिसंज्ञौ स्तः। **न विभक्तौ तुस्माः** १।३।४। विभक्तिस्थास्तुसमा ने-तः। इति सस्य नेत्वम्। रामाः। **एकवचनं सम्बुद्धिः** ।२।३।४९। सम्बोधने प्रथमाया एकवचनं सम्बुद्धिसंज्ञं स्यात्। **यस्मात्प्रत्ययवि-धिस्तदादि प्रत्ययेऽङ्गम्** ।१।४।१३। यः प्रत्ययो यस्माक्रियते तदा-

---

१ विभक्तिः सारूप्ये उपलक्षणं नत्वेकशेषे निमित्तं। एवंचानैमित्तिकत्त्वेनान्तर-ङ्गोऽयमेकशेषः सुबुत्पत्तेः प्रागेवप्रवर्तते। २ यः शिष्यते सलुप्यमानपदार्थाभिधायी। ३ अत्र प्रथमाशब्दः समुदाये गौणः। द्विवचनमपि समुदायापेक्षया। प्रथमा च द्विती-या च तयोरिति विग्रहः।

दिशब्दस्वरूपं तस्मिन्नङ्गं स्यात्। **एङ्ह्रस्वात्सम्बुद्धेः** ।६।१।६९। एङन्ताद्ध्रस्वान्ताच्चाङ्गाद्धल्लुप्यते सम्बुद्धेश्चेत् । हे राम । हे रामौ । हे रामाः। **अमि पूर्वः** ।६।१।१०७। अकोऽम्यचि पूर्वरूपमेकादेशः स्यात्। रामम्। रामौ। **लशक्वतद्धिते** ।१।३।८। तद्धितवर्जप्रत्ययाद्या लशकुवर्गा इतः स्युः। **तस्माच्छसो नः पुंसि** ।६।१।१०३। पूर्वसवर्णदीर्घात्परो यः शसः सस्तस्य नः स्यात्पुंसि । **अट्कुप्वाङ्नुम्व्यवायेऽपि** ।८।४।२। अट् कवर्गः पवर्ग आङ् नुम् एतैर्व्यस्तैर्यथासंभवमिलितैश्च व्यवधानेपि रषाभ्यां परस्य नस्य णः स्यात् समानपदे। इति प्राप्ते। **पदान्तस्य** ।८।४।३७। नस्य णो न। रामान्। **टाङसिङसामिनात्स्याः** ।७।१।१२। अदन्ताट्टादीनामिनादयः स्युः। णत्वम्। रामेण। **सुपि च** ।७।३।१०२। यञादौ सुप्यतोऽङ्गस्य दीर्घः। रामाभ्याम्। **अतो भिस ऐस्** ।७।१।९। अनेकाल् शित्सर्वस्य। रामैः। **ङेर्यः** ।७।१।१३।अतोऽङ्गात्परस्य ङेर्यादेशः स्यात्। **स्थानिवदादेशोऽनल्विधौ** ।१।१।५६। आदेशः स्थानिवत्स्यान्नतु स्थान्यलाश्रयविधौ। इति स्थानिवत्वात्सुपिचेति दीर्घः। रामाय। रामाभ्याम्। **बहुवचने झल्येत्**।७।३।१०३।झलादौ बहुवचने सुप्यतोऽङ्गस्यैकारः। रामेभ्यः। **वावसाने** ।८।४।५६। अवसाने झलां चरो वा। रामात्। रामाद्। रामाभ्याम्। रामेभ्यः। रामस्य। **ओसि च** ।७।३।१०४। अतोऽङ्गस्यै-

---

४ गुणात्सम्बुद्धेरिति वक्तव्ये एङ्ह्रस्वग्रहणसामर्थ्यात् सन्निपातपरिभाषामपि बाधित्वा सम्बुद्धिलोपः प्रवर्तते। तेन हेहरे इत्यादौ न दोषः।

कारः । रामयोः । **ह्रस्वनद्यापो नुट्** ।७।१।५४। ह्रस्वान्तान्नद्यन्तादाबन्ताच्चाङ्गात्परस्यामो नुडागमः । **नामि** ।६।४।३। अजन्ताङ्गस्य दीर्घः। रामाणाम् । रामे । रामयोः सुपि एत्वे कृते । **आदेशप्रत्यययोः** । ८।३।५९। इण्कुभ्यां परस्यापदान्तस्यादेशः प्रत्ययावयवश्च यः सस्तस्य मूर्द्धन्यादेशः । ईषद्विवृतस्य सस्य तादृश एव षः । रामेषु । एवं कृष्णमुकुन्दादयः । **सर्वादीनि सर्वनामानि** ।१।१।२७। सर्वादीनि शब्दरूपाणि सर्वनामसंज्ञानि स्युः । सर्व । विश्व । उभ । उभय । डतर । डतम । अन्य । अन्यतर । इतर । त्वत् । त्व । नेम । सम । सिम । पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् । स्वमज्ञातिधनाख्यायाम् । अन्तरं बहिर्योगोपसंव्यानयोः।त्यद् । तद् । यद्।एतद्।इदम् । अदस् । एक । द्वि । युष्मद् । अस्मद् । भवतु । किम् । एते पञ्चत्रिंशच्छब्दाः सर्वादयः । **जसः शी** ।७।१।१७। अदन्तात्सर्वनाम्नो जसः शी स्यात् । अनेकाल्त्वात्सर्वादेशः । सर्वे । **सर्वनाम्नः स्मै** ।७।१। १४। अतः सर्वनाम्नो ङेःस्मै । **ङसिङ्योः स्मात्स्मिनौ** ।७।१।१५। अतः सर्वनाम्न एतयोरेतौ स्तः । सर्वस्मात् । सर्वस्माद् । **आमि सर्वनाम्नः सुट्** ।७।१।५२। अवर्णान्तात्परस्य सर्वनाम्नो विहितस्यामः सुडागमः स्यात् । एत्वषत्वे । सर्वेषाम् । सर्वस्मिन् । शेषं रामवत् । एवं

---

१ इह प्रत्ययशब्दः प्रत्ययावयवे लाक्षणिकः हलि सर्वेषामिति निर्देशात्सात्पदाद्योरित्यत्र सातिग्रहणाच्च । आदेशशब्दस्तु आदेशरूप एवेत्याशयेन व्याचष्टे । आदेशः प्रत्ययावयवश्चेति । २ तेन येषां तेषामित्यत्र सुट् सिद्धः सर्वनाम्नो विहितविशेषणाच्च वर्णाश्रमेतराणामित्यत्र न सुट् ।

विश्वदयोप्यदन्ताः । उभशब्दो नित्यं द्विवचनान्तः । उभौ २ । उभाभ्याम् ३ । उभयोः २ । तस्येहपाठोऽकजर्थः । डतरडतमौ प्रत्ययौ । प्रत्ययग्रहणे तदन्तग्रहणमिति तदन्ता ग्राह्याः । नेम इत्यर्द्धे । समः सर्वपर्यायः । तुल्यपर्य्यायस्तु न । समानामिति ज्ञापकात् । **पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् ।१।१।३४।** एषां व्यवस्थायामसंज्ञायां सर्वनामसंज्ञा गणपठात्सर्वत्र या प्राप्ता सा जसि वा स्यात् । पूर्वे । पूर्वाः । स्वाभिधेयापेक्षावधिनियमो व्यवस्था । व्यवस्थायां किम् । दक्षिणा गाथकाः कुशला इत्यर्थः । असंज्ञायां किम् । उत्तराः कुरवः । **स्वमज्ञातिधनाख्यायाम् ।१।१।३५।** ज्ञातिधनान्यवाचिनः स्वशब्दस्य प्राप्ता संज्ञा जसि वा । स्वे । स्वाः । आत्मीया आत्मान इति वा । ज्ञातिधनवाचिनस्तु स्वाः । ज्ञातयोऽर्था वा । **अन्तरम्बहिर्योगोपसंव्यानयोः ।१।१।३६।** बाह्ये परिधानीये चार्थेऽन्तरशब्दस्य प्राप्ता संज्ञा जसि वा । अन्तरे अन्तरा वा गृहाः । बाह्या इत्यर्थः । अन्तरे अन्तरा वा शाटकाः परिधानीया इत्यर्थः । **पूर्वादिभ्यो नवभ्यो वा । ७।१।१६।** एभ्यो ङसिङ्योः स्मात्स्मिनौ वा स्तः । पूर्वस्मात् । पूर्वात् । पूर्वस्मिन् । पूर्वे । एवं परादीनामपि । शेषं सर्ववत् । ( संज्ञोपसर्जनीभूतास्तु न सर्वादयः ) सर्वोनाम कश्चित्तस्मै सर्वाय देहि । अतिक्रान्तः सर्वमतिसर्वस्तस्मै अतिसर्वाय । ( अन्तरमिति गणसूत्रेऽपुरीति वक्तव्यम् । ) अन्तरायांपुरी । तृती-

---

१ स्वस्य पूर्वादिशब्दस्याभिधेयेनापेक्ष्यमाणस्यावधेर्नियम इत्यर्थः ।

**यासमासे ।१।१।३०।** सर्वनामता न । मासपूर्वाय । तृतीयासमासार्थ-वाक्येऽपि न। मासेन पूर्वाय । **द्वन्द्वे च।१।१।३१।**उक्ता संज्ञा न । वर्णा-श्रमेतराणाम् । **विभाषा जसि ।१।१।३२।** वर्णाश्रमेतरे । वर्णाश्रमे तराः । **प्रथमचरमतयाल्पार्द्धकतिपयनेमाश्च ।१।१।३३।** एते ज-स्युक्तसंज्ञा वा स्युः । प्रथमे । प्रथमाः । तयप्प्रत्ययः । द्वितये । द्वि-तयाः । शेषं रामवत् । नेमे । नेमाः । शेषं सर्ववत् । ( तीयस्य ङित्सु वा ) । द्वितीयस्मै द्वितीयायेत्यादि । एवं तृतीयः । निर्जरः । **जराया जरसन्यतरस्याम् ।७।२।१०१।** जराया ज-रस् वाऽजादौ विभक्तौ पदाङ्गाधिकारे तस्य तदन्तस्य च निर्दिश्यमान-स्यादेशा भवन्ति । एकदेशविकृतस्यानन्यत्वाज्जरशब्दस्य जरस् । नि-र्जरसौ । निर्जरसः । उपजीव्यविरोधान्नजरस् । निर्जरैः । पक्षे हलादौ च रामवत् । **पद्दन्नोमास् हृन्निशसन्यूषन्दोषन् यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु ।६।१।६३।** पाद दन्त नासिका मास हृदय निशा असृज् यूष् दोष यकृत् शकृत् उदक आस्य एषां पदादय आदेशाः स्युः शसादौ वा । यत्तु आसनशब्दस्यासन्नादेश इति काशिकायामुक्तम् तत्प्रा-मादिकमेव । पादः । पादौ । पादाः । पादम् । पादौ । पदः । पादान् । पदा ।

---

१ विभाषादिक्समास इत्यतः समासपदानुवृत्त्या सिद्धे पुनः समासग्रहणम-धिकमधिकार्थमिति विधया तृतीयासमासार्थबोधकवाक्यपरमित्याशयः ।

२ 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति परिपरिभाषयेतिभावः ।

३ आस्योष्ठकस्य वर्तिकामिति मन्त्रभाष्ये आस इत्यस्य मुखादित्यर्थकरणादा-सन्नादेशःस्थानी आस्य एव भतीति काशिकोक्तं प्रमादिकम् ।

पादेन । इत्यादि । विश्वपाः । **दीर्घाज्जसि च । ६।१।१०५** । दीर्घाज्जसि इचि च न पूर्वसवर्णदीर्घः । वृद्धिः । विश्वपौ । विश्वपाः । हे विश्वपाः । हेविश्वपौ । हेविश्वपाः । **सुडनपुंसकस्य ।१।१।४३।** स्वादिपञ्चवचनानि सर्वनामस्थानसंज्ञानि स्युरक्लीबस्य । **स्वादिष्वसर्वनामस्थाने ।१।४।१७।** कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु परतः पूर्वं पदं स्यात् । **यचि भम् ।१।४।१८।** यकारादिष्वजादिषु च कप्प्रत्याऽवधिषु स्वादिष्वसर्वनामस्थानेषु पूर्वं भं स्यात् । **आकडारादेका संज्ञा ।१।४।१।** इत उर्ध्वं कडाराः कर्मधारय इत्यतः प्रागेकस्यैकैव संज्ञा ज्ञेया । या परानवकाशा च । तेन शसादावचि भसंज्ञैव न पदत्वम् । **आतो धातोः ।६।४।१४७।** आकारान्तो यो धातुस्तदन्तस्य भस्याङ्गस्य लोपः । 'अलोन्त्यस्य' विश्वपः । विश्वपा । विश्वपाभ्यामित्यादि । एवं शंखध्मादयः । धातोः किम् । हाहान् । आत इति योगविभागादधातोरप्याकारलोपः क्वचित् । क्त्वः । श्वः । हरिः । हरी । **जसि च ७।३।१०९।** ह्रस्वान्तस्याङ्गस्य गुणः । हरयः । **ह्रस्वस्य गुणः । ७।४।१०८।** सम्बुद्धौ । हे हरे । हरिम् । हरीन् । **शेषो घ्यऽसखि ।१।४।७।** शेष इति स्पष्टार्थम् । अनदीसंज्ञौ ह्रस्वौ याविदुतौ तदन्तं सखिवर्जं घिसंज्ञं स्यात् । **आङो नास्त्रियाम् ।७।३।१२०।** घेः परस्याङो ना स्यादस्त्रियाम् । आङिति टासंज्ञा प्राचाम् ।

---

१सुडिति सु इत्यारभ्य औटट्कारेण प्रत्याहारः । तदाह । स्वादिपञ्चवचनानीति ।

हरिणा । हरिभ्याम् ।३। हरिभिः । **घेर्ङिति** ।७।३।१११। घिसंज्ञकस्य ङिति सुपि गुणः । हरये । हरिभ्यः २। गुणे कृते । **ङसिङसोश्च** ।६।१।११०। एङो ङसिङसोरतिपरे पूर्वरूपमेकादेशः । हर्योः । हरीणाम् । **अच्च घेः** ।७।३।११०। इदुद्भ्यां परस्य ङेरौद्धेरत् । हरौ । हरिषु । एवं कव्यादयः । **अनङ् सौ** । ।१।१।९३। सख्युरङ्गस्याऽनङादेशोऽसम्बुद्धौ सौ । **अलोन्त्यात्पूर्वउपधा** । १।१।६५। अन्त्यादलः पूर्वोवर्ण उपधासंज्ञा स्यात् । **सर्वनामस्थाने चासम्बुद्धौ** ।६४।८। नान्तस्योपधाया दीर्घोऽसम्बुद्धौ सर्वनामस्थाने । **अपृक्त एकाल्प्रत्ययः** ।१.२।४१। **हलङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्** ।६।१।६८। हलन्तात्परं दीर्घौ यौ ङ्यापौ तदन्ताच्च परं सुतिसीत्येतदपृक्तं हल् लुप्यते । **प्रत्ययलोपे प्रत्ययलक्षणम्** ।१।१।६२। प्रत्यये लुप्तेऽपि तदाश्रितं कार्यं स्यात् । **नलोपःप्रातिपदिकान्तस्य** ।८।२।७।प्रातिपदिकसंज्ञकं यत्पदं तदन्तस्य नस्य लोपः । सखा । **सख्युरसम्बुद्धौ** । ७।१।९२। सख्युरङ्गात्परं संबुद्धिवर्जं सर्वनामस्थानं णिद्वत्स्यात्। **अचो ञ्णिति** । ७।२।११५। अजन्ताङ्गस्य वृद्धिर्ञिति णिति च । सखायः । हे सखे । सखायौ । सखायं । सखीन्। सख्या । सखिभ्याम्। सखिभिः । सख्ये।**ख्यत्यात्परस्य**[1][2] ।६।१।११२। खितिशब्दाभ्यां खीतीशब्दाभ्यां कृतयणादेशाभ्यां परस्य ङसिङसोरत उः । सख्युः।२।**औत्** । १।३।११८। इतरस्य ङे रौत् । सख्यौ । शेषं हरिवत् । **पतिः**

---

१ घेर्ङाविति नसूत्रितम् विंशतिशब्दे तिर्विंशतेर्डितीति लोपापत्तेः।२पञ्चमीनिर्देशादेवपरस्येतिलब्धे पुनः परग्रहणं 'एकः पूर्वपरयोः' इत्यस्यात्राप्रवृत्तिरितिध्वननार्थम् ।

**समास एव** ।१।४।८। घिसंज्ञः । पत्या । पत्युः २ । पत्यौ । शेषं हरिवत् । समासे तु भूपतये । कतिशब्दो नित्यं बहुवचनान्तः । **बहुगणवतुडति सङ्ख्या** ।१।१।२३। **डति च**।१।१।२२।डत्यन्ता सङ्ख्या षट्संज्ञा स्यात् । **षड्भ्यो लुक्** ।७।१।२५। जश्शसोः । **प्रत्ययस्य लुक्श्लुलुपः** ।१।१।६१। लुक्श्लुलुपशब्दैः कृतं प्रत्ययादर्शनं क्रमात्तत्तत्संज्ञं स्यात् । जसि चेति गुणे प्राप्ते । **न लुमताङ्गस्य** ।१।१।६३। लुमता शब्देन लुप्ते तन्निमित्तमङ्गकार्यं न स्यात् । कति २ । कतिभिः । कतिभ्यः । कतिभ्यः । कतीनाम् । कतिषु । अस्मद्युष्मत् षट्संज्ञकास्त्रिषु सरूपाः । त्रिशब्दो नित्यं बहुवचनान्तः । त्रयः । त्रीन् । त्रिभिः । त्रिभ्यः २ । **त्रेस्त्रयः** ।७।१।५३। आमि । त्रयाणाम् । त्रिषु । गौणत्वेऽपि । प्रियत्रयाणाम् । द्विशब्दो नित्यं द्विवचनान्तः । **त्यदादीनामः** ।७।२।१०२। एषामकारो विभक्तौ । द्विपर्यन्तानामेवेष्टिः । द्वौ २ । द्वाभ्याम् ३ । द्वयोः २ । द्विपर्यान्तानाम् किम् । भवान् । भवन्तौ । पाति लोकमिति पपीः सूर्यः । पप्यौ।पप्यः।हेपपीः । पपीम्।पपीन्।पप्या । पपीभ्याम् ।३। पपीभिः । पप्ये । पपीभ्यः २। पप्यः । पप्योः । पप्याम् । पपी । पपीषु । एवं वातप्रम्यादयः । बह्व्यः श्रेयस्यो यस्य स बहुश्रेयसी । **यू स्त्र्याख्यौ नदी** ।१।४।३। ईदूदन्तौ नित्यस्त्रीलिङ्गौ नदीसंज्ञौ स्तः । ( प्रथमलिङ्गग्रहणं च ) । पूर्वं स्त्र्याख्यस्योपसर्जनत्वेऽपि नदी-

---

१ नित्यसङ्ख्याविशिष्टेऽर्थे एकत्वद्वित्वयोरनन्वयादनन्वितार्थकविभक्तिकल्पनापेक्षयाऽनुवादविभक्तिकल्पनस्य लाघवाद्बहुवचनमेवेतिभावः ।

त्वं वक्तव्यमित्यर्थः । **अम्बार्थनद्योर्ह्रस्वः** ।७।३।१०
नद्यन्तानां च ह्रस्वः स्यात्सम्बुद्धौ[1] । हेबहुश्रेयसि । अ
३।११२। नद्यन्तात्परेषां ङितामाडागमः । **आटश्च** ।६
चि परे वृद्धिरेकादेशः स्यात् । बहुश्रेयस्यै । बहुश्रेयस
नाम् । **ङेराम्नद्याम्नीभ्यः** ।७।३।११६। नद्यन्तादाबन्त
स्य ङेरामादेशः स्यात् । इह परत्वादाटा नुट् बाध्यते ।
शेषं पपीवत् । अतिलक्ष्मीः । शेषं बहुश्रेयसीवत् । प्र
**धातुभ्रुवां य्वोरियङुवङौ** ।६।४।७७। श्नुप्रत्ययान्त
धातोर्भ्रूइत्येतस्य चाङ्गस्येयङुवङौ स्तोऽजादौ प्रत्यये प
**एरनेकाचोऽसंयोगपूर्वस्य** ।६।४।८२। धात्ववयवसंयो
गइवर्णस्तदन्तो यो धातुस्तदन्तस्याऽनेकाचोऽङ्गस्य यण
रे । प्रध्यौ । प्रध्यः । प्रध्यम् । प्रध्यः । प्रध्यि । शेषं
ग्रामणीः । ङौ तु ग्रामण्याम् । **गतिश्च** ।१।४।६०।
गतिसंज्ञाः स्युः । ( गतिकारकेतरपूर्वपदस्य यणनेष्यते
शुद्धधियः । **न भूसुधियोः** ।६।४।८५। एतयोरचि सु

---

१ अम्बार्थानां ह्रस्वः ह्रस्वनद्योर्गुण इति न्यासेन सि
विधानसामर्थ्यान्न गुणः । सन्निपातपरिभाषाया अनित्यत
२ प्रध्यायतीति प्रधीः । 'ध्यायतेः संप्रसारणं च ' इति क्वि
रूपे च हल इति दीर्घः।प्रकृष्टा धीरिति विग्रहे तु धीशब्दस्य नित्य
ग्रहणं चेति स्त्रीलिङ्गातिदेशे यथासम्भवं नदीकार्यं बोध्यम

सुधियौ । सुधियः । इत्यादि । सुखमिच्छतीति सुखीः । सुतीः । सुत्त्युः ।२। सुख्युः ।२। शेषं प्रधीवत् । शम्भुर्हरिवत् । एवं भान्वादयः। **तृज्वत्क्रोष्टुः**।७।१।९५। असम्बुद्धौ सर्वनामस्थाने । क्रोष्टु इत्यस्य क्रोष्टृ प्रयोक्तव्य इत्यर्थः । **ऋतो ङि सर्वनामस्थानयोः** ।७।३।११०। गुणः । इति प्राप्ते । **ऋदुशनस्पुरुदंसोऽनेहसाञ्च** ।७।१।९४। ऋदन्तानामुशनसादीनां चानङ् स्यादसम्बुद्धौ सौ । **अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम्** ।६।४।११। अबादीनामुपधाया दीर्घोऽसम्बुद्धौ सर्वनामस्थाने । क्रोष्टा । क्रोष्टारौ । क्रोष्टारः । क्रोष्टारम् । क्रोष्टारौ । क्रोष्टून् । **विभाषा तृतीयादिष्वचि** ।७।१।९७। अजादिषु तृतीयादिषु क्रोष्टुर्वा तृज्वत् । क्रोष्ट्रा । क्रोष्टुना । क्रोष्ट्रे । क्रोष्टवे । **ऋत उत्**। ६।१।१११। ऋतो ङसिङसोरतिपरे पूर्वपरयोरुदेकादेशः । रपरः। **रात्सस्य** ।८।२।२४। रेफात्संयोगान्तस्य सस्यैव लोपो नान्यस्य । रेफस्य विसर्गः । क्रोष्टुः २। क्रोष्ट्रोः २। क्रोष्ट्वोः । ( नुमचिरतृज्वद्भावगुणेभ्यो नुट् पूर्वविप्रतिषेधेन ) । क्रोष्टूनाम् । क्रोष्टरि । पक्षे हलादौ च शम्भुवत् । हूहूः । हूह्वावित्यादि । अतिचमूशब्दे तु नदीकार्यं विशेषः । हे अतिचमु । अतिचम्वै । अतिचम्वाः २। अतिचमूनाम् । अतिचम्वाम् । खलपूः । **ओः सुपि**।६।४।८३। धात्ववयवसंयोगपूर्वो न भवति य उवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यण् अचि सुपि । खलप्वौ।खलप्वः । एवं सुल्वादयः।स्वयंभूः। स्वयंभुवौ । स्वयंभुवः । एवं स्वभूः वर्षाभूः । **वर्षाभ्वश्च** ।६।४।८४।

अस्य यण् स्यादचि सुपि । वर्षाभ्वावित्यादि । दृन्भूः । ( दृन्करपुनः पूर्वस्य भुवो यण् वक्तव्यः ) । दृन्भ्वौ । दृन्भ्वः एवं करभूः । पुनर्भूः । दृग्भूकाराभूशब्दौ स्वयंभूवत् । धाता । धातारौ । धातारः । हेधातः । ( ऋवर्णान्नस्य णत्वं वाच्यम् ) धातॄणाम् । एवं नप्त्रादयः । अप्तृन्नि-तिसूत्रे नप्त्रादि ग्रहणं व्युत्पत्तिपक्षे नियमार्थम् । तेनेह न । पिता । पितरौ । पितरः । पितरम् । शेषं धातृवत् । एवं जामात्रादयः । ना । नरौ । नरः । **नृच ६।४।६।** अस्य नामि वा दीर्घः । नृणाम् । नॄणाम् । **गोतो णित् ।७।१।९०।** गोशब्दात्परं सर्वनामस्थानं णिद्वत् । गौः । गावौ । गावः । **औतोम्शसोः।६।१।९३।** ओकारादम्शसोरचि आका-र एकादेशः । गाम् । गावौ । गाः । गवा गवे । गोः २। **रायो हलि ।७।२।८५।** रैशब्दस्याकारादेशो हलि विभक्तौ । राः । रायौ । रायः । राभ्यामित्यादि । ग्लौः । ग्लावौ । ग्लावः । ग्लौभ्यामित्यादि । इत्यजन्ताःपुँल्लिङ्गाः ॥

रमा । **औङ आपः ।७।१।१८।** आबन्तादौङः शी स्यात् । औङित्यौकारविभक्तेः संज्ञा । रमे । रमाः । **सम्बुद्धौ च ।७।३।१०६।** आप एकारः । हेरमे । हेरमे । हेरमाः । रमाम् । रमाः । **आङिचापः ।७।३।१०५।** आङि ओसि चाप एकारः । रमया । रमाभ्याम् । रमा-भिः । **याडापः ।७।३।११३।** आपो ङितो याट् । वृद्धिः । रमायै ।

---

१ उणादिनिष्पन्नानां तृन्तृजन्तानांचेद्भवति तर्हि नप्त्रादीनामेवेति ।
२ओतोणिदितिवाच्यम् । विहितविशेषणं च । तेन सुद्यौः । सुद्यावौ । इत्यादिसिद्धिः ।

रमाभ्यः । रमायाः । रमयोः । रमाणाम् । रमासु । एवं दुर्गादयः । **सर्वनाम्नः स्याड्ढ्रस्वश्च ।७।३।११४।** आबन्तात्सर्वनाम्नो ङितः स्याडापश्च ह्रस्वः । सर्वस्याः २। सर्वासाम् । सर्वस्याम् । शेषं रमावत् । एवं विश्वादयोऽप्याबन्ताः । **विभाषा दिक्समासे बहुव्रीहौ ।१।१।२८।** सर्वनामता वा स्यात् । उत्तरपूर्वस्यै । उत्तरपूर्वायै । इत्यादि । अन्तरस्यै । शालायै । अपुरीत्युक्तेनेह । अन्तरायै नगर्यै । तीयस्य ङित्सूपसंख्यानात् । द्वितीयस्यै । द्वितीयायै । एवं तृतीया । अम्बार्थनद्योर्ह्रस्वः। हे अम्ब । हे अक्क । हे अल्ल । असंयुक्ता ये डलकास्तद्वतां ह्रस्वो न । हे अम्बाडे । हे अम्बाले । हे अम्बिके । जरा । जरसौ । जरे । इत्यादि । पक्षे हलादौ च रमावत् । गोपा विश्वपावत् । मतीः । मत्या । **ङिति ह्रस्वश्च ।१।४।६।** इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ ह्रस्वौ च इउवर्णौ स्त्रियां वा नदीसंज्ञौ स्तो ङिति । मत्यै । मतये । मत्याः । मतेः । परत्वात् औत् इतिप्राप्ते । **इदुद्भ्याम् ।७।३। ११७।** नदीसंज्ञकाभ्यामिदुद्भ्यां परस्य ङेराम् । मत्याम् । मतौ । शेषं हरिवत् एवं बुद्ध्यादयः । **त्रिचतुरोः स्त्रियां तिसृ चतसृ ।७।२।९९।** स्त्रीलिङ्गयोरेतौ स्तो विभक्तौ । **अचि र ऋतः ।७।२।१००।** तिसृचतस्रोर्ऋतो रादेशोऽचि । गुणदीर्घोत्वानामपवादः । तिस्रः २। तिसृभिः तिसृभ्यः । आमि नुट् । **न तिसृ चतसृ ।६।४।४।** एतयोर्नामि दीर्घो न । तिसृणाम् । तिसृषु । द्वे २। द्वाभ्याम् ३। द्वयोः २। गौरी । गौर्यौ । गौर्यः । हे गौरि । गौर्यावित्यादि । एवं नद्यादयः । लक्ष्मीः ।

शेषं गौरीवत्। एवं तरीतन्त्र्यादयः। स्त्री। हे स्त्रि। **स्त्रियाः।६।४। ७९।** अस्येयङजादौ प्रत्यये। स्त्रियौ। स्त्रियः। **वाऽम्शसोः।६। ४।८०।** अमि शसि च स्त्रिया इयङ् वा। स्त्रियम् स्त्रीम्। स्त्रियः। स्त्रीः। स्त्रिया। स्त्रियै। स्त्रियाः २। परत्वान्नुट्[1]। स्त्रीणाम्। स्त्रियाम्। स्त्रीषु। श्रीः। श्रियौ। श्रियः। **नेयङुवङ्स्थानावस्त्री।१।४।४।** इयङुवङोः स्थितिर्ययोस्तावीदूतौ नदीसंज्ञौ न स्तो न तु स्त्री। हे श्रीः। श्रियै। श्रिये। श्रियाः २। श्रियः २। **वामि।२।१।५।** इयङुवङ्-स्थानौ स्त्र्याख्यौ यू आमि वा नदीसंज्ञौन स्तो न तु स्त्री।श्रीणाम्। श्रियाम्।२। श्रियि। धेनुर्मतिवत्। **स्त्रियां च ७।१।२६।** स्त्रीवाची क्रोष्टुशब्दस्तृजन्तवद्रूपं लभते। **ऋन्नेभ्यो ङीप्।४।१।५।** ऋदन्तेभ्यो नान्तेभ्यश्च स्त्रियां ङीप्। क्रोष्ट्री। गौरीवत्। वधूः। शेषं नदीवत्। भ्रूः। श्रीवत्। स्वयम्भूः पुंवत्। **न षट्स्वस्रादिभ्यः।४।१।१२।** एभ्यो ङीप्टापौ न स्तः। स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा। याता मातेति सप्तैते स्वस्रादय उदाहृताः। स्वसा। स्वसारौ। माता पितृवत्। शसि मातॄः। द्यौर्गोवत्। राः पुंवत्। नौग्लौवत्। इत्यजन्ताः स्त्रीलिङ्गाः।

---

१ स्त्रियाइत्यनेन विहितेयङपेक्षयेतिभावः।

**अतोऽम्**।७।१।२४।अतोऽज्ञात्क्लीबात् स्वमोरम्[१] । ज्ञानम् । एङ्ह्रस्वादिति सम्बुद्धिलोपः । हेज्ञान । **नपुंसकाच्च**७।१।१९। क्लीबादौङःशी । **भसंज्ञायाम्**।**यस्येति च**।६।१।१४८।ईकारे तद्धिते च परे भस्येवर्णावर्णयोर्लोपः । इत्यकारलोपे प्राप्ते ( औङः श्यां प्रतिषेधः ) ज्ञाने । **जश्शसोः शिः** ।७।१।२०। क्लीबात् । **शि सर्वनामस्थानम्** ।१।१।४२। **नपुंसकस्यझलचः**।७।१।७२।झलन्तस्याजन्तस्य च क्लीबस्य नुमागमः स्यात्सर्वनामस्थाने । **मिदचोऽन्त्यात्परः** ।१।१।४७। अचां मध्ये योन्त्यस्तस्मात्परस्तस्यैवान्तावयवो मित्स्यात् । उपधादीर्घः । ज्ञानानि । पुनस्तद्वत् । शेषं पुंवत् । एवं धनवनफलादयः । **अद्ड्डुतरादिभ्यः पञ्चभ्यः** ।७।१।२५। एभ्यः क्लीबेभ्यः स्वमोरदडादेशः । **टेः** ।६।४।१४३। डिति भस्य टेर्लोपः । कतरत् । कतरद् । कतरे । कतराणि । हे कतरत् । शेषं पुंवत् । इतरत् । अन्यत् २। अन्यतरत् २। अन्यतमशब्दस्य तु अन्यतममित्येव । ( एकतरात्प्रतिषेधः ) । एकतरम् । **ह्रस्वो नपुंसके प्रातिपदिकस्य** ।१।२।४७। अजन्तस्येत्येव । श्रीपं ज्ञानवत् । **स्वमोर्नपुंसकात्** ।७।१।२३। लुक् । वारि । **इकोचि विभक्तौ** ।७।१।७३। इगन्तस्य क्लीबस्य नुमचि विभक्तौ । वा-

१ अमोऽम्विधानं 'स्वमोर्नपुंसकात्' इति लुको बाधनार्थम् । अमिति । यद्यप्यत्रम् इति छित्वा इष्टरूपं सिद्ध्यति 'सुपिच' इति दीर्घस्तु सन्निपातपरिभाषया न प्रवर्तते । तथापि द्वितीयायामादेः परस्येति अमः अकारे मादेशप्रसक्तौ ज्ञानम्म् इत्यनिष्टं प्रसज्जेत । संयोगान्तलोपस्तु न प्रवर्तेत तत्र 'झलोझलि' इत्यतो झलपकर्षणाज्झल एव लोप इत्याशयेनेदम् ।

रिणी । वारीणि । नलुमतेत्यस्यानित्यत्वपक्षे सम्बुद्धिनिमित्तो गुणः । हेवारे हेवारि । घेर्ङितीति गुणे प्राप्ते । ( वृद्ध्यौत्वतृज्वद्भावगुणेभ्यो नुम् पूर्वविप्रतिषेधेन ) । वारिणे । वारिणः । वारिणोः । नुमचिरेति नुट् । वारीणाम् । वारिणि । हलादौ हरिवत् । **तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य** ।७।१।७५। प्रवृत्तिनिमित्तैक्ये भाषितपुंस्कमिगन्तं क्लीबं पुंवद्वा टादावचि । अनादये । अनादिने इत्यादि शेषं वारिवत् । 'यन्निमित्तमुपादाय पुंसि शब्दः प्रवर्त्तते । क्लीबवृत्तौ तदेवस्यादुक्तपुंस्कं तदुच्यते । पीलुर्वृक्षस्तत्फलं पीलु पीलुने नहि पीलवे । वृक्षे निमित्तं पीलुत्वं तज्जत्वं तत्फले पुनः' । तस्मै पीलुने । न पुंवत् । प्रवृत्तिनिमित्तभेदात् । **अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः** ।७।७५। टादावचि । **अल्लोपोनः** । ६।४।१३४। अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिप्रत्ययपरो योऽन् तस्याकारस्य लोपः । दध्ना । दध्ने । दध्नः २। दध्नोः २। **विभाषा ङिश्योः** ।६।४।१३५। अंगावयवोऽसर्वनामस्थानयजादिस्वादिप्रत्ययपरो योऽन् तस्याकारस्य लोपो वा ङिश्योः । दध्नि । दधनि । शेषं वारिवत् । एवमस्थिसक्थ्यक्षीणि । सुधि । सुधिनी । सुधीनि हेसुधे । हेसुधि । सुधिने । इत्यादि । मधु । मधुनी । मधूनि । हेमधो । हेमधु । एवमम्ब्वादयः । सुलु । सुलुनी । सुलुने इत्यादि । धातृ ।

---

१ इकोऽचीत्यत्राज्ग्रहणमिह ज्ञापकम् । तदित्थम् । भ्यांभिसादिषु नुमः प्रवृत्तावपि 'नलोपः प्रातिपदिकान्तस्य' इत्यनेन लोपसम्भवात् । सम्बुद्धौ तु एङ्ह्रस्वादित्येन सम्बुद्धेरेव लुका लुप्ते तत्र नुमः प्राप्तिरेव नास्ति । एवं चाज्ग्रहणं व्यर्थं सदुक्तेऽर्थे ज्ञापकमिति भावः ।

धातृणी । धातॄणि । हे धातः । हे धातृ । धात्रा धातृणा । एवं ज्ञातृकर्त्रादयः । **एच इग्घ्रस्वादेशे ।१।१।४८।** आदिश्यमानेषु ह्रस्वेषु मध्ये एच इगेवं स्यात् । मधु । मधुनी । मधूनि । मधुना । इत्यादि । मरि । मरिणी । मरीणि । मरिणा । एकदेशविकृतमनन्यवत् । मराभ्याम् । मरीणाम् । सुनु । सुनुनी । सुनूनि सुनुनेत्यादि । इत्यजन्ता नपुंसकलिङ्गाः ॥

**हो ढः ।८।२।३१।** झलि पदान्ते च । लिट् । लिड् । लिहौ २। लिहः । लिड्भ्याम् । लिट्सु । लिट्त्सु । **दादेर्धातोर्घः ।८।२।३२।** झलि पदान्ते चोपदेशे दादेर्धातोर्हस्य घः । **एकाचो बशो भष् झषन्तस्य स्ध्वोः ।८।२।३७।** धात्ववयवस्यैकाचो झषंतस्य बशो भष् से ध्वे पदान्ते च । इह व्यपदेशिवद्भावेन धात्ववयवत्वाद्भष्भावः । धुक् । धुग् । दुहौ । दुहः । दुहा । धुग्भ्याम् । धुक्षु । **वा द्रुहमुहष्णुहष्णिहाम् ।८।२।३३।** एषां हस्य वा घो झलि पदान्ते च । ध्रुक् ।

---

१ एचां पूर्वभागोऽकारसदृशः उत्तरस्तु इवर्णोवर्णसदृशस्तत्रोभयान्तरतमह्रस्वस्याभावात्पर्यायेण अकारः स्यादिकारोकारौ च स्यातां तत्र कदाप्यकारो माभूत् किन्तु इगेव स्यात् इति नियमार्थेऽयं परिभाषेत्याशयेनाह । इगेव स्यादिति । २ढस्य जश्त्वेन डः तस्य खरि चेति चर्त्वेन टः । लिट्त्सु इत्यत्र तु चर्त्वस्यासिद्धत्वात्पूर्वं डः सीति धुट् तदनन्तरं चर्त्वम् । एवमग्रेप्यूह्यम् । ३ धातोरवयव इति वैयधिकरण्येनान्वये क्विबन्तस्य दुहेर्दादेरिति घत्वेन झषन्तत्वेपि भष्भावो न स्यात् दुघिति समुदास्य यः पूर्वावयवो दुइत्येकाच् तस्य झषन्तत्वाभावात् । उघ् इति उत्तरावयवे तु बशभावादित्यत आह । व्यपदेशिवदिति 'व्यपदेशिवदेकस्मिन्' इत्यनया परिभाषयेति भावः ।

ध्रुग् । ध्रुट् । ध्रुड् । द्रुहौ । द्रुहः । ध्रुग्भ्याम् । ध्रुड्भ्याम् । ध्रुक्षु । ध्रुट्सु ध्रुट्त्सु १। एवं मुहः । **धात्वादेः षः सः ।६।१।६४।** ष्णुक् । ष्णुग् । ष्णुट् २ । एवं ष्णिहः । **इग्यणः संप्रसारणम् ।१।१।४५।** यणः स्थाने प्रयुज्यमानो य इक् स संप्रसारणसंज्ञः स्यात् । **वाह ऊठ् । ६।४।१३२।** भस्य वाहः संप्रसारणमूठ् । **संप्रसारणाच्च ।६।१।१०८।** संप्रसारणादचि पूर्वरुपमेकादेशः । वृद्धिः । विश्वौहः । इत्यादि । **चतुरनडुहोरामुदात्तः ।७।१।९८।** सर्वनामस्थाने । **सावनडुहः ।७।१।८२।** नुम् । आच्छीनद्योरिति सूत्रादादित्यधिकारादवर्णात्परोऽयं नुम् । अतो विशेषविहितेनापि नुमा आम् न बाध्यते । आमाच नुम् न बाध्यते । सुलोपः । संयोगान्तलोपः । नुम्विधिसामर्थ्याद्वसुस्रंस्विति दत्वं न । संयोगान्तलोपस्यासिद्धत्वान्नलोपो न । अनड्वान् । **अम्सम्बुद्धौ ।१।९६।** चतुरनडुहोः । हे अनड्वन् । अनड्वाहौ । अनडुहः । **वसुस्रंसुध्वं स्वनडुहां दः ।८।२।७२।** सान्तवस्वन्तस्य स्रंसादेश्च दः स्यात्पदान्ते । अनडुद्भ्यामित्यादि । पदान्ते किम् स्रस्तम् । ध्वस्तम् । **सहेः साडः सः ।८।३।५६।** साड्रूपस्य सहेः सस्य मूर्द्धन्यादेशः । तुराषाट् । तुराषाड् । तुरासाहौ । तुराषाड्भ्यामित्यादि । **दिव औत् । ७।१।८४।** दिविति प्रातिपदिकस्यौत्स्यात्सौ । सुद्यौः । सुदिवौ । **दिव उत् ।६।१।८४।** पदान्ते । सुद्युभ्यामित्यादि । चत्वारः । चतुरः । चतुर्भिः चतुर्भ्यः २। **षट्चतुर्भ्यश्च ।७।१।५५।** एभ्य आमो नुडागमः

स्यात् । **रषाभ्यां नोणः समानपदे** ।८।४।१। चतुर्णाम् । **रोः[1] सुपि**। ८।३।१६। रोरेव विसर्जनीयः सुपि । चतुर्षु । **मो नो धातोः** ।८।२। ६४। पदान्ते । प्रशान् । प्रशामौ । **किमः कः** ।७।२।१०३। विभक्तौ। कः । कौ । के । इत्यादि । **इदमो मः** ।७।२।१०८। सौ । त्यदाद्यत्वापवादः । **इदोऽय् पुंसि** ।७।२।१११। इदम इदोऽय् सौ पुंसि । अयम् । त्यदाद्यत्वे । **अतो गुणे**।६।१।९७। अपदान्तादतो गुणे पररूपमेकादेशः । **दश्च** ।७।२।१०९। इदमो दस्य मः स्याद्विभक्तौ । इमौ । इमे । त्यदादेः सम्बोधनं नास्तीत्युत्सर्गः । **अनाप्यकः** ।७।२।११२। अककारस्य इदम इदोऽनापि विभक्तौ । आबिति प्रत्याहारः[2] । अनेन। **हलि लोपः** ।७।२।११३। अककारस्य इदम इदो लोप आपि हलादौ । *नानर्थकेऽलोन्त्यविधिरनभ्यासविकारे[3]* । **आद्यन्तवदेकस्मिन्**[4]।१। १।२१। एकस्मिन्क्रियमाणं कार्यमादाविवान्त इव स्यात् । सुपिचेति दीर्घः । आभ्याम् । **नेदमदसोरकोः** ।७।२।११। अककारयोरिदमदसोर्भिस ऐस् न स्यात्। एभिः । अस्मै । एभ्यः २। अस्मात् । अस्य । अनयोः । एषाम् । अस्मिन् । एषु । **द्वितीयाटौस्स्वेनः**।२।४।३४।इद-

---

१ 'खरवसानयोः'— इत्येवसिद्धेऽयमारम्भो नियमार्थ इत्याह । रोरेवेति । रोः सुप्येवेति विपरीतनियमस्त्वत्र न । 'हलो नन्तराः संयोगः' इत्यादिनिर्देशात् । २ टा इत्यारभ्य सुपः पकारेणेत्यर्थः । ३ बिभर्ति पिपर्ति इत्यादौ 'भृञामित्' 'अर्तिपिपर्त्योश्च' इतीत्वं सर्वस्याभ्यासस्य माभूत् किन्तु अन्त्यस्यैव स्यात् इत्यत आह । अनभ्यासविकार इति । ४ सत्यन्यस्मिन् यस्य पूर्वो नास्ति स आदिः । सत्यन्यस्मिन्यस्य परो नास्ति स अन्त इति लोके प्रसिद्धम्। तदुभयमेकस्मिन्नसहाये न सम्भवतीति तत्राद्यन्तव्यपदिष्टानि कार्याणि न स्युरतोऽयमतिदेश आरभ्यते ।

मेतदोरन्वादेशे । किंचित्कार्यं विधातुमुपात्तस्य कार्य्यान्तरं विधातुं पुनरुपादानमन्वादेशः। यथा अनेन व्याकरणमधीतम्। एनं छन्दोऽध्यापयेति। अनयोः पवित्रं कुलम्। एनयोः प्रभूतं स्वमिति। एनम्। एनौ। एनान्। एनेन। एनयोः २। राजा। **न ङिसम्बुद्ध्योः ।८।२।८।** नस्य लोपो न ङौ सम्बुद्धौ च। हेराजन्। (ङावुत्तरपदे प्रतिषेधः) ब्रह्मनिष्ठः। राजानौ। राजानः। राजानम्। राजानौ। जञोर्ज्ञः। राज्ञः। **नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति ।८।२।२।** सुब्विधौ स्वरविधौ संज्ञाविधौ कृति तुग्विधौ च नलोपोऽसिद्धो नान्यत्र। राजाश्व इत्यादौ। इत्यसिद्धत्वादात्वमेत्वमैस्त्वञ्च न। राजभ्याम्। राजभिः। राजभ्यः। राज्ञि। राजनि। यज्वा। यज्वानौ। यज्वानः। **न संयोगाद्वमन्तात्।६।४।१३७।** वमान्तसंयोगादनोकारस्य लोपो न। यज्वनः। यज्वना। यज्वभ्याम्। ब्रह्मणः। **इन्हन्पूषार्यम्णां शौ[1] ।६।४।१२।** एषां शावेवोपधाया दीर्घः। **सौ च।६।६।१३।** इन्नादीनामुपधाया दीर्घोऽसम्बुद्धौ सौ। वृत्रहा। हेवृत्रहन्। **एकाजुत्तरपदे णः ।८।४।१८।** एकाजुत्तरपदं यस्य तस्मिन्समासे पूर्वपदस्थान्निमित्तात्परस्य प्रातिपदिकान्तनुम्विभक्तिस्थस्य नस्य णत्वं स्यात्। वृत्रहणौ। वृत्रहणः। **होहन्तेर्ञ्णिन्नेषु ।८।३।२२।** ञिति णिति प्रत्यये ने च परे हन्तेर्हस्य कुत्वं स्यात्। **हन्तेः ।८।४।१२।** उपसर्गस्थान्निमित्ताद्धन्तेर्नस्य णः। प्रहण्यात्।

---

१ 'सर्वनामस्थाने' इत्यनेनैव सिद्धे नियमार्थमिदमित्याह। शावेवेति। उपधादीर्घमात्रस्यायं नियमः तेन 'अकृत्सार्वधातुकयोः' इति दीर्घो वृत्रहायत इत्यादौ प्रवर्तत एव।

अत्पूर्वस्य।८।४।२२।हन्तेरत्पूर्वस्यैव नस्य णो नान्यस्य। प्रघ्नन्ति।योग-विभागसामर्थ्यादनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति न्यायं बाधित्वा कुमतिचेति णोपि निवर्त्यते । वृत्रघ्नः । इत्यादि । एवं शार्ङ्गिन्यशस्वि-न् अर्यमन् पूषन् । **मघवा बहुलम्** ।६।४।१२८। मघवन्शब्दस्य वा तृ इत्यन्तादेशः । ऋ इत् । **उगिदचां सर्वनामस्थानेऽधातोः** ।७।१।७०। अधातोरुगितो नलोपिनोऽञ्चतेश्च नुम् स्यात्सर्वनामस्थाने । मघ-वान् । इह उपधादीर्घे कर्तव्ये संयोगान्तलोपस्यासिद्धत्वं न भवति । ब-हुलग्रहणात् । मघवन्तौ । मघवतः । मघवता । तृत्वाभावे सुटि राज-वत् । **श्वयुवमघोनामतद्धिते** ।६।४।१३३। अन्नन्तानामेषामतद्धिते परे संप्रसारणं स्यात्। मघोनः। मघवभ्यामित्यादि । एवं श्वन् युवन् । **न संप्रसारणे संप्रसारणम्** ।६।१।३७। यूनः । युवभ्यामित्यादि । अ-र्वा । हे अर्वन् । **अर्वणस्त्रसावनञः** ६।४।१२७। नञा रहितस्या-र्वन्नित्यस्य तृ इत्यन्तादेशो न तु सौ । अर्वन्तौ । अर्वतः । अर्वद्-भ्याम् । **पथिमथ्यृभुक्षामात्** ।७।१।८५। सौ । **इतोऽत्सर्वनामस्थाने**

---

१ भाष्ये तु वृत्रघ्नः स्रुघ्नः इत्यादिसिद्ध्यर्थं 'कुव्यवाये हादेशेषु प्रतिषेधो वक्त-व्यः' इत्युक्त्वा 'हन्तेरत्पूर्वस्य' इत्यत्रात्पूर्वग्रहणं नकर्तव्यं भवतीत्युक्तम् । ततश्च योगविभागोऽत्र न तत्सम्मत इति गम्यते। २ इयं च षष्ठ्यर्थे प्रथमा।तदाह।मघवन्-शब्दस्येति । ३ अधातोरिति तु अधातुभूतपूर्वस्यापि नुमर्थम्।अञ्चतिग्रहणं च धातो-श्चेदुगित्कार्यं तर्ह्यञ्चतेरेवेति नियमार्थम् ।एवं च गोमानिवाचरतीति गोमान् इत्यादौ संप्रति धातुत्वेऽपि भवत्येव नुम् । ४ क्वचिदन्यदेवेत्यर्थकादित्यर्थः । बहूनर्थान् लातीति बहुलम् । ५ थोन्थ इत्येव सिद्धे 'इतोऽत्सर्वनामस्थाने' इत्येतदृभुक्षिन्नर्थम्

।७।१।८९। पथ्यादेः । **थोन्थः** ।७।१।८७। पथिम[1]थोस्थस्य न्थादेशः सर्वनामस्थाने । पन्थाः । हेपन्थाः । पन्थानौ । पन्थानः । **भस्य टेर्लोपः** ।७।१।८८। पथ्यादेः । पथः । पथिभ्याम् । पथिभ्यः । एवं-मन्थाः । ऋभुक्षाः । **ष्णान्ता[2] षट्** ।१।१।२४। षान्ता नान्ता च संख्या षट्संज्ञा स्यात् । पञ्च २। पञ्चभिः २। षट्चतुर्भ्यश्चेति नुट् । **नोप[3]धायाः** ।६।४।७। नान्तस्योपधाया दीर्घो नामि । पञ्चानाम् । पञ्चसु । **अष्टन आ विभक्तौ** ।७।२।८४। हलादौ वा[4] स्यात् । **अष्टाभ्य औश्** ।७।१।२१। कृताकारादष्टनो जश्शसोरौश्[5] । अष्टभ्य इति वक्तव्ये कृतात्वनिर्देशो जश्शसोर्विषये आत्वं ज्ञापयति । अष्टौ २। अष्टाभिः । अष्टाभ्यः २। अष्टानान् । अष्टासु । आत्वाभावे अष्ट । पञ्चवत् । **ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च** ।३।२।५९। एभ्यः क्विन् । अञ्चेः सुप्युपपदे । युजिक्रुञ्चोः केवलयोः । क्रुञ्चेर्नलोपाभावश्च निपात्यते । कनावितौ । **कृदतिङ्**।३।१।९३।अत्र धात्वधिकारे तिङ्भिन्नः प्रत्ययः कृत्संज्ञः । **वेरपृक्तस्य**।६।१।६७।लोपः । क्विन्प्रत्य[6]-

---

१. त्रयाणामनुवृत्तावपि ऋभुक्षः न्थो न भवतीत्याशयेनैतत् । २ स्त्रीलिङ्गनिर्देशः सङ्ख्यां विशेषयितुम् । ३ नलोपस्यासिद्धत्वान्नामीति दीर्घो न प्रवर्तेत इत्ययमारम्भः । ४ 'अष्टनोदीर्घात्' इतिसूत्रे दीर्घग्रहणाज्ज्ञापकात् वैकल्पिकं चेदमात्त्वमित्याशयेनाह । वा स्यादिति । ५ कृतात्वस्येदमनुकरणं नतु रायो हलीत्यादिवल्लक्षण
ाद्त्वम्) तथा सतितु उक्तज्ञापकेन तस्यवैकल्पिकत्वाल्लाघवार्थमष्टभ्य इत्येव-
दीर्घमात्रस्यार्थ । ६ क्विनः कुरित्युक्तेऽपि प्रत्ययग्रहणे तदन्तग्रहणात्क्विन्नन्तस्येत्यर्थ-
प्रवर्तेत एव । ग्रहश्रीहिलाभार्थमित्याह । क्विन्प्रत्ययो यस्मादिति ।

**यस्य कुः** ।८।३।६२। क्विन्प्रत्ययो यस्मात्तस्य कवर्गोन्तादेशः पदान्ते । ऋत्विक् । ऋत्विग् । ऋत्विग्भ्याम् । **युजेरसमासे** ।७।१।७१। सर्वनामस्थाने नुम् । सुलोपः । संयोगान्तस्य लोपः । कुत्वेन नस्य ङः । युङ् । युञ्जौ । युञ्जः । युग्भ्याम् । असमासे किम् । सुयुग् । **चोः कुः** ।८।२।३०। चवर्गस्य कवर्गः स्याज्झलि पदान्ते च । सुयुक् । सुयुजौ । सुयुजः । सुयुग्भ्याम् । खन् । खञ्जौ । खञ्जः । खन्भ्याम् । **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** ।८।२।३६। झलि पदान्ते च । जश्त्वचर्त्वे । राट् । राड् । राजौ । राजः । राड्भ्याम् । एवम् विभ्राट् । देवेट् । विश्वसृट् । परिमृट् । '**परौ व्रजेः षः पदान्ते**' । परावुपपदे व्रजेः क्विप् दीर्घश्च पदान्ते षत्वमपि । परित्यज्य सर्वं व्रजतीति परिव्राट् । परिव्राजौ । **विश्वस्य वसुराटोः** ।६।३।१२८। विश्वस्य दीर्घः स्याद्वसौ राट्शब्दे च परे । राडिति पदान्तोपलक्षणार्थम् विश्वाराट् । विश्वराजौ । विश्वाराड्भ्याम् । **स्कोः संयोगाद्योरन्ते च**। ८।२०।२९। पदान्ते झलि च परे यः संयोगस्तदाद्योः सकारककारयोर्लोपः । भृट् २। सस्य श्चुत्वेन शः । झलां जश्झशीति शस्य जः । भृज्जौ । भृज्जः । भृड्भ्याम् । त्यदाद्यत्वं पररुपत्वम् । **तदोः सः सावनन्त्ययोः** ।७।२।१०६। त्यदादीनां तकारदकारयोः सः स्यात्सौ । स्यः । त्यौ । त्ये । सः । तौ । ते । यः । यौ । ये । एषः । एतौ । एते । एनम् । एनौ । एनान् । एनेन । एनयोः । **ङेप्रथमयोरम्** ।७।१। २८। युष्मदस्मद्भ्यां परस्य ङेइत्येतस्य प्रथमाद्वितीययोश्चामादेशः ।

**त्वाहौ सौ** ।७।२।९४। अनयोर्मपर्य्यन्तस्य । **शेषे**[२] **लोपः** ।७।२।९०। अनयोष्टिलोपः। त्वम् । अहम् । **युवावौ द्विवचने** ।७।२।९२। द्वयोरुक्तावनयोर्मपर्यन्तस्य युवावौस्तो विभक्तौ । **प्रथमायाश्च द्विवचने भाषायाम्** ।७।२।८८। औङ्येतयोरात्वं लोके युवाम् । आवाम् । **यूयवयौ जसि** ।७।२।९३। अनयोर्मपर्यन्तस्य । यूयम् । वयम् । **त्वमावेकवचने** ।७।२।९७। एकस्योक्तावनयोर्मपर्यन्तस्य त्वमौ स्तो विभक्तौ । **द्वितीयायां च** ।७।२।८७। अनयोरात्स्यात् । त्वाम् । माम्। **शसो न** ।७।१।२९। आभ्यां शसो नः। अमोऽपवादः । 'आदेः परस्य' संयोगान्तलोपः । युष्मान् । अस्मान्। **योऽचि** ।७।२।८९। अनयोर्यादेशोऽनादेशेऽजादौ । विभक्तौ । त्वया । मया । **युष्मदस्मदोरनादेशे** ।७।२।८६। अनयोरात्स्यादनादेशे हलादौ विभक्तौ । युवाभ्याम् । आवाभ्याम् । युष्माभिः । अस्माभिः । **तुभ्यमह्यौ ङयि** ।७।२।९५। अनयोर्मपर्य्यन्तस्य । टिलोपः । तुभ्यम् । मह्यम् । **भ्यसोऽभ्यम्**।७।१। ३०।आभ्यां परस्य । युष्मभ्यम्। अस्मभ्यम्। **एकवचनस्यच**।७।१।३२। आभ्यां ङसेरत्। त्वत् । मत् । **पञ्चम्या अत्** ।७।१।३१। आभ्यां भ्यसः। युष्मत् । अस्मत् । **तवममौ ङसि** ।७।२।९६। अनयोर्मपर्यन्तस्य। **युष्मदस्मद्भ्यां ङसोऽश्** ।७।१।२७। तव। मम। युवयोः २।

---

१ एतत्पूर्वं 'मपर्यन्तस्य' इत्यधिकारस्तदाह । मपर्यन्तस्येति । २ उक्तादन्यः शेषस्तथाच आत्वंयत्त्वं च प्रागुक्तं तद्विषयादन्यविभक्तिरितिशेषशब्दार्थः । एवं च तद्विभक्तिनिमित्तभिन्नविभक्तौ परतो युष्मदस्मदोरन्त्यलोपइत्यर्थः । एतदेवाभिप्रेत्याह अनयोष्टिलोपइति ।

आवयोः । **साम आकम्** ।७।१।३३। आभ्यां साम आकम् । युष्माकम् । अस्माकम् । त्वयि । मयि । युष्मासु । अस्मासु **युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ** ।८।१।२०। पदात्परयो रपादादौ स्थितयोः षष्ठ्यादिविशिष्टयोर्वान्नावौ । **बहुवचनस्य वस्नसौ** ८।१।२१। उक्तविधयोरनयोः षष्ठ्यादि बहुवचनान्तयोर्वस्नसौ स्तः । **तेमयावेकवचनस्य** ।८।१।२२। उक्तविधयोरनयोः षष्ठीचतुर्थ्येकवचनान्तयोस्ते मे एतौ स्तः । **त्वामौ द्वितीयायाः** ।८।१।२३। उक्तविधयोर्द्वितीयैकवचनान्तयोस्त्वामौ स्तः । श्रीशस्त्वाऽवतु माऽपीह दत्तात्ते मेऽपि शर्म सः । स्वामी ते मेऽपि स हरिः पातु वामपि नौ विभुः । सुखं वान्नौ ददात्वीशः पतिर्वामपि नौ हरिः । सोऽव्याद्वो नः शिवं वो नो दद्यात्सेव्योऽत्र वः स नः ।२। ( एकवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः )। एकतिङ् वाक्यम् । तेनेह न । ओदनं पच तव भविष्यति । इह तु स्यादेव शालीनां ते ओदनं दास्यामि । ( एते वान्नावादय आदेशा अनन्वादेशे वा वक्तव्याः ) । अन्वादेशे तु नित्यं स्युः । धाता ते भक्तोऽस्ति । तव भक्तोऽस्तीति वा । तस्मै ते नम इत्येव । **न चवाहाहैवयुक्ते** । ८।१।२४। चादिपञ्चकयोगे नैते आदेशाः स्युः। हरिस्त्वां मां च रक्षतु । कथं त्वां मां वा न रक्षेदित्यादि।

---

१ इह शेषे लोपेऽकारान्तत्वादामि सर्वनाम्न इत्यनेनाकमः सुट् स्यात् स माभूत् तदर्थं साम इति ससुट्कनिर्देशः । २ एतत्पूर्वं 'पदस्य' 'पदात्' 'अनुदात्तं सर्वमपादादौ' इत्येतत्सूत्रत्रयाधिकारः । तदाह । पदात्परयोरित्यादि । ३ अनुदात्तः ।

**पश्यार्थैश्चानालोचने** ।८।१।२५। अचाक्षुषज्ञानार्थैर्धातुभिर्योगे नैते आदेशाः स्युः। चेतसा त्वां समीक्षते। आलोचने तु भक्तस्त्वा पश्यति चक्षुषा। **सपूर्वायाः प्रथमाया विभाषा** ।८।१।२६। विद्यमानपूर्वात्प्रथमान्तादन्वादेशेऽप्येते आदेशाः[१] स्युः। भक्तस्त्वमप्यहं तेन हरिस्त्वां त्रायते समाम्। त्वामेति वा। **सामन्त्रितम्** ।२।३।४८। सम्बोधने या प्रथमा तदन्तमामन्त्रितसंज्ञं स्यात्। **आमन्त्रितं पूर्वमविद्यमानवत्** ।८।१।२४। अग्ने तव। देवास्मान्पाहि। **नामन्त्रिते समानाधिकरणे सामान्यवचनम्** ।८।१।७३। विशेष्यं समानाधिकरणे विशेषणे आमन्त्रिते परे नाविद्यमानवत्। हरे दयालो नः पाहि। सुपात्। सुपाद्। सुपादौ। **पादः पत्** ।६।४।१३०। पाच्छब्दान्तं यदङ्गं भं तदवयवस्य पाच्छब्दस्य पदादेशः। सुपदः। सुपाद्भ्याम्। अग्निमत्। अग्निमद्। अग्निमथौ। अग्निमद्भ्याम्। **अनिदितां हल उपधायाः क्ङिति** ।६।४।२४। हलन्तानामनिदितामङ्गानामुपधाया नस्य लोपः किति ङिति च। उगिदचामिति नुम्। संयोगान्तस्य लोपः। नस्य कुत्वेन ङः। प्राङ्। प्राञ्चौ। प्राञ्चः। **अचः** ।६।४।१३८। लुप्तनकारस्याञ्चतेर्भस्याकारस्य लोपः। **चौ** ।६।३।१३८। लुप्ताकारनकारेऽञ्चतौ परे पूर्वस्याणो दीर्घः। प्राचः। प्राचा। प्राग्भ्याम्। प्रत्यङ्। प्रत्यञ्चौ। प्रतीचः। प्रत्यग्भ्याम्। उदङ्। उदञ्चौ। **उद ईत्** ।६।४।१३९। उच्छ-

---

१ सहशब्दोऽत्र विद्यमानवचनः। 'तेन सहेति'- सूत्रेण समासः तत्र तुल्ययोगवचनं तु प्रायिकम्। 'वोपसर्जनस्य' इति सादेशः। अत आह। विद्यमानपूर्वादिति।

न्द्रात्परस्य लुप्तनकारस्याञ्चतेर्भस्याकारस्य ईत् । उदीचः । उदीचा । उदग्भ्याम् । **समः समि** ।६।३।९६। वप्रत्ययान्तेऽञ्चतौ परे । सम्यङ् । सम्यञ्चौ । समीचः । सम्यग्भ्याम् । **सहस्य सध्रिः** ।६।३।९५। तथा॥ सध्र्यङ् । सध्र्यञ्चौ । सध्रीचः । सध्र्यग्भ्याम् । **तिरसस्तिर्यलोपे** ।६।३।९४। अलुप्ताकारेऽञ्चतौ वप्रत्ययान्ते तिरसस्तिर्यादेशः । तिर्यङ् । तिर्यञ्चौ । तिरश्चः । तिरश्चा । तिर्यग्भ्याम् । **नाञ्चेः पूजायाम्** ।६।४।३०। पूजार्थस्याञ्चतेरुपधाया नस्य लोपो न । प्राङ् । प्राञ्चौ । नलोपाभावादल्लोपो न । प्राञ्चः । प्राङ्भ्याम् । प्राङ्षु । प्राङ्क्षु । एवं पूजार्थे प्रत्यङ्ङादयः । क्रुङ् । क्रुञ्चौ । क्रुञ्चः । क्रुङ्भ्याम् । पयोमुक् । पयोमुग् । पयोमुचौ । पयोमुचः । पयोमुग्भ्याम् । महः पूजायाम् । 'वर्त्तमाने पृषन्महद्बृहज्जगच्छतृवच्च' । एते निपात्यन्ते । शतृवच्चैषां कार्यं स्यात् । उगित्वान्नुम् । **सान्तमहतः संयोगस्य** ।६।४।१०। सान्तसंयोगस्य महतश्च यो नकारस्तस्योपधाया दीर्घोऽसम्बुद्धौ सर्वनामस्थाने । महान् । महान्तौ । महान्तः । हे महन् । महतः । महद्भ्याम् । **अत्वसन्तस्य चाधातोः** ।६।४।१४। अत्वन्तस्योपधाया दीर्घो धातुभिन्नासन्तस्य चासम्बुद्धौ सौ । धीमान् । धीमन्तौ । धीमन्तः । हे धीमन्॥

---

१ पृषुसेचने महपूजायाम् बृहवृद्धौ गम्लृगतौ एते अतिप्रत्ययान्ताः तत्र महेः कर्मणि प्रत्ययः अत एव महानित्ययम् मह्यते ( पूज्यते ) इतिविग्रहः बृहेर्वृद्ध्यभावः गमेर्जगादेशश्च निपात्यते । २ इह अधातोरिति योगो विभज्यते तत्सामर्थ्यादनन्तरस्यासन्तस्यैव प्रतिषेधः नात्वन्तस्येति तदेतदाह धातुभिन्नासन्तस्यचेति ।

शसादौ महद्वत् । भातेर्डवतुः । डित्वसामर्थ्यादभस्यापि टेर्लोपः । भवान् । भवन्तौ । शत्रन्तस्य तु भवन् । **उभे अभ्यस्तम्** ।६।१।५। षाष्ठद्वित्वप्रकरणे ये द्वे विहिते ते उभे संमुदिते अभ्यस्तसंज्ञे स्तः । **नाभ्यस्ताच्छतुः** ।७।१।७८। नुम्न । ददत् । ददतौ । **जक्षित्यादयः षट्** ।६।१।६। षड्धातवोऽन्येजक्षितिश्च सप्तम एतेऽभ्यस्तसंज्ञाः स्युः । जक्षत् । जक्षतौ । जक्षतः । एवं जाग्रत् । दरिद्रत् । शासत् । चकासत् । दीधीङ् दीप्तिदेवनयोः । वेवीङ् वेतिनातुल्ये । एतौ छान्दसौ । दीध्यत् । वेव्यत् । जक्षि जागृ दरिद्रा शास् दीधीङ् वेवीङ् चकास्तथा । अभ्यस्तसंज्ञा विज्ञेया धातवो मुनिभाषिताः । १ । गुप् । गुब् । गुपौ । गुपः । गुब्भ्याम् । **त्यदादिषु दृशोऽनालोचने कञ्च** ।३।२।६०। त्यदादिषूपपदेषु अज्ञानार्थाद्दृशेर्धातोः कञ् स्यात् चात्क्विन् । **आ सर्वनाम्नः** ६।३।९१। दृग्दृशवतुषु । तादृक् २ । तादृशौ । तादृशः तादृग्भ्याम् । व्रश्चेति षः जस्त्वचर्त्वे । विट् २ । विशौ । विशः । विड्भ्याम् । **नशेर्वा** ।८।२।६३। नशेः कवर्गोऽन्तादेशोवा पदान्ते । नक् । नग् । नट् । नड् नशौ । नशः । नड्भ्याम् नग्भ्याम् । **स्पृशो नुदके क्विन्** ।३।२।५६। अनुदके सुप्युपपदे स्पृशेः क्विन् । घृतस्पृक् २ । घृतस्पृशौ । घृतस्पृशः । दधृक् २ । दधृषौ । दधृषः । दधृग्भ्याम् । रत्नमुट् २ । रत्नमुषौ । रत्नमुषः । रत्नमुड्भ्याम् । षट् २ । षड्भिः । षड्भ्यः । ष-

---

१ द्वे इत्यनुवृत्त्यैव सिद्धे उभेग्रहणं समुदायप्रतिपत्त्यर्थं तदाह । उभेसमुदिते इति । २ अत्र अतद्गुणसंविज्ञानो बहुव्रीहिरित्यत आह । षड्धातवोऽन्ये जक्षितिश्च सप्तम इति ।

णाम् । षट्त्सु । षट्सु । यत्तु प्राचा षण्णां षड्णामित्युदाहृतं तत्प्रामादिकमेव । प्रत्यये नित्यवचनात् । **र्वोरुपधाया दीर्घ इकः** ।८।२।७६। रेफवान्तस्य धातोरुपधाया इको दीर्घः पदान्ते । पिपठीः । पिपठिषौ । पिपठिषः । पिपठीर्भ्याम् । **नुम्विसर्ज्जनीयशर्व्यवायेऽपि** ।८।३।७६। एतैः प्रत्येकं व्यवधानेपीणकुभ्याम् परस्य सस्य मूर्द्धन्यादेशः । ष्टुत्वेन पूर्वस्य षः । पिपठीष्षु । पिपठीःषु । चिकीः । चिकीर्षौ । चिकीर्षु । विद्वान् । विद्वांसौ । हे विद्वन् । **वसोः संप्रसारणम्** ।४।१३१। वस्वन्तस्य भस्य संप्रसारणम् । विदुषः । वसुस्रंस्विति दत्वम् । विद्वद्भ्याम् । **पुंसोऽसुङ्** ।१।१।८९। सर्वनामस्थाने । पुमान् । हे पुमन् । पुमांसौ । पुंसः । पुंभ्याम् । पुंसु । ऋदुशनेत्यनङ् । उशना । उशनसौ । ( अस्य सम्बुद्धौ वाऽनङ् नलोपश्च वा वाच्यः ) हेउशन । हेउशनन् । हे उशनः । उशनोभ्याम् । अनेहा । अनेहसौ । अनेहसः । हे अनेहः । वेधाः । वेधसौ । वेधसः । वेधोभ्याम् । **अदस औ सुलोपश्च** ।७।२।१०७। सौ परे । तदोरिति सः । असौ । ( **औत्वप्रतिषेधः साकच्कस्य वा वक्तव्यः** ) सादुत्वं च । असकौ । असुकः । त्यदाद्यत्वम्पररूत्वम् । वृद्धिः । **अदसोसेर्दादुदोमः** ।८।२।८०। अदसोऽसान्तस्य दात्परस्य उदूतौ स्तो दस्य मश्च । आन्तरतम्याद्ध्रस्वस्य उः । दीर्घस्यऊः । अमू । जसःशी । **एत ईद्बहुवचने** ।८।३।८०। अदसोदात्परस्यैत ईद्दस्य चमो बह्वर्थोक्तौ । अमी । पूर्वत्रासिद्धमिति विभक्तिकार्यं प्राक् पश्चादुत्वमत्वे । अमुम् । अमून् । मुत्वे

कृते। घिसंज्ञायां नाभावः। **न मु ने** ।८।२।३। नाभावे कर्तव्ये कृते च मुभावो नासिद्धः। अमुना। अमूभ्याम्। अमीभिः। अमुष्मै। अमीभ्यः। अमुष्मात्। अमुष्य। अमुयोः। अमीषाम्। अमुष्मिन्। अमुयोः। अमीषु॥ इतिहलन्ताः पुँल्लिङ्गाः।

**नहो धः** ।८।२।३४। झलि पदान्ते च। **नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ** ।६।३।११६। क्विबन्तेष्वेषु पूर्वस्याणो दीर्घः। उपानत्। उपानहौ। उपानहः। उपानद्भ्याम्। उपानत्सु क्विन्नन्तत्वात्कुत्वेन हस्य घः। उष्णिक् २। उष्णिहौ। उष्णिग्भ्याम्। द्यौः। दिवः। द्युभ्याम्। गीः। गिरौ। गिरः। एवं पूः। चतस्रः। चतसृभिः। चतसृभ्यः। चतसृणाम्। चतसृषु। का। के। काः। सर्वावत्। **यः सौ** ।७।२।११०। इदमो दस्य। 'इदमोमः'। इयम्। त्यदाद्यत्वम्। टाप्। दश्चेतिमः। इमे। इमाः। इमाम्। इमे। इमाः। अनया। हलिलोपः। आभ्याम्। आभिः। अस्यै। अस्याः२। अनयोः २। आसाम्। अस्याम्। आसु। स्रक् २। स्रजौ स्रजः। स्रग्भ्याम्। त्यदाद्यत्वे टाप्। स्या त्ये त्याः। एवम् तद्। यद्। एतद्। वाक् २। वाचौ। वाचः। वाग्भ्याम् ३। अप्शब्दो नित्यं बहुवचनान्तः। अप्तृन्निति दीर्घः। आपः। अपः। **अपो भि** ।७।४।४८।

---

१ अत्र ने इत्यावर्त्यते एकत्र विषयसप्तमी अन्यत्र च सति सप्तमी तदाह। कर्तव्येकृते चेति। विषयसप्तम्याः फलं तु अमुनेत्यत्र नादेशेकर्तव्ये मुत्वं सिद्धम्। सति सप्तम्याः फलं तु नादेशानन्तरं मुत्वस्यासिद्धत्वात्सुपिचेति दीर्घो न भवति।

अपस्तकारो भादौ प्रत्यये । अद्भिः । अद्भ्यः । अपाम् । अप्सु । दिक् । दिशौ । दिशः । दिग्भ्याम् । त्यदादिष्विति दृशेः क्विन् विधानादन्यत्रापि कुत्वम् । दृक् । दृशौ । दृशः । दृग्भ्याम् । त्विट् । त्विषौ । त्विषः । त्विड्भ्याम् । ससजुषोरिति रुत्वम् । सजूः । सजुषौ । सजूर्भ्याम् । आशीः । आशिषौ । आशीर्भ्याम् । असौ । उत्वमत्वे । अमू । अमूः । अमुया । अमूभ्याम् । अमूभिः । अमुष्यै । अमूभ्यः। अमुष्याः २। अमुयोः २॥ अमूषाम् । अमुष्याम् । अमूषु ॥

**इतिहलन्ताः स्त्रीलिङ्गाः । श्रीः ।**

स्वमोर्लुक् । दत्वम् । स्वनडुत् । स्वनडुही । चतुरनडुहोरित्याम् । स्वनड्वांहि । पुनस्तद्वत् । शेषं पुंवत् । वाः । वारी । वारि । वारा । वार्भ्याम् । चत्वारि । किम् । के । कानि । इदम् । इमे । इमानि । (अन्वादेशे नपुंसके एनद्वक्तव्यः) । एनत् । एने । एनानि । एनेन । एनयोः २। व्योम । व्योम्नी । व्योमनी । व्योमानि । ब्रह्म । ( संबुद्धौ नपुंसकानां नलोपो वा वाच्यः ) । हे ब्रह्म । हे ब्रह्मन् । हे ब्रह्मणी । हे ब्रह्माणि । 'रोः सुपि' । अहः । 'विभाषा ङिश्योः' । अह्नी । अहनी । अहानि । **अहन्** ।८।२।६८४। अहन्नित्यस्य रुः पदान्ते । अहोभ्याम् । दण्डि । दण्डिनी । दण्डीनि । सुपथि । टिलोपः । सुपथी । सुपन्थानि । ऊर्क् । ऊर्जी । ऊर्न्जि । नरजानां संयोगः । त्यत् । त्ये । त्यानि । तत् । ते । तानि । यत् । ये । यानि । एतत् । एते । एतानि । अवङ् स्फोटायनस्ये-

ति अवङ् । गवाक्शब्दस्य रूपाणि क्लीबेऽर्चागतिभेदतः । असंध्यवङ् पूर्वरूपैर्नवाधिकशतं मतम् ॥ स्वम्सुप्सु नव षड् भादौ षट्के स्युस्त्रीणि जश्शसोः । चत्वारि शेषे दशके रूपाणीति विभावय ।२।१०१। गवाक् २ । गोची । गवाञ्चि । पुनस्तद्वत् । गोचा । गवाग्भ्याम् । शकृत् । शकृती शकृन्ति । ददती । **वा नपुंसकस्य** ।७।१।७९। अभ्यस्तात्परो यः शतुरवयवस्तदन्तस्य क्लीबस्य नुम्वा स्यात्सर्वनामस्थाने । ददन्ति । तुदत् । **आच्छीनद्योर्नुम्** ।७।१।८०। अवर्णान्तादङ्गात्परो यः शतुरवयवस्तदन्तस्य नुम्वा शीनद्योः । तुदन्ती । तुदती भात् । भान्ती । भाती । भान्ति । पचत् । **शप्श्यनोर्नित्यम्** ।७।२।८१। शप्श्यनोरात्परो यः शतुरवयवस्तदन्तस्य नुम् । शीनद्योः । पचन्ती । दीव्यत् । दीव्यन्ती । धनुः । धनुषी । सान्तेति दीर्घः । नुम्विसर्जनीयेतिषः । धनूंषि । धनुर्भ्याम् । एवं चक्षुर्हविरादयः । पयः । पयसी । पयांसि । पयोभ्याम् । सुपुम् । सुपुंसी । सुपुमांसि । अदः । विभक्तिकार्यम् । उत्वमत्वे । अमू । अमूनि । शेषं पुंवत् ॥ **इति हलन्ता नपुंसकलिङ्गाः ॥**

**स्वरादिनिपातमव्ययम्** ।७।१।३७। स्वर् । अन्तर् । प्रातर् ।

---

१ जायन्ते नव सौ तथामि च नव भ्याम्भिस्भ्यसां सङ्गमे षट् सङ्ख्यानि तथैव सुप्यथ जसि त्रीण्येव तद्वच्छसि । चत्वार्यन्य वचःसु कस्य विबुधाः शब्दस्य रूपाणि तत् जानन्तु प्रतिभास्ति चेन्निगदितुं षाण्मासिकोत्रावधिः ॥ १ ॥ इति कस्यांचित्सभायां केनचित्पण्डितेन कृतस्याक्षेपस्योत्तरमिदम् ।

पुनर् । सनुतर् । उच्चैस् । नीचैस् । शनैस् । ऋधक् । ऋते । युगपत् । आरात् । पृथक् । ह्यस् । श्वस् । दिवा । रात्रौ । सायम् । चिरम् । मनाक् । ईषत् । जोषम् । तूष्णीम् । बहिस् । अवस् । समया । निकषा । स्वयम् । वृथा । नक्तम् । नञ् । हेतौ । इद्धा । अद्धा । सामि । वत् । ब्राह्मणवत् । क्षत्रियवत् । सना । उपधा । सनत् । सनात् । तिरस् । अन्तरा । अन्तरेण । ज्योक् । कम् । शम् । सहसा । विना । नाना । स्वस्ति । स्वाहा । स्वधा । अलम् । वषट् । श्रौषट् । वौषट् । अन्यत् । अस्ति । उपांशु । क्षमा । विहायसा । दोषा । मृषा । मिथ्या । मुधा । पुरा । मिथो । मिथस् । प्रायस् । मुहुस् । प्रवाहुकम् । प्रवाहिका । आर्यहलम् । अभीक्ष्णम् । साकम् । सार्द्धम् । नमस् । हिरुक् । धिक् । अथ । अम् । आम् । प्रतान् । प्रशान् । मा । माङ् । आकृतिगणोयम् । च । वा । ह । अह । एव । एवम् । नूनम् । शश्वत् । युगपत् । भूयस् । कूपत् । कुवित् । नेत् । चेत् । चण् । यत्र । कच्चित् । नह । हन्त । माकिम् । माकिः । नकिम् । नकिः । माङ् । नञ् । यावत् । तावत् । त्वै । द्वै । न्वै । रै । श्रौषट्[२] । वौषट् । स्वाहा । स्वधा । तुम् । तथाहि । खलु ।

---

१ तेनान्येऽपि ज्ञेयाः । तथाहि । कामम् । प्रकामम् । भूयः । साम्प्रतम् । परम् । साक्षात् । साचि । सत्यम् । मङ्क्षु । आशु । संवत् । अवश्यम् । उषा । ओम् । भूः । भुवः । झटिति । झक् । तरसा । सुष्ठु । कुष्ठु । सु । अदस् । कु । अञ्जसा । मिथस् । अस्तम् । स्थाने । वरम् । मुहि । वदि । इत्यादि । २ एतेषामुभयत्र पाठः स्वरभेदार्थः ।

किल । अथ । सुष्ठु । स्म । आदह । उपसर्गविभक्तिस्वरप्रतिरूपकाश्च । अवदत्तम् । अहंयुः । अस्तिक्षीरा । अ । आ । इ । ई । उ । ऊ । ए । ऐ । ओ । औ । पशु । शुकम् । यथा । कथाच । पाट् । प्याट् । अङ्ग । है । हे । भोः । अये । घ । विषु । एकपदे । पत् । आतः । चादिरप्याकृतिगणः । **तद्धितश्चासर्वविभक्तिः ।१।१।३८।** यस्मात्सर्वा विभक्तिर्नोत्पद्यते स तद्धितान्तोऽव्ययं स्यात् । परिगणनं कर्तव्यम् । तसिलादयः प्राक् पाशपः । शस्प्रभृतयः प्राक् समासान्तेभ्यः । अम् । आम् । कृत्वोर्थाः । तसिवती । नानाञौ । इति । एतदन्तमव्ययम् । अत इत्यादि । **कृन्मेजन्तः ।१।१।३९।** कृद्यो मान्त एजन्तश्च तदन्तमव्ययम् । स्मारंस्मारम्[1] । जीवसे[2] । पिबध्यै । **क्त्वातोसुन्कसुनः ।१।१।४०।** एतदन्तमव्ययम् । कृत्वा[3] । उदेतोः । विसृपः । **अव्ययीभावश्च ।१।१।४१।** अधिहरि । **अव्ययादाप्सुपः ।२।४।८२।** अव्ययाद्विहितस्यापः सुपश्च लुक् । तत्र शालायाम् । विहितविशेषणान्नेह । अत्युच्चैसौ । अव्ययसंज्ञायां यद्यपि तदन्तविधिरस्ति तथापि न गौणे । आपग्रहणं व्यर्थम् । अव्ययस्यालिङ्गत्वात् । तथा

---

१ 'आभीक्ष्ण्येणमुल्च' इत्यनेनणमुल् 'अचोञ्णिति' इत्यनेनवृद्धिःरपरत्वम् 'नित्यवीप्सयोः' इतिद्वित्वम् । २ 'तुमर्थेसेसेनसेऽसेन्' इत्यादिना असेप्रत्ययः । पिबध्यैइत्यत्रच शध्यैप्रत्ययः । 'लशक्वतद्धिते' इत्यनेनेत्संज्ञा । 'पाघ्राध्मा' इत्यादिना पिबादेशः । ३ 'समानकर्तृ-' इत्यादिनाक्त्वा । उदेतोरित्यत्रचोत्पूर्वादिण् गतावित्यस्मात् 'भावलक्षणस्थेण्कृञ्वदि' इत्यादिना तोसुन् । विसृप इत्यत्रच 'सृपितृदोः कसुन्' इत्यनेन कसुनप्रत्ययः ।

च श्रुतिः। सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु। वचनेषु च सर्वेषु यन्नव्येति तदव्ययम्॥ १॥ वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः। आपं चैव हलन्तानां यथा वाचा निशा दिशा॥ २॥ अवगाहः वगाहः। अपिधानम्। पिधानम्। ॥ इत्यव्ययानि ॥

इति सुबन्तं समाप्तम्॥ ॥



# ॥ अथ तिङन्तं प्रारभ्यते ॥



**श्रीगणेशाय नमः॥** लट् । लिट् । लुट् । लृट् । लेट् । लोट् । लङ्। लिङ्। लुङ् । लृङ् । एषु पञ्चमो लकारश्छन्दोमात्रगोचरः। **लः कर्मणि च भावेचाकर्मकेभ्यः** ।३।४।६९। लकाराः सकर्मकेभ्यः कर्मणि कर्तरि च स्युरकर्मकेभ्यो भावे कर्तरि च । **वर्तमाने लट्** ।३।२।१२३। वर्तमानक्रियावृत्तेर्धातोर्लट् स्यात् । अटाविती । उच्चारणसामर्थ्याल्लस्य नेत्वम् । भू सत्तायाम् कर्तृविवक्षायम् भू ल् इति स्थिते । **तिप् तस् झि सिप् थस् थ मिव्वस्मस्तातां झ थासाथां ध्वमिड् वहि महिङ्**।३।४। ७८ । एतेऽष्टादश लादेशाः स्युः । **लः परस्मैपदम्** ।१।४।९९। लादेशाः परस्मैपदसंज्ञाः स्युः । **तङानावात्मनेपदम्** ।१।४।१००। तङ् प्रत्याहारः शानच्कनचौ चैतत्संज्ञाः स्युः । पूर्वसंज्ञापवादः । **अनुदात्तङित आत्मने पदम्** ।१।३।१२। अनुदात्तेत उपदेशे यो ङित्तदन्ताच्च धातोर्लस्य स्थाने आत्मनेपदं स्यात्। **स्वरितञितः कर्त्रभिप्राये क्रियाफले** ।१।३।७२। स्वरितेतो ञितश्च धातोरात्मनेपदं स्यात् । कर्तृगा-

---

१ अकार उच्चारणार्थ इति नोक्तम् । लिडादिवैलक्षण्यसंपादनाय तस्यावश्यं वक्तव्यत्वात् । २ अस्य पूर्वं 'लस्य' इत्यधिकारस्तदाह । एतेऽष्टादश लादेशा इति । ३ अनुदात्तश्च ङ्च अनुदात्तङौ तौ इतौ यस्य स अनुदात्तङित् । द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकं सम्बध्यते। तत्रानुदात्तांशे तदन्तविधेः फलाभावादंशान्तरे एव तदन्तग्रहणं उपदेशपदमपि ङिदंशे एव संबध्यते अव्यभिचारात्तदाह । अनुदात्तेत उपदेशे यो ङित्तदन्ताच्चेति ।

मिनि क्रियाफले। **शेषात्कर्तरि परस्मैपदम् ।१।३।७८।** आत्मनेपद-निमित्तहीनाद्धातोः कर्तरि लस्य परस्मैपदं स्यात्। **तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः ।१।४।१०१।** तिङ उभयोः पदयोस्त्रयस्त्रिकाः क्रमादेतत्संज्ञाः स्युः। **तान्येकवचनद्विवचनबहुवचनान्येकशः ।१।१।१०२।** लब्धप्रथमादिसंज्ञानि तिङस्त्रीणि त्रीणि प्रत्येकमेकवचना-दिसंज्ञानि स्युः। **युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः ।१।४।१०५।** तिङ्वाच्यकारकवाचिनि युष्मदि प्रयुज्यमानेऽप्रयुज्य-माने च मध्यमः। **अस्मद्युत्तमः ।१।४।१०७।** तथाभूतेऽस्मद्युत्तमः। **शेषे प्रथमः ।१।४।१०८।** मध्यमोत्तमयोरविषये प्रथमः स्यात्। भू ति इति जाते। **तिङ्शित्सार्वधातुकम् ।१।४।११३।** तिङः शितश्च धात्वधिकारोक्ता एतत्संज्ञाः स्युः। **कर्तरि शप् ।३।१।६८।** कर्त्रर्थे सार्वधातुके परे धातोः शप्। **सार्वधातुकार्द्धधातुकयोः ।७।३।८४।** अनयोः परयोरिगन्ताङ्गस्य गुणः स्यात्। अवादेशः। भवति। भवतः। **झोन्तः ।७।१।३।** प्रत्ययावयवस्य झस्यान्तादेशः। अतो गुणे। भव-न्ति। भवसि। भवथः। भवथ। **अतो दीर्घो यञि ।७।३।१०१।** अतोऽङ्गस्य दीर्घो यञादौ सार्वधातुके। भवामि। भवावः। भवामः। स भवति। तौ भवतः। ते भवन्ति। त्वं भवसि। युवां भवथः। यूयं

---

१ उपोच्चारितं, समीपोच्चारितं परमुपपदम्। सामानाधिकरण्यमेकार्थबोधकत्वं तच्च पूर्वपरसम्बन्धात्तिङैव। तिङैकार्थबोधकमुपपदं तु कारकमेव संभवति। तदाह। तिङ्वाच्यकारकवाचिनीति। अप्रयुज्यमान इति स्थानिनीत्यस्यार्थः।

भवथ । अहं भवामि । आवां भवावः । वयं भवामः । **शेषे विभाषाऽकखादावषान्त उपदेशे ।१।४।१८।** उपदेशे कादिखादिषान्तवर्जे गदनदादेरन्यस्मिन्धातावुपसर्गस्थान्निमित्तात्परस्य नेर्णत्वं वा स्यात् । प्रणिभवति । प्रनिभवति । **परोक्षे लिट् ।३।४।११५।** भूतानद्यतनपरोक्षार्थवृत्तेर्धातोर्लिट् स्यात् । लस्य तिबादयः । **परस्मैपदानां णलतुसुस्थलथुसणल्वमाः ।३।४।८२।** लिटस्तिबादीनां णलादयः स्युः । भु अ इति स्थिते । **भुवो वुग्लुङ्लिटोः ।६।४।८८।** भुवो वुगागमः स्यात् लुङ्लिटोरचि । **लिटि धातोरनभ्यासस्य ।६।१।८।** लिटि परेऽनभ्यासस्य धात्ववयवस्यैकाचः प्रथमस्य द्वे स्त आदिभूतादचः परस्य तु द्वितीयस्य । भूव् भूव् अ इति जाते । **पूर्वोऽभ्यासः ।६।१।४।** अत्र ये द्वे तयोः । **हलादिः शेषः ।७।४।६०।** अभ्यासस्यादिर्हल् शिष्यतेऽन्येहलो लुप्यन्ते । **ह्रस्वः ।७।४।५९।** अभ्यासस्याचः । **भवतेरः ।७।४।७३।** भवतेरभ्यासोकारस्य अः स्याल्लिटि । **अभ्यासे चर्च ।८।४।५४।** अभ्यासे झलां चरः स्युः जशश्च । झशां जशः खयां चर इति विवेकः । बभूव । बभूवतुः । बभूवुः । **लिट् च ।३।४।११५।** लिडादेशस्तिङार्द्धधातुकसंज्ञः स्यात् । **आर्द्धधातुकस्येड्वलादेः ।७।२।४५।** बभूविथ । बभूवथुः । बभूव । बभूव । बभूविव । बभूविम । **अनद्यतने लुट् ।३।३।१५।** भविष्यत्त्यनद्यतनेऽर्थे धातोर्लुट् । **स्यतासी ऌलुटोः ।३।१।४३।** धातोरेतौ स्तो ऌलुटोः परतः । शबाद्यपवादः ।

---

१ अतीताया रात्रेः पश्चार्द्धेन आगामिन्याः पूर्वार्द्धेन सहितो दिवसोऽद्यतनः तद्भिन्नोऽनद्यतनः । २ एतत्पूर्वम् 'एकाचो द्वे प्रथमस्य' 'अजादेर्द्वितीयस्य' इति सूत्रद्वयमधिकारविधायकं तस्मादयमर्थो लभ्यते ।

लृ इति लङ्लृटोर्ग्रहणम् । **आर्द्धधातुकं शेषः ।३।४।११४।** तिङ्शिद्भ्योऽन्यो धातोरिति विहितः प्रत्यय एतत्संज्ञः स्यात् । इट्। **लुटः प्रथमस्य डारौरसः ।२।४।८५।** डित्वसामर्थ्यादभस्यापि टेर्लोपः। भविता । **तासस्त्योर्लोपः ।७।४।५०।** सादौ प्रत्यये । **रि च ।७।४।५१।** रादौ प्रत्यये तथा । भवितारौ । भवितासि । भवितास्थः । भवितास्मि । भवितास्वः । भवितास्मः । **लृट् शेषे[1] च ।३।३।१३।** भविष्यदर्थाद्धातोर्लृट् क्रियार्थायां क्रियायां सत्यामसत्यां च । इट् । भविष्यति । भविष्यतः । भविष्यन्ति । भविष्यसि । भविष्यथः । भविष्यथ । भविष्यामि । भविष्यावः । भविष्यामः । **लोट् च ।३।३।१६२।** विध्यादिष्वर्थेषु धातोर्लोट् । **आशिषि लिङ्लोटौ ।३।३।१७३। एरुः ।३।४।८६।** लोट इकारस्य उः । भवतु। **तुह्योस्तातङाशिष्यन्यतरस्याम्[2] ।७।१।३५।** आशिषि तुह्योः। परत्वात्सर्वादेशः । ननु ङिच्चेत्यस्य क्वावकाश इति चेच्छृणु । अनन्यार्थङकारयुक्तानङादिष्विति गृहाण । भवतात् । **लोटो लङ्वत् ।३।४।८५।** लोटस्तामा-[3]

१ 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' इति प्रागुक्तं ततोऽन्यः शेष इत्याह । असत्यामिति सत्यामिति तु चार्थः । २ तिह्योरितितु नोक्तम् । लाघवाभावात् अन्यत्रातिप्रसङ्गवारणाय हिशब्दाश्रयणे लोट इत्यनुवर्तने वा गौरवापत्तेश्च । ३ इदं तु फलितार्थकथनं वास्तवस्तु लोटो लङ इव कार्यं स्यादित्येवार्थः । अत्राडाटौ तु नातिदिश्येते लङि परे तयोरङ्गस्य विधानात् । तथैव 'विदोलटोवा' इतिसूत्राद्वाग्रणमनुवर्त्य व्यवस्थितविभाषाश्रयणाच्च यान्तु वान्तु इत्यत्र 'लङः शाकटायनस्यैव' इति जुस् न जुह्वतु विन्दतु इत्यत्र च 'सिजभ्यस्त'–इत्यनेन च जुस् न ।

दयः सलोपश्च । **तस्थस्थमिपां तान्तन्तामः** ।३।४।१०१। ङितश्चतुर्णां तामादयः स्युः । भवताम् । भवन्तु । **सेर्ह्यपिच्च** ।३।४।८७। लोटः सेर्हिः सोऽपिच्च । **अतो हेः** ।६।४।१०५। लुक् । भव । भवतात् । भवतम् । भवत । **मेर्निः** ।३।४।८९। लोटः । **आडुत्तमस्य पिच्च** ।३।४।९२। लोडुत्तमस्याट् स पिच्च । हिन्योरुत्वन्न । इकारोच्चारणसामर्थ्यात् । भवानि । **ते प्राग्धातोः** ।१।४।८०। ते गत्युपसर्गसंज्ञका धातोः प्रागेव प्रयोक्तव्याः । **आनि[1] लोट्** ।८।४।१६। उपसर्गस्थान्निमित्तात्परस्य लोडादेशस्यानीत्यस्य नस्य णः स्यात् । प्रभवाणि । (दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्यः) । दुःस्थितिः । दुर्भवानि । (अन्तःशब्दस्याङ्किविधिणत्वेषूपसर्गत्वं वाच्यम्) अन्तर्भवाणि । **नित्यं ङितः** ।३।४।९९। सकारान्तस्य ङिदुत्तमस्य नित्यं लोपः । अलोऽन्त्यस्येति सलोपः । भवाव । भवाम । **अनद्यतने लङ्** ।३।२।१११। अनद्यतनभूतार्थवृत्तेर्धातोर्लङ् । लङ् **लुङ्लङ्लृङ्क्ष्वडुदात्तः** ।६।४।७१। एष्वङ्गस्याट् । **इतश्च** ।३।४।१००। ङितो लस्य परस्मैपदमिकारान्तं यत्तस्य लोपः । अभवत् । अभवताम् । अभवन् । अभवः । अभवतम् । अभवत । अभवम् । अभवाव । अभवाम । **विधिनिमन्त्रणा[2]-**

---

१ निलोट् इत्येव वक्तव्ये आनिग्रहणमागमशास्त्रमनित्यमिति ज्ञापनार्थम्। तेन 'सागरं तर्तुकामस्य' जप्त्वास्तोत्रमित्यादि सिद्ध्यति । २ विधिः प्रेरणम् । भृत्यादेर्निकृष्टस्य प्रवर्तनम् । निमन्त्रणं नियोगकरणम् । आवश्यके श्राद्धभोजनादौ दौहित्रादेः प्रवर्तनम् । आमन्त्रणं कामचारानुज्ञा । अधीष्टः सत्कारपूर्वको व्यापारः । प्रार्थनं याच्ञा ।

**मन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ्** ।३।३।१६१। एष्वर्थेषु धातोर्लिङ् । **यासुट् परस्मैपदेषूदात्तो ङिच्च** ।३।४।१०३। लिङः परस्मैपदानां यासुडागमो ङिच्च । ङित्वोक्तेर्ज्ञायते क्वचिदनुबन्धकार्येऽप्यनल्विधाविति प्रतिषेध इति । तेन वक्ष्यमाणेत्यत्र ङीन्न । **लिङः सलोपोऽनन्त्यस्य** ।७।२।७९। सार्वधातुकलिङोऽनन्त्यस्य सस्य लोपः । इति प्राप्ते **अतो येयः** ।७।२।८०। अतः परस्य सार्वधातुकावयवस्य यास् इत्यस्य इय् । गुणः । 'लोपो व्योर्वलि' । भवेत् । भवेताम् । **झेर्जुस्** ।३।४।१०८। लिङः । भवेयुः । भवेः । भवेतम् । भवेत । भवेयम् । भवेव । भवेम । **लिङाशिषि** ।३।४।११६। आशिषि लिङस्तिङार्द्धधातुकसंज्ञः स्यात् । **किदाशिषि**[१] ।३।४।१०४। आशिषि लिङो यासुट् कित् । स्कोरिति सलोपः । **क्ङिति च** ।१।१।५। गित् कित्ङिन्निमित्ते इग्लक्षणे गुणवृद्धी न स्तः । भूयात् । भूयास्ताम् । भूयासुः । भूयाः । भूयास्तम् । भूयास्त । भूयासम् । भूयास्व । भूयास्म । **लुङ्** ।३।२।११०। भूतार्थे धातोर्लुङ् । **माङि लुङ्** ।३।३।१७५। सर्वलकारापवादः । **स्मोत्तरे लङ् च** ।३।३।१७६। स्मोत्तरे माङि लङ् स्याल्लुङ् च । **च्लि लुङि** ।३।१।४३। शबाद्यपवादः । **च्लेः सिच्** ।३।१।४४। **गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु** २।४।७७। लुक् । गापाविहेणादेशपिबती गृह्येते । **भूसुवोस्तिङि** ।७।३।८८। भू सू एतयोः सार्व-

---

१ ङित्वेनैव गुणवृद्धिप्रतिषेधे सिद्धे कित्वचनमिज्यादित्यादौ 'वचिस्वपि'—इत्यादिना संप्रसारणार्थम् । जागर्यादित्यत्र गुणार्थं च । जागर्तेर्हि 'जाग्रोऽविचिण'—इत्यादिना ङिति पर्युदस्यते ङित्वं चेह विशेषविहितेन कित्वेन बाध्यते ।

धातुके तिङि गुणो न । अभूव् । अभूताम् । अभूवन् । अभूः । अभूतम् । अभूत । अभूवम् । अभूव । अभूम । **न माङ्योगे ।६।४।७४।** अडाटौ न स्तः । मा भवान्भूत् । मा स्म भवत् । मास्म भूत् । **लिङ्निमित्ते लृङ् क्रियातिपत्तौ ।३।३।१३९।** हेतुहेतुमद्भावादि लिङ्निमित्तं तत्र भविष्यदर्थाद्धातोर्लृङ् क्रियाया अनिष्पत्तौ गम्यमानायाम् । अभविष्यत् । अभविष्यताम् । अभविष्यन् । अभविष्यः । अभविष्यतम् । अभविष्यत । अभविष्यम् । अभविष्याव । अभविष्याम । सुवृष्टिश्चेदभविष्यत्तदा सुभिक्षमभविष्यत् । इत्यादि ज्ञेयम् । प्रभवतीत्यादौ उपसर्गाणामसमस्तत्वेऽपि संहिता नित्या । तदुक्तम् । संहितैकपदे नित्या नित्या धातूपसर्गयोः । नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥ इति । सत्ताद्यर्थनिर्देशश्चोपलक्षणम् । यागात्स्वर्गो भवतीत्यादौ उत्पद्यते इत्याद्यर्थात् । उपसर्गास्त्वर्थविशेषस्य द्योतकाः । प्रभवति । पराभवति । संभवति । अनुभवति । अभिभवति । उद्भवति । परिभवति । इत्यादौ विलक्षणार्थावगतेः । उक्तं च । उपसर्गेण धात्वर्थो बलादन्यत्र नीयते । प्रहाराहारसंहारविहारपरिहारवत् ॥ इति । अत सातत्यगमने । अतति । अततः । अतन्ति । अतसि । अतथः । अतथ । अतामि । अतावः । अतामः । **अत आदेः ।७।४।**

---

१ 'हेतुहेतुमतोर्लिङ्' इत्यनेन विहितं लिङ्निमित्तमिह गृह्यते । तदाह । हेतुहेतुमद्भावादीति । २ अत्र च कुर्द खुर्द गुर्द गुद क्रीडायामेवेत्येवकारो ज्ञापकः । 'सेधतेर्गतौ' इत्यत्र गतिग्रहणमपि गत्याद्यर्थनिर्देशस्योपलक्षणत्वे एव प्रमाणम् ।

७०। अभ्यासस्यादेरतो दीर्घः स्यात्। पररूपापवादः। आत। आततुः। आतुः। आतिथ। आतथुः। आत। आत। आतिव। आतिम। अतिता। अतिष्यति। अततु। **आडजादीनाम्।३।४।९६।** अजादेरङ्गस्याड् लुङ् लङ् लृङ्क्षु। आतत्। अतेत्। अत्यात्। लुङि सिचि इडागमे कृते। **अस्तिसिचोऽपृक्ते।७।३।९६।** विद्यमानात् सिचोस्तेश्च परस्यापृक्तस्य हल ईडागमः। **इट ईटि।८।२।२८।** इटः परस्य सस्य लोपः स्यादीटि। ( सिज्लोप एकादेशे सिद्धोवाच्यः )। आतीत्। आतिष्टाम्। **सिजभ्यस्तविदिभ्यश्च।३।४।१०९।** सिचोभ्यस्ताद्विदेश्च परस्य ङित्संबधिनो झेर्जुस्। आतिषुः। आतीः। आतिष्टम्। आतिष्ट। आतिषम्। आतिष्व। आतिष्म। आतिष्यत्। एवमवरक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु। अवतीत्यादि। षिध गत्याम्। **पुगन्तलघूपधस्य च।७।३।८६।** पुगन्तस्य लघूपधस्य चाङ्गस्येको गुणः सार्वधातुकार्द्धधातुकयोः। धात्वादेरिति सः। सेधति। षत्वम्। सिषेध। सेकृ सृप्सृस्तृसृजस्तृस्त्यान्ये दन्त्याजन्तसादयः। एकाचः षोपदेशाः स्युः ष्वस्कस्विद्स्वद्स्वञ्स्वप्स्मिङः। दन्त्यः केवलदन्त्यः न तु दन्त्योष्ठजोऽपि। ष्वष्कादीनां पृथग् ग्रहणात्। **असंयोगाल्लिट्**

---

१ अत्र सिच् च अस् चेति समाहारद्वन्द्वः। सिच्छब्दस्य सौत्रं भत्वम्। अस्तीत्यव्ययेन कर्मधारयः। ततः पञ्चम्याः सौत्रो लुक्। तदेतदभिप्रेत्याह। विद्यमानादित्यादि। २ दन्त्यश्च अच्च दन्त्याचौ तौ अव्यवहितपरौ यस्मात्स दन्त्याजन्तः दन्त्याजन्तश्चासौ सश्च दन्त्याजन्तसः। दन्त्याजन्तसः आदिर्येषां ते दन्त्याजन्तसादयः।

**कित्** ।१।२।४५। असंयोगात्परोऽपि लिट् कित्स्यात् । सिषिधतुः । सिषिधुः । सिषेधिथ । सिषिधथुः । सिषिध । सिषेध । सिषिधिव । सिषिधिम । सेधिता । सेधिष्यति । सेधतु । असेधत् । सेधेत् । सिध्यात् । असेधीत् । असेधिष्यत् । **सात्पदाद्योः** ।८।३।२१। सातेः पदादेश्च सस्य षो न इति निषेधे प्राप्ते । **उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम्** ।८।३।६५। उपसर्गस्थान्निमित्तादेषां सस्य षः । **सदिरप्रतेः** ।८।४।६६। प्रतिभिन्नादुपसर्गात्सदेः सस्य षः । **स्तन्भेः** ।८।३।६७। सौत्रस्य सस्य षः । **अवाच्चालम्बनाविदूर्ययोः** ।८।३।६८। अवात्स्तन्भेरेतयोरर्थयोः सस्य षः । **वेश्च स्वनो भोजने** ।८।३।३८। व्यवाभ्यां स्वनतेः सस्य षः । **परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्** ।८।३।७०। परिनिविभ्यः परेषामेषां सस्य षः । निषेधति । **प्राक् सितादड्व्यवायेपि**।८।३।६३। सेवसितेत्यत्र सितशब्दात् प्राग्ये सुनोत्यादयस्तेषामड्व्यवायेऽपि सस्य षः । न्यषेधत् । न्यषेधीत् । न्यषेधिष्यत् । **स्थादिष्वभ्यासेनचाभ्यासस्य**[1] ।८।३।६४। प्राक्सितात्स्थादिष्वभ्यासेन व्यवायेऽपि षत्वं स्यात् । एषामेवचाभ्यासस्य न तु सुनोत्यादीनाम् । निषिषेध । निषिषिधतुः । **सेधतेर्गतौ** ।८।३।११३। गत्यर्थस्य सेधतेः सस्य षो न । गंगां विसेधति । एवं चिती संज्ञाने । शुच शोके ।

---

१ इह द्वे वाक्ये एकं विध्यर्थमपरं च नियमार्थं तत्र अभ्यासेनेत्याकारकं विध्यर्थं अभ्यासस्येत्येतच्च नियमार्थं तदाह । अभ्यासेन व्यवायेऽपि षत्वम् एषामेव चाभ्यासस्येति च ।

गद व्यक्तायां वाचि । गदति । **नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च** ।८।४।१७। उपसर्गस्थान्निमित्तात्परस्य नेर्णत्वं स्यात् गदनदादिषु परेषु । प्रणिगदति । **कुहोश्चुः** ।७।४।६२। अभ्यासकवर्गहकारयोश्चवर्गादेशः । **अत उपधायाः** ।७।२।११६। वृद्धिः स्यात् । ञिति णिति च प्रत्यये । जगाद । जगदतुः । जगदुः । जगदिथ । जगदथुः । जगद । **णलुत्तमो वा** ।७।१।९१। णित्स्यात् । जगाद । जगद । गदिता । गदिष्यति । गदतु । अगदत् । गदेत् । गद्यात् । **अतो हलादेर्लघोः** ।७।२।७। हलादेर्लघोरतो वृद्धिर्वेडादौ सिचि परस्मैपदेषु । अगादीत् । अगदीत् । अगदिष्यत् । णद अव्यक्ते शब्दे । **णो नः** ।६।१।६५। धात्वादेर्णस्य नः । णोपदेशास्त्वनर्दनाटिनाथ्नाधृनन्द्नक्कनॄनृतः । **उपसर्गादसमासेऽपि णोपदेशस्य** ।८।४।१४। उपसर्गस्थान्निमित्तात्परस्य णोपदेशस्य धातोर्नस्य णः स्यात्समासेऽसमासेऽपि । प्रणदति । नदति । ननाद । **अत एकहल्मध्येऽनादेशादेर्लिटि** ।६।४।१२०। लिण्निमित्तादेशादिकं न भवति यदङ्गं तदवयवस्यासंयुक्तहल्मध्यस्थस्यात एत्वमभ्यासलोपश्च किति लिटि । नेदतुः । नेदुः । थलि-

---

१ गदादीनां चतुर्णां शपानिर्देशः स्यत्यादीनामेकादशानां श्तिपा निर्देशश्च 'श्तिपाशपानुबन्धेन' इत्यनेन यङ्लुकि णत्वनिषेधार्थः । प्रनिजगादीति इत्यादौ । घुशब्देन 'डुदाञ्' दाने इत्यादयो घुसंज्ञकाः षड्धातवो गृह्यन्ते । माशब्देन मेङ्माङो र्ग्रहणम् घुप्रकृतिमाङ् इति पठित्वा भाष्यादौ तथा व्याख्यानात् । २ 'समासेऽङ्गुलेः सङ्गः' इत्यतः समास इत्यनुवर्तनात्समास एवस्यादित्यसमास ग्रहणम् तस्मिन्कृतेतु असमास एवस्यादित्यपेर्ग्रहणम् ।

**च सेटि** ।६।४।१२१। इड्विति थलि प्रागुक्तं स्यात् । नेदिथ । नेदथुः । नेद । ननाद । ननद । नेदिव । नेदिम । नदिता नदिष्यति । नदतु । अनदत् । नदेत् । नद्यात् । अनादीत् । अनदीत् । अनदिष्यत् । श्च्युतिर् क्षरणे । ( इर इत्संज्ञा वाच्या ) । **शर्पूर्वाः खयः** ।७।४।६१। शिष्यन्ते अभ्यासस्य । हलादिःशेषापवादः। चुश्च्योत । **इरितो वा**।३।१।५७। इरितो धातोश्च्लेरङ् वा परस्मैपदेषु अश्च्युतत् । अश्च्योतीत् । यकाररहितोऽप्ययम् । श्चोतति । चुश्चोत । अश्चोतत् । अश्चोतीत् । च्युतिर् आसेचने । च्योतति । टुनदि समृद्धौ । **आदिर्ञिटुडवः** ।१।३।५। उपदेशे धातोराद्या एते इतः स्युः । **इदितोनुम्धातोः** ।७।१।५८। नन्दति । ननन्द । नन्दिता । नन्दिष्यति । नन्दतु । अनन्दत् । नन्देत् । इदित्वान्नलोपो न । नन्द्यात् । अनन्दीत् । अनन्दिष्यत् । एवं कुथि पुथि लुथि मथि मन्थ हिंसासङ्क्लेशनयोः । बिदि अवयवे । बिन्दति । भिदीति पाठान्तरम् । भिन्दति । गडि वदनैकदेशे । गण्डति । चदि आल्हादने । चन्दति । त्रदि चेष्टायाम् । त्रन्दति । कदि क्रदि क्लदि आव्हाने रोदने च । क्लिदि परिदेवने । तकि कृच्छ्रजीवने । युगि जुगि वुगि वर्जने । मघि मण्डने । शिघि आघ्राणे । मन्थविलोडने । मन्थति । ममन्थ । कित्वान्नलोपः । मथ्यात् । अर्च पूजायाम् । अर्चति । **तस्मान्नुड् द्विहलः** ।७।४।७१। द्विहलो धा-

---

१ अतद्गुणसंविज्ञानोबहुव्रीहिरयम् अतोऽत्र शर्न शिष्यते चित्रगुवत् ।
२ तस्माच्छब्देन 'अतआदेः' इत्यनेन कृतदीर्घः परामृश्यते । तदाह।दीर्घीभूतादिति ।

तोर्दीर्घीभूतादकारात् परस्य नुट् । आनर्च । आनर्चतुः । आनर्चुः । अर्चिता । अर्चिष्यति । अर्चतु । आर्चत् । अर्चेत् । अर्च्यात् । आर्चीत् । आर्चिष्यत् । एवं अर्द गतौ याचने च । अति अदि बन्धने । वन षण सम्भक्तौ । वनति । ववान । **न शसददवादिगुणानाम्** ।६।४।१२४। शसेर्ददेर्वकारादीनां गुणशब्देन भावितो योऽत् तस्य च एत्वाभ्यासलोपौ न । ववनतुः । ववनुः । सनति । ससान । सेनतुः । सेनुः । **ये विभाषा** ।६।४।४३। जनसनखनामात्वं वा यादौ क्ङिति सायात् । सन्यात् । वज व्रज गतौ । व्रजति । वव्राज । व्रजिता । व्रजिष्यति । व्रजतु । अव्रजत् । व्रजेत् । व्रज्यात् । **वदव्रजहलन्तस्याचः**। ७।२।३। एषामचो वृद्धिः परस्मैपदे सिचि । अव्राजीत् । अव्रजिष्यत् । कटे वर्षावरणयोः । कटति । चकाट । कटिता । कटिष्यति । कटतु । अकटत् । कटेत् । कट्यात् । **ह्ययन्तक्षणश्वसजागृणिश्व्येदिताम्** । ७।२।५। हमयान्तस्य क्षणादेर्ण्यन्तस्य श्वयतेरेदितश्च वृद्धिर्नेडादौ सिचि । अकटीत् । अकटिष्यत् । गुपू रक्षणे । **गुपूधूपविच्छिपणिपनिभ्य आयः** ।४।१।२८। स्वार्थे । **सनाद्यन्ता धातवः** ।३।१।३२। सनादयः कमेर्णिङन्ताः प्रत्यया अन्ते येषान्ते धातुसंज्ञाःस्युः ।

---

१ सूत्रेऽवयवावयविभावः षष्ठ्यर्थः तथाच शसददवादीनां योऽकार इत्यन्वय संभवेऽपि अकारस्य गुणरूपत्वाद्भेदनिबन्धना षष्ठी न संभवतीत्याशङ्क्य तन्निर्वाहार्थं व्याचष्टे। गुणशब्देन भावितस्येति । भावितत्वं च साक्षात्परं परासाधारणम् ।

सन् क्यच् काम्यच् क्यङ् क्यषोऽथाचारक्विब् णिज्यङौ तथा । यगाय ईयङ् णिङ् चेति द्वादशामी सनादयः । सनाद्यन्ता धातव इत्यस्यानन्तरं भूवादय इत्येव सूत्रयितुं युक्तम् । धातुत्वाल्लडादयः । गोपायति । **आयादय आर्द्धधातुके वा ।३।१।३१।** आर्द्धधातुकविवक्षायामायेयङ्णिङो वा स्युः । ( कास्यनेकाचो आम्वक्तव्यो लिटि )। कास आम्विधानान्मस्य नेत्वम् । **अतो लोपः ।६।४।४१।** आर्द्धधातुकोपदेशे यददन्तं तस्यातो लोपः आर्द्धधातुके । **आमः ।२।४।८१।** आमः परस्य लुक् । **कृञ्चानुप्रयुंज्यतेलिटि ।३।१।४०।** आमन्ताल्लिट्पराः कृभ्वस्तयोऽनुप्रयुज्यन्ते तेषाम् द्वित्वादि । **उरत् ।७।४।६६।** अभ्यासस्य ऋतोऽत्स्यात्प्रत्यये वृद्धिः । गोपायांचकार । द्वित्वात्परत्वाद्यणि प्राप्ते । **द्विर्वचनेऽचि ।१।१।५९।** द्वित्वनिमित्तेऽचि परे अच आदेशो न द्वित्वे कर्त्तव्ये । गोपायांचक्रतुः । गोपायांचक्रुः । **एकाच उपदेशेऽनुदात्तात् ।७।२।१०।** उपदेशे यो धातुरेकाजनुदात्तश्च ततः परस्यार्द्धधातुकस्येण् न । ऊदॄदन्तैर्यौतिरुक्ष्णुशीस्नुनुक्षुश्विडीङ् श्रिभिः ।

---

१ 'आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य' इतिसूत्रे कृञ्ग्रहणादनुप्रयोगोऽन्यस्यापि भवति । तेन 'कृभ्वस्तियोग'-इत्यतः 'कृञोद्वितीय'-इति ञकारेण प्रत्याहारात् कृभ्वस्ति लाभः । यदीह कृञ्शब्देन एक एव धातुर्गृह्येत तदा धात्वन्तरस्य प्राप्त्यभावादाम्प्रत्ययवदिति सूत्रे कृञ इति विशेषणं व्यर्थं स्यादितिभावः । २ अस्मादेकाज्ग्रहणात् "श्तिपा शपाऽनुबन्धेन निर्दिष्टं यद्गणेन च । यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकि" । इत्येतज्ज्ञाप्यते । उपदेशेऽनुदात्तादित्यनेनैवेष्टसिद्धेरेकाज्ग्रहणं व्यर्थं सज्ज्ञापयति । ज्ञापिते त्वेतस्मिन्नेकाज्ग्रहणं यङ्लुग्व्यावृत्त्यर्थमिति चारितार्थ्यञ्च ।

वृङ्वृञ्भ्यां च विनैकाचोऽजन्तेषु निहताः स्मृताः।१।कान्तेषु शक्लृएकः। चान्तेषु पच् । मुच् । रिच् । वच् । विच् । सिचः । एते षट् । छान्तेषु प्रछ्येकः । जान्तेषु । त्यज् । निजिर् । भज् । भञ्ज् । भुज् । भ्रस्ज् । मस्ज् । यज् । युज् । रुज् । रञ्ज् । विजिर् । सञ्ज् । स्वञ्ज् । सृजः । पञ्चदश । दान्तेषु । अद् । क्षुद् । खिद् । छिद् । तुद् । नुद् । पद्य । भिद् । विद्य । विनद् । शद् । सद् । स्विद्य । स्कन्द् । हद् षोडश । धान्तेषु क्रुध् । क्षुध् । बुध्य । बन्ध् । युध् । रुध् । राध् । व्यध् । शुध् । साध् । सिध्य । एकादश । नान्तेषु । मन्यहनौ द्वौ । पान्तेषु आप् । क्षिप् । छुप् । तप् । तिप् । तृप्य । दृप्य । लिप् । लुप् । वप् । शप् । स्वप् । सृप् त्रयोदश । भान्तेषु । यभ् । रभ् लभ् । त्रयः । मान्तेषु । गम् । नम् । रम् । यम् । चत्वारः । शान्तेषु । क्रुश् । दंश् । दिश् । दृश् । मृश् । रिश् । रुश् । लिश् । विश् । स्पृश् दश । षान्तेषु । कृष् । त्विष् । तुष । द्विष् । दुष् । पुष्य । पिष् । विष् । शिष् । श्लिष्य एकादश । सान्तेषु । घसूवसती द्वौ । हान्तेषु दह् । दुह् । दिह् । नह् । मिह् । रुह् । लिह् । वह् । अष्टौ । अनुदात्ता हलन्तेषु धातवो ह्यधिकं शतम् । गोपायांचकर्थ । गोपायांचक्रथुः । गोपायांचक्र । गोपायांचकार । गोपायांचकृव । गोपायांचकृम । गोपायांबभूव । गोपायामास । जुगोप । जुगुपतुः । जुगुपुः । **स्वरतिसूतिसूयतिधूञूदितो वा ।७।२।४४।** स्वरत्यादेरूदितश्च परस्य वलादेरार्धधातुकस्येड्वा । जुगोपिथ । जुगोप्थ । गोपायिता । गोपिता । गोप्ता ।

गोपायिष्यति । गोप्स्यति । गोपायतु । अगोपायत् । गोपायेत् । गोपाय्यात् । गुप्यात् । अगोपायीत् । **नेटि ।७।२।४।** इडादौ सिचि हलन्तलक्षणा वृद्धिर्न । अगोपीत् । अगौप्सीत् । **झलो झलि ।८।२।२६।** झलः परस्य सस्य लोपः स्याज्झलि । अगौप्ताम् । अगौप्सुः । अगौप्सीः । अगौप्तम् । अगौप्त । अगौप्सम् । अगौप्स्व । अगौप्स्म । अगोपायिष्यत् । अगोपिष्यत् । अगोप्स्यत् । क्षि क्षये । क्षयति । चिक्षाय । चिक्षियतुः । चिक्षियुः । एकाच इति निषेधे प्राप्ते । **कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि ।७।२।१३।**[१] क्रादिभ्य एव लिट इणनस्यादन्यस्मादनिटोऽपि स्यात् । **अचस्तास्वत्थल्यनिटो नित्यम् ।७।२।६१।** उपदेशेऽजन्तो यो धातुस्तासौ नित्यानिट् ततः परस्य थल इण्न । **उपदेशेऽत्वतः ।७।२।६२।** उपदेशेऽकारवतस्तासौ नित्यानिटः परस्य थल इण्न । **ऋतो भारद्वाजस्य ।७।२।६३।** तासौ नित्यानिट ऋदन्तस्यैव थलो नेट् भारद्वाजस्य मतेन । तेनान्यस्य तु स्यादेव । अयमत्र संग्रहः । अजन्तोऽकारवान्वा यस्तास्यनिट् थलि वेडयम् । ऋदन्त ईदृङ्नित्यानिट् क्राद्यन्यो लिटि सेड्भवेत् । चिक्षयिथ । चिक्षेथ । चिक्षियथुः । चिक्षिय । चिक्षाय । चिक्षय । चिक्षियिव । चिक्षियिम । क्षेता । क्षेष्यति । क्षयतु । अक्षयत् । क्षयेत् । **अकृत्सार्वधातुकयो-**

---

१ कृसृभृ एषामनुदात्तत्वात् 'एकाच उपदेशे'—इति प्रकृत्याश्रय इण्निषेधे प्राप्ते वृङ्वृञोस्तूदात्तत्वात् 'श्र्युकः किति' इति प्रत्ययाश्रये च निषेधे प्राप्ते नियमार्थमिदम् । स च नियमः । प्रकृत्याश्रयः प्रत्ययाश्रयो वा यावानिण्निषेधः स लिटि चेत्तर्हि क्रादिभ्य एवेत्येवं रूपः । स तु क्रादीनां चतुर्णामेव न तु स्तुद्र्वादीनां चतुर्णाम् । तेषां भारद्वाजनियमेन इणः प्राप्तत्वात् तन्निषेधार्थमत्रग्रहणस्यावश्यकत्वात् ।

**दीर्घः ।७।४।२५।** अजन्ताङ्गस्य दीर्घः स्याद्यादौ प्रत्यये न तु कृत्सार्वधातुकयोः । क्षीयात् । **सिचि वृद्धिः परस्मैपदेषु ।७।२।१।** इगन्ताङ्गस्य वृद्धिः परस्मैपदपरे सिचि । अक्षैषीत् । अक्षेष्यत् । तप सन्तापे । तपति । तताप । तेपतुः । तेपुः । तेपिथ । ततप्थ । तप्ता । तप्स्यति । तपतु । अतपत् । तपेत् । तप्यात् । अताप्सीत् । अताप्ताम् । अतप्स्यत् । **निसस्तपतावनासेवने ।८।३।१०२।** षः स्यात् । आसेवनं पौनःपुन्यं ततोन्यस्मिन्विषये । निष्टपति । क्रमु पादविक्षेपे । **वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः ।३।१।७०।** एभ्यः श्यन्वा कर्तरि सार्वधातुके । पक्षे शप् । **क्रमःपरस्मैपदेषु ।७।३।७८।** क्रमेर्दीर्घः परस्मैपदे शिति । क्राम्यति । क्रामति । चक्राम । **स्नुक्रमोरनात्मनेपदनिमित्ते ।७।२।३६।** अत्रैवेट् । क्रमिता । क्रमिष्यति । क्राम्यतु । क्रामतु । अक्राम्यत् । अक्रामत् । क्राम्येत्-क्रामेत् । क्रम्यात् । अक्रमीत् । अक्रमिष्यत् । चमु छमु जमु झमु अदने । **ष्ठिवुक्लमुचमां शिति ।७।३।७५।** अचो दीर्घः । ( आङि चम इति वक्तव्यम् ) । आचामति । आङि किम् । चमति । विचमति । अचमीत् । स्खल संचलने । स्खलति । चस्खाल । **अतोल्रान्तस्य ।७।२।२।** अतः समीपौ यौ ल्रौ तदन्तस्याङ्गस्यातो वृद्धिः परस्मैपदे सिचि । अस्खालीत् । अस्खलिष्यत् । त्सर छद्मगतौ । अत्सारीत् । पा पाने । **पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्य-**

---

१ उकारानुबन्धः 'उदितो वा' इति क्त्वायामिड्विकल्पार्थः । २ स्नुक्रमोरुदात्तत्वात्सर्वत्रेटि प्राप्ते नियमार्थमिदमित्याह । अत्रैवेडिति ।

**च्छधौशीयसीदाः** ।७।२।७८। पादीनां पिबादयः स्युरित्संज्ञकशादौ प्रत्यये । पिबादेशोऽदन्तस्तेन न गुणः । पिबति । **आत औ णलः** ।७।१।३४। आदन्ताद्धातोर्णल औकारादेशः । पपौ । **आतो लोप इटि च** ।६।४।६४। अजाद्योरार्धधातुकयोः क्ङिदिटोः परयोरातो लोपः । पपतुः । पपुः । पपिथ । पपाथ । पपथुः । पप । पपौ । पपिव । पपिम । पाता । पास्यति । पिबतु । अपिबत् । पिबेत् । **एर्लिङि** ।६।४।६७। घुसंज्ञानां मास्थागेपिबतिजहातिस्यतीनां चात एत्वमार्धधातुके किति लिङि । पेयात् । गातिस्थेति सिचो लुक् । अपात् । अपाताम् । **आतः** ।३।४।११०। सिजूलुकि आदन्तादेव झेर्जुस् । **उस्यपदान्तात्** ।६।१।९६। अपदान्तादवर्णादुसि पररूपमेकादेशः । अपुः । अपास्यत् । ग्लै म्लै हर्षक्षये। ग्लायति । **आदेच उपदेशेऽशिति** ।६।१।४५। उपदेशे एजन्तस्य धातोरात्वं न तु शिति । जग्लौ । ग्लाता । ग्लास्यति । ग्लायतु । अग्लायत् । ग्लायेत् । **वान्यस्य संयोगादेः** ।६।४।६८। घुमास्थादेरन्यस्य संयोगादेर्धातोरात एत्वं वा आर्धधातुके किति लिङि । ग्लेयात् । ग्लायात् । **यमरमनमातां सक् च** ।७।२।७३। एषां सक् स्यादेभ्यः सिच इट् परस्मैपदेषु । अग्लासीत् । अग्लास्यत् । एवं म्ला-

१ वर्णग्रहणे 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्' इति परिभाषा न प्रवर्तते इति ज्ञापनार्थमुपदेशग्रहणम् । अन्यथाऽनुपदेशे लाक्षणिकत्वादेवाप्रवृत्तौ तद्व्यर्थम् । तेन 'क्रीङ्जीनां णौ' इति कृतात्वे क्रापयतीत्यादौ 'अर्तिह्री'–इत्यनेन पुक् सिद्ध्यति ।

यति । धेट् पाने । धयति । दधौ । **दाधाघ्वदाप् ।१।१।२०।** दारूपा धारूपाश्च धातवो घुसंज्ञास्युर्दाप्दैपौ विना । धेयात् । **विभाषा धेट्-श्व्योः ।३।१।४९।** आभ्यां च्लेङ् वा । **चङि ।६।१।११।** अनभ्यासधात्ववयवस्य प्रथमस्यैकाचोद्वेस्तोऽजादेर्द्वितीयस्य । अदधत् । अदधताम् । **विभाषा घ्राधेट्शाच्छासः ।२।४।७८।** एभ्यः सिचो लुग्वा परस्मैपदेषु । अधात् । अधाताम् । अधुः । पक्षे इट्सकौ । अधासीत् । अधासिष्टाम् । अधासिषुः । ग्लै न्यक्करणे । ग्लायति । द्रै स्वप्ने । द्रायति । ध्रै तृप्तौ । ध्रायति । ध्यै चिन्तायाम् । ध्यायति । रै शब्दे । रायति । स्त्यै ष्ट्यै शब्दसङ्घातयोः । स्त्यायति । षोपदेशस्यापि सत्वे कृते रूपं तुल्यम् । षोपदेशफलं तु तिष्ट्यासतीत्यादौ भविष्यति । खै खदने । खायति । क्षै जै षै क्षये । क्षायति । जायति । सायति । घुमास्थेत्यत्र[1] 'विभाषा घ्राधेट्' इत्यत्र च स्यतेरेव ग्रहणं न त्वस्य । तेन एत्वसिज्लुकौ न । सायात् । असासीत् । कै गै शब्दे । शै श्रै पाके । पै ओवै[2] शोषणे । पायात् । अपासीत् । घुमास्थेतीत्वं तदपवाद एर्लिङीत्येत्वम् गातिस्थेति सिज्लुकौ च न । *लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्* इति पारूपस्य लाक्षणिकत्वात् । ष्टै वेष्टने । स्तायति । स्नै वेष्टने । शोभायां चेत्येके ।

---

१ तन्त्रान्तरेजहातिस्यतीनामिति निर्देशादिति भावः । 'विभाषा घ्राधेट्' इत्यत्र च 'सहचरितासहचरितयोः सहचरितस्यैव ग्रहणम्' इति परिभाषया श्यन्विकरणाभ्यां शाच्छाभ्यां साहचर्यादस्यैवग्रहणमितिभावः । २ ओकारानुबन्ध 'ओदितश्च' इति निष्ठायां नत्वार्थः ।

स्लायति । दैप् शोधने । दायति । अघुत्वादेत्वसिज्लुकौ न । दायात् । अदासीत । घ्रा गन्धोपादाने । जिघ्रति । घ्रायात् । घ्रेयात् । अघ्रात् । अघ्रासीत् । अघ्रास्यत् । ध्मा शब्दाग्निसंयोगयोः । धमति । ष्ठा गतिनिवृत्तौ तिष्ठति । स्थादिष्विति षत्वम् । अधितष्ठौ । उपसर्गादिति षत्वम् । अधिष्ठाता । स्थेयात् । सत्वे कृते प्रकृतिस्तवर्गः स्यात् । नकारजावनुस्वारपञ्चमौ झलि धातुषु । सकराजः शकारश्च षाट्टवर्गस्तवर्गजः । गातिस्थेति सिचो लुक् । अस्थात् । म्ना अभ्यासे । मनति । दाण् दाने । प्रणियच्छति । ह्वृ कौटिल्ये । ह्वरति । **ऋतश्च संयोगादेर्गुणः** ।७।४।१० । ऋदन्तस्य संयोगादेरंगस्यगुणोलिटि । उपधाया वृद्धिः । जह्वार । जह्वरतुः । जह्वरुः । जह्वर्थ । जह्वरथुः । जह्वर । जह्वार । जह्वर । जह्वरिव । जह्वरिम । ह्वर्ता । **ऋद्धनोः स्ये** ।७।२।७०। ऋतो हन्तेश्च स्यस्य इट् । ह्वरिष्यति । ह्वरतु । अह्वरत् । ह्वरेत् । **गुणोऽर्तिसंयोगाद्योः** ।७।४।२९। अर्तेः संयोगादेर्ऋदन्तस्य च गुणो यकि यादावार्द्धधातुके लिङि च । ह्वर्यात् । अह्वार्षीत् । अह्वरिष्यत् । स्वृ शब्दोपतापयोः । स्वरति । स्वरतीतिवेट् । सस्वरिथ । सस्वर्थ । वमयोस्तु स्वरत्यादि विकल्पं बाधित्वा पुरस्तात् प्रतिषेधकाण्डारंभसामर्थ्याच्छ्र्युकः कितीति निषेधे प्राप्ते क्रादिनियमान्नित्यमिट् । सस्वरिव । सस्वरिम । परत्वादृद्धनोरिति नित्यमिट् । स्वरिष्यति । स्मृ चिन्तायाम् । स्मरति । ह्वृ संवरणे । ह्वरति । सृ गतौ । क्रादित्वान्नेट् । ससर्थ । ससृव । ससृम । **रिङ्शयग्लिङ्क्षु** ।७।४।२८। शे यकि यादावार्द्धधातुके लिङि च ऋतो रिङ् । रीङि प्रकृते

रिङ्विधिसामर्थ्यान्न दीर्घः । स्रियात् । असार्षीत् । शीघ्रगतौ तु पाघ्रेति शिति धौरादेशः । धावति । ग्रृ घृ सेचने । ध्वृ ह्वृ छेंने । ध्वरति । दृशिर् प्रेक्षणे । पश्यति । **विभाषा सृजिदृशोः** ।७।१।१६। आभ्यां थल इड् वा । **सृजिदृशोर्झल्यमकिति** ।६।१।५८। अनयोरमागमः स्याज्झलादावकिति । दद्रष्ठ । ददर्शिथ । **षढोः कः सि** ।८।२।४। द्रक्ष्यति दृश्यात् । इरित्वादङ्वा । **ऋदृशोऽङि गुणः** । ७।४।१६। अदर्शत् । **नदृशः** ।३।१।४७। च्लेर्वक्ष्यमाणः क्सो न । अद्राक्षीत् । अद्रक्ष्यत् । श्रु श्रवणे । **श्रुवः शृ च** ।३।१।७४। श्रुवः शृ आदेशः श्नुप्रत्ययश्च कर्तरि सार्वधातुके । शृणोति । **सार्वधातुकमपित्** ।१।२।४। अपित्सार्वधातुकं ङिद्वत्स्यात् । शृणुतः । **हुश्नुवोः सार्वधातुके** ।६।४।८७। जुहोतेः श्नुप्रत्ययान्तस्यानेकाचोऽङ्गस्यासंयोगपूर्वस्योवर्णस्य यण्स्यादचि सार्वधातुके । शृण्वन्ति । शृणोषि । शृणुथः । शृणोमि । **लोपश्चास्यान्यतरस्यां म्वोः** ।६।४।१०७। असंयोगपूर्वस्य प्रत्ययोकारस्य लोपो वा म्वोः परयोः । शृण्वः । शृणुवः । शृण्मः । शृणुमः । शुश्राव । शुश्रुवतुः । शुश्रुवुः । शुश्रोथ । शुश्रविथ । शुश्रुवथुः । शुश्रुव । शुश्राव । शुश्रव । शुश्रुव । शुश्रुम । श्रोता । श्रोष्यति । शृणोतु । शृणुतात् ।

---

१ क्रादिनियमान्नित्ये प्राप्ते विभाषेयम् । २ यद्ययं श्रुधातुः स्वादौ पठ्येत तर्हि चकारो न कर्तव्य इति लाघवम् । तस्मात्तत्रैव पाठ्य इत्याहुः । ३ एतत् ओर्विशेषणं नतु श्नुप्रत्ययस्य तेन आप्नुवन्ति इत्यत्रापियण्निषेधः सिद्ध्यति । प्रत्ययविशेषणत्वे तु आश्नुवन्तीत्यत्रैव निषेधः स्यादिति भावः ।

शृणुताम् । शृण्वन्तु । **उतश्च प्रत्ययादसंयोगपूर्वात् ।६।४।१०६** असंयोगपूर्वात्प्रत्ययोतो हेर्लुक् । शृणु । शृणुतम् । शृणुत । गुणावादेशौ । शृणवानि । शृणवाव । शृणवाम । अशृणोत् । अशृणुताम् । अशृण्वन् । अशृणोः । अशृणुतम् । अशृणुत । अशृणवम् । अशृण्व । अशृणुव । अशृण्म । अशृणुम । शृणुयात् । शृणुयाताम् । **उस्यपदान्तात् ।६।१।९६।** अपदान्तादवर्णादुसि पररूपमेकादेशः स्यात् । शृणुयुः । शृणुयाः । शृणुयातम् । शृणुयात । शृणुयाम् । शृणुयाव । शृणुयाम । श्रूयात् । अश्रौषीत् । अश्रोष्यत् । गम्लृ सृप्लृ गतौ । **इषुगमियमां छः ।७।३।७७।** शिति । गच्छति । जगाम । **गमहनजनखनघसां लोपः क्ङित्यनङि ।६।४।९८।** एषामुपधाया लोपः स्यादजादौ क्ङिति न त्वङि । जग्मतुः । जग्मुः । जगमिथ । जगन्थ । जग्मथुः । जग्म । जगाम । जगम । जग्मिव । जग्मिम । गन्ता । **गमेरिट् परस्मैपदेषु ।७।२।५८।** गमेः सादेरार्द्धधातुकस्येट् परस्मैपदेषु । गमिष्यति । गच्छतु । अगच्छत् । गम्यात् । **पुषादिद्युताद्यॢदितः परस्मैपदेषु ।३।१।५५।** श्यन्विकरणपुषादेर्द्युतादेर्लृदितश्च

१ गमेरनुदात्तत्वात् । 'एकाच उपदेशे'—इत्यनेन यण्निषेधे प्राप्ते विध्यर्थोऽयमारम्भः । २ पुषधातुर्भ्वादौ दिवादौ क्र्यादौ चुरादौ च पठ्यते तदत्र यदि पुषपुष्टाविति भौवादिकधातुमारभ्य पुषादिगणो गृह्येत तदा द्युतादिग्रहणमनर्थकं अस्योत्तरत्रैव द्युतादीनां पाठात् । क्र्याद्यन्तर्गणोऽपि न गृह्यते तत्र पुषधातोरग्रे मुषादयश्चत्वार एव पठिताः तएव विवक्षिताश्चेत्तर्हि लाघवाल्लृदित एव क्रियेरन् । चुरादेस्तु णिचा व्यवधानेन ततोऽनन्तरस्य च्लेरसंभवात् . अतः परिशेषाद्दिवादय एवगृह्यन्त इत्याह । श्यन्विकरणपुषा देरिति ।

परस्य च्लेरङ् परस्मैपदेषु । अगमत् । अगमिष्यत् । सर्पति । **अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्** ।६।१।५९। उपदेशेऽनुदात्तोयऋदुपधस्तस्याम्वा झलादावकिति । स्रप्ता । सर्प्ता । असृपत् । ञिक्ष्विदा अव्यक्ते शब्दे । क्ष्वेदति । यभ मैथुने । यभति । येट् । येभिथ । **झषस्तथोर्धोधः** ।८।२।४०। झषः परयोस्तथयोर्धः स्यात् न तु दधातेः । ययब्ध । यब्धा । णम प्रह्वत्वे शब्देच । नेमिथ । ननन्थ । नन्ता नंस्यति । अनंसीत् । अनंसिष्टाम् । त्यज हानौ । त्यजति । तत्याज । तत्यजिथ । तत्यक्थ । त्यक्ता । अत्याक्षीत् । अत्याक्ताम् । अत्यक्ष्यत् । अक्षू व्याप्तौ । **अक्षो न्यतरस्याम्** ।३।१।७५। श्नुर्वास्यात्कर्त्तरि सार्वधातुके । पक्षे शप् । अक्ष्णोति । अक्षति । आनक्ष । आनक्षिथ । आनष्ठ । अक्षिता । अष्टा । अक्षिष्यति । स्कोरिति कलोपः । **षढोः कः सि** ।८।२।४१। अक्ष्यति । अक्ष्णोतु । अक्ष्णुहि । अक्ष्णवानि । आक्ष्णोत् । आक्ष्णवम् । अक्ष्णुयात् । अक्ष्णुयाताम् । अक्ष्णुयुः । अक्ष्यात् । आक्षीत् । आक्षिष्टाम् । तक्षू त्वक्षू तनूकरणे । **तनूकरणे तक्षः** ।३।१।७६। श्नुर्वा शब्विषये । तक्ष्णोति । तक्षति वा काष्ठम् । ततक्ष । ततक्षिथ । ततष्ठ । अतक्षीत् । अतक्षिष्टाम् । अताक्षीत् । अताष्टाम् । तनूकरणे किम् । वाग्भिः संतक्षति । भर्त्सयतीत्यर्थः । रक्ष पालने । रक्षति । णिक्ष चुम्बने । प्रणिक्षति । वक्ष रोषे । संघातइत्येके । वक्षति । मृक्ष संघाते । मक्ष इत्येके । तक्ष त्वचने । त्वचनं संवरणम् । त्वचो ग्रहणं च । पक्ष परिग्रह इत्येके । सूर्क्ष आदरे । सुसूर्क्ष । काक्षि वाक्षि माक्षि काङ्क्षायाम् । द्राक्षि ध्राक्षि ध्वाक्षि घोरवासिते च । चूष पाने ।

तूष तुष्टौ । पूष वृद्धौ । मूष स्तेये । लूष रूष भूषायाम् । शूष प्रसवे । यूष हिंसायाम् । जूष च । भूष अलंकारे । जि जये । जयति । **सँल्लिटोर्जेः** ।७।३।५७ सँल्लिण्निमित्तादभ्यासात्परस्य जेः कुत्वम् । जिगाय । जिग्यतुः । जिगयिथ । जीव प्राणधारणे । जीवति । पीव मीव तीव णीव स्थौल्ये । पीवति । पिपीव । मुर्वी बन्धने । **उपधायां च** ।८।२।७८। धातोरुपधाभूतयोरेफवकारयोर्हल्परयोः परत इको दीर्घः स्यात् । मूर्वति । पूर्व पर्व मर्व पूरणे । पूर्वति । पर्वति । मर्वति । चर्व अदने । चर्वति । कष खष शिष जष झष शष वष मष रुष रिष हिंसार्थाः । शेषति । शिशेष । शेष्टा । **शल इगुपधादनिटः क्सः** ।३।१।४५। इगुपधो यः शलन्तस्तस्माद-निटश्च्लेः क्सादेशः । अशिक्षत् । **तीषसहलुभरुषरिषः** ।७।२।४८। इच्छत्यादेः परस्य तादेरार्द्धधातुकस्येड्वा । रोषिता । रोष्टा । भष भर्त्सने । इह भर्त्सनं श्वरवः । पुष पुष्टौ । पोषिता । अनुदात्तेषु पुष्येति श्यना निर्देशादयमुदात्तः । अङ्विधौ दैवादिकस्य ग्रहणात् नाङ् । अपोषीत् । श्रिषु श्लिषु प्रुषु प्लुषु दाहे । शेषति । श्लेषति । प्रोषति । प्लोषति ॥ **इति परस्मैपदप्रक्रिया** ॥

एध वृद्धौ । **टित आत्मनेपदानां टेरे** ।३।४।७९। टितो लस्यात्मनेपदानां टेरेत्वम् । एधते । **आतो ङितः** ।७।२।८१। अतः परस्य ङितामात इय् स्यात् । एधेते एधन्ते । **थासस्से** ।३।४।८०। टितो लस्य । एधसे । एधेथे । एधध्वे । एधे ।

जीकरणे । विचति । विव्याच । विविचतुः । व्यचिता । व्यचिष्यति । विच्यात् । अव्याचीत् । अव्यचीत् । व्यचेः कुटादित्वमनसीति तु नेह प्रवर्त्तते । अनसीति पर्युदासेन कृन्मात्रविषयत्वात् । उछि उञ्छे । उञ्छः कणश आदानं कणिशाद्यर्जनं शिलमिति यादवः । उञ्छति । उञ्छांचकार । ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेषु । ऋच्छत्यॄतामिति गुणः । द्विहल्ग्रहणस्यानेकहलुपलक्षणत्वान्नुट् । आनर्च्छ । आनर्च्छतुः । ऋच्छिता । उज्झ उत्सर्गे । उज्झति । उज्झांचकार । लुभ विमोहने । लुभति । तीषसहलुभेति वेट् । लोभिता । लोब्धा । लोभिष्यति । तृप तृम्फ तृप्तौ । तृपति । ततर्प । तर्पिता । अतर्पीत् । तृम्फति । (शे तृम्फादीनां नुम्वाच्यः) । आदिशब्दः प्रकारे[1] । तेन येऽत्र नकारानुषक्तास्ते तृम्फादयः । ततृम्फ । तृफ्यात् । मृड सुखने । पृड च । मृडति । पृडति । शुन गतौ । शुनति । इष इच्छायाम् । इषुगमीति छः । इच्छति । तीषेतिवेट् । एषिता एष्टा । एषिष्यति । इष्यात् । ऐषीत् । कुट कौटिल्ये । गाङ्कुटादीति ङित्वम् । चुकुटिथ । चुकोट । चुकुट । कुटिता । पुट संश्लेषणे । पुटति । पुटिता । स्फुटविकसने । स्फुटति । स्फुर स्फुल संचलने।स्फुरति । स्फुलति । **स्फुरतिस्फुलत्योर्निर्निविभ्यः ।८।३।७६।** षत्वं वा । निस्फुरति । निष्फुरतीत्यादि । णू स्तवने । 'परिणूत गुणोदयः' । नुवति । नुनाव । नुविता । इति कुटादयः । टुमस्जो शुद्धौ । मज्जति । ममज्ज । मस्जिनशोरिति नुम् । ( मस्जेरन्त्यात्पूर्वो नुम्वाच्यः ) संयो-

---

१ सादृश्ये इत्यर्थः । 'प्रकारो भेदसादृश्ये'–इत्यमरात् ।

गादिलोपः। ममङ्क्थ। ममज्जिथ। मङ्क्ता। मङ्क्ष्यति। रुजो भङ्गे। अरौक्षीत्। भुजो कौटिल्ये। रुजिवत्। विश प्रवेशने। विशति। मृश आमर्शने। आमर्शनं स्पर्शः। अम्राक्षीत्। अमार्क्षीत्। अमृक्षत्। स्पृशमृशिति च्लेः सिच्। षद्लृविशरणगत्यवसादनेषु। विशरणं दुःखम्। सीदतीत्यादि। शद्लृ शातने। **शदेः शितः ।१।३।६०।** शिद्भाविनोऽस्मात्तङानौ स्तः। शीयते। शीयताम्। अशीयत। शीयेत। शशाद। शत्ता। शत्स्यति। अशदत्। अशत्स्यत्। कॄ विक्षेपे। **ॠत इद्धातोः ।७।१।१००।** किरति। (इत्वोत्वाभ्यां गुणवृद्धी पूर्वविप्रतिषेधेन)। चकार। चकरुः। करिता। करीता। कीर्यात्। अकरीत्। **किरतौ लवने ।६।१।१४०।** उपात्किरतेः सुट् छेदेऽर्थे। उपस्किरत्। (अड्भ्यासव्यवायेऽपि। सुट् कात्पूर्व इति वक्तव्यम्)। उपास्किरत्। उपचस्कार। **हिंसायां प्रतेश्च ।६।१।१४१।** उपात्प्रतेश्च किरतेः सुट् हिंसायाम्। उपस्किरति। प्रतिस्किरति। गॄ निगरणे। **अचि विभाषा ।८।२।२१।** गिरते रेफस्य लोऽजादौ प्रत्यये। गिरति। गिलति। गरीता। गलिता। गलीता। प्रच्छ ज्ञीप्सायाम्। ग्रहिज्येति संप्रसारणम्। पृच्छति पप्रच्छ। पप्रच्छतुः। पप्रच्छुः। प्रष्टा। प्रक्ष्यति। अप्राक्षीत्। मृङ् प्राणत्यागे। **म्रियतेर्लुङ्लिङोश्च ।१।३।६१।** लुङ्लिङोः शितश्च प्रकृतिभूतान्मृङस्तङानौ नान्यत्र। ङित्वं स्वरार्थम्। रिङ्। इयङ्।

---

१ 'पाघ्राध्मास्था'–इति सीदादेशः। २ 'उपात्प्रतियत्न'–इति सूत्रादुपात् इत्यनुवर्तते। ३ 'हरोविदारं प्रतिचस्करे नखैः'–इति माघः।

म्रियते । ममार । ममर्थ । मम्रिव । मम्रिम । मर्त्ता । मरिष्यति । मृषीष्ट । अमृत । पृङ् व्यायामे । प्रायेणायं व्याङ्पूर्वः । व्याप्रियते । व्यापप्रे । व्यापरिष्यते । ह्रस्वादङ्गादिति सिज्लोपः । व्यापृत । व्यापृषाताम् । जुषी प्रीतिसेवनयोः । जुषते । जुजुषे । ओविजी भयसंचलनयोः । प्रायेणायमुत्पूर्वः । उद्विजते । **विज इट् ।१।२।२** । विजेः पर इडादिप्रत्ययो ङिद्वत् । उद्विजिता । उद्विजिष्यते । ओलजी ओलस्जी व्रीडने । लजते । लेजे । लज्जते । ललज्जे ॥ इति **तुदादिः ॥**

रुधिर् आवरणे । **रुधादिभ्यः श्नम् ।३।१।७८** । शपोऽपवादः । रुणद्धि । 'श्नसोरल्लोपः' । रुन्धः । रुन्धन्ति । रुणत्सि । रुन्धः । रुन्ध । रुणध्मि । रुन्ध्वः । रुन्ध्मः । रुन्धे । रुन्धाते । रुन्त्से । रुन्धाथे । रुन्ध्वे । रुन्धे । रुन्ध्वहे । रुन्ध्महे । रुरोध । रुरुधे । रोद्धा। रोत्स्यति । रोत्स्यते । रुणद्धु । रुन्धात् । रुन्धाम् । रुन्धन्तु । रुन्धि । रुणधानि । रुणधाव । रुणधाम । रुन्धाम् । रुन्धाताम् । रुन्धताम् । रुन्त्स्व । रुणधै । रुणधावहै । रुणधामहै । अरुणत् २। अरुन्धाम् । अरुन्धन् । दश्चेति रुः । अरुणः । अरुणत् २ । अरुन्धम् । अरुन्ध । अरुन्ध । अरुन्धाताम् । अरुन्धत। रुन्ध्यात् । रुन्धीत । रुध्यात् । रुत्सीष्ट । अरुधत् । अरौत्सीत् । अरुद्ध । अरोत्स्यत् । अरोत्स्यत । भिदिर् विदारणे । छिदिर् द्वैधीकरणे । युजिर् योगे । रिचिर् विरेचने । रिणक्ति । रिङ्क्ते । रिरेच । रेक्ता । अरिणक् ।

अरिचत् । अरैक्षीत् । अरिक्त । विचिर् पृथग्भावे । विनक्ति । विङ्क्ते । क्षुधिर् संपेषणे । क्षुणत्ति । क्षुन्ते । क्षोत्ता । अक्षुदत् । अक्षौत्सीत् । अक्षुत्त । उच्छृदिर् दीप्तिदेवनयोः । छृणत्ति । छृन्ते । चच्छर्द । सेसिचीति वेट् । चछृदिषे । चछृत्से । छर्दिता । छर्दिष्यति । छर्त्स्यति । अछृदत् । अच्छर्दीत् । अच्छर्दिष्ट । उतृदिर् हिंसानादरयोः । तृणत्ति । तृन्ते । कृती वेष्टने । कृणत्ति । तृह हिसि हिंसायाम् । **तृणह इम् । ७।३।९२** । तृहःश्नमि कृते इम् हलादौ पिति । तृणेढि । तृण्ढः । ततर्ह । तर्हिता । अतृणेट् । **श्नान्नलोपः ६।४।२३** । हिनस्ति । जिहिंस । हिंसिता । उंदीक्लेदने । उनत्ति । उन्तः । उन्दन्ति । उन्दांचकार । औनत् । औन्ताम् । औन्दन् । औनः । औनदम् । अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु । अनक्ति । अङ्क्तः । अञ्जन्ति । आनञ्ज । आनञ्जिथ । आनङ्क्थ । अञ्जिता । अङ्क्ता । अङ्ग्धि । अनजानि । आनक् । **अञ्जेःसिचि ७।२।७१** । अञ्जेः सिचो नित्यमिट् । आञ्जीत् । तञ्चुसंकोचने । तनक्ति । तङ्क्ता । तञ्चिता । ओविजी भयसञ्चलनयोः । विनक्ति । विङ्क्तः । विज इडिति ङित्वम् । विविजिथ । विजिता । अविनक् । अविजीत् । शिष्लृ विशेषणे । शिनष्टि । शिष्टः । शिंषन्ति । शिनक्षि । शिशेष । शिशेपिथ । शेष्टा । शेक्ष्यति । हेर्धिः ।

१ तृह इतिवक्तव्ये सश्नमो ग्रहणं विशेषविहितेन इमाश्नामो बाधा माभूत् इत्येतदर्थम् तुदादिस्थस्य तृहइत्यस्य व्यावृत्त्यर्थमिति तु न ततःपरस्य हलादेः पितः सार्वधातुकस्य विकरणेन व्यवधानात्

शिण्ढि। शिनषाणि। शिंष्यात्। शिष्यात्। अशिषत्। अशेक्ष्यत्। एवं पिष्लृ संचूर्णने। भञ्जो आमर्दने। भनक्ति। बभञ्जिथ। बभङ्क्थ। भङ्क्ता। भुज पालनाऽभ्यवहारयोः। भुनक्ति। भोक्ता। भोक्ष्यति। अभुनक्। **भुजोऽनवने। १।३।६६।** तङानौ स्तः। ओदनम् भुङ्क्ते। अनवने किम्। महीं भुनक्ति। ञिइन्धी दीप्तौ। इन्धे। इन्धाते। इन्धते। इन्त्से। इन्धांचक्रे। इन्धिता। इन्धाम्। इन्धाताम्। इन्धताम्। इनधै। ऐन्ध। ऐन्धाताम्। ऐन्धत। ऐन्धाः। विद विचारणे। विन्ते। वेत्ता॥**इति रुधादिः॥**

तनु विस्तारे। **तनादिकृञ्भ्य उः।३।१।७९।** तनोति। तनुते। ततान। तेने। तनिता। तनिष्यति। तनिष्यते। तनोतु। तनुताम्। अतनोत्। अतनुत। तनुयात्। तन्वीत। तन्यात्। तनिषीष्ट। अतनीत्। अतानीत्। **तनादिभ्यस्तथासोः।२।४।७९।** तनादेः सिचो वा लुक् तथासोः। अनुदात्तोपदेशेति नलोपः। अतत। अतनिष्ट। अतथाः। अतनिष्ठाः। अतनिष्यत्। अतनिष्यत। षणु दाने। सनोति। सनुते। येविभाषेति आत्वम्। सायात्। सन्यात्। **जनसनखनां सञ्झलोः।६।४।४२।** एषामाकारो झलादौ सनि झलादौ क्ङिति च। असात। असनिष्ट। असाथाः। असनिष्ठाः। क्षणु हिंसायाम्। क्षणोति। क्षणुते। ह्मयन्तेति न वृद्धिः। अक्षणीत्। अक्षत। अक्षणिष्ट। अक्षथाः। अक्षणिष्ठाः। क्षिणु च। उप्रत्यये लघूपधगुणो वा। क्षिणोति क्षेणोति। क्षेणिता। अक्षेणीत्। अक्षित। अक्षेणिष्ट। तृणु अदने। तृणोति। तर्णोति। तृणुते। तर्णुते। डुकृञ् करणे। करोति। 'अतउत्सार्वधातुके'।

कुरुतः । हलिचेति दीर्घे प्राप्ते । **न भकुर्छुराम्** ।८।२।७९। भस्य कुर्छुरोरुपधाया न दीर्घः । कुर्वन्ति । **नित्यं करोतेः** ।६।४।१०८। करोतेः प्रत्ययोकारस्य नित्यं लोपो म्वोः । कुर्वः । कुर्मः । कुरुते । चकार । चकर्थ । चकृव । चक्रे । कर्ता । करिष्यति । करिष्यते । करोतु । कुरुताम् । अकरोत् । अकुरुत । **ये च** ।६।४।१०९। कृञ उलोपो यादौ प्रत्यये । कुर्यात् । कुर्वीत । क्रियात् । कृषीष्ट । अकार्षीत् । अकृत । अकरिष्यत् । अकरिष्यत । **संपरिभ्यां करोतौ भूषणे** ।६।१।१३७। **समवाये च** ।६।१।१३८। आभ्यां परस्य करोतेः सुट् भूषणे संघाते चार्थे । संस्करोति[1] । अलंकरोतीत्यर्थः । संस्कुर्वन्ति[2] । संघीभवन्तीत्यर्थः । संपूर्वस्य क्वचिदभूषणेऽपि सुट् । संस्कृतं भक्षाः इति ज्ञापकात् । **उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु च** । ६।१।१३९। कृञः सुट् । चात्प्रागुक्तयोरर्थयोः। प्रतियत्नो गुणाधानम्। विकृतमेववैकृतं विकारः । वाक्याध्याहर आकांक्षैकदेशपूरणम् । उपस्कृता[1] कन्या । उपस्कृता[2] ब्राह्मणाः । एधोदकस्योपस्कुरुते[3] । उपस्कृतं भुङ्क्ते[4] । उपस्कृतं ब्रूते[5] । वनु याचने । वनुते । वचने । मनु अवबोधने । मनुते । मेने । मनिता । अमनुत । मन्वीत । मनिषीष्ट ॥ इति तनादिः ॥

डुक्रीञ् द्रव्यविनिमये । **क्र्यादिभ्यः श्ना** ।३।१।८१। शपोऽपवादः। क्रीणाति । 'ईहल्यघोः' । क्रीणीतः । 'श्नाभ्यस्तयोरातः'[6] । क्रीण-

---

१ अलंकृतेत्यर्थः । २ समुदिता इत्यर्थः । ३ गुणाधानं करोतीत्यर्थः । ४ विकृतमित्यर्थः । ५ वाक्याध्याहारेण ब्रूते इत्यर्थः । ६ अस्य पूर्वं ईत्वापेक्षया परत्वादन्तरङ्गत्वाच्च झेरन्तादेशः एवमात्मनेपदेऽपि 'आत्मनेपदेषु'-इत्यनेन झस्याद्भावः ।

न्ति । क्रीणासि । क्रीणीथः । क्रीणीथ । क्रीणामि । क्रीणीवः । क्रीणीमः । क्रीणीते । क्रीणाते । क्रीणते । क्रीणीषे । क्रीणाथे । क्रीणीध्वे । क्रीणे । क्रीणीवहे । क्रीणीमहे । चिक्राय । चिक्रियतुः।चिक्रियुः । चिक्रयिथ । चिक्रेथ । चिक्रिये । क्रेता । क्रेष्यति । क्रेष्यते । क्रीणातु । क्रीणीतात् । क्रीणीताम् । क्रीणाताम् । क्रीणताम् । क्रीणीयात् । क्रीणीत । क्रीयात् । क्रेषीष्ट । अक्रैषीत् । अक्रेष्ट । अक्रेष्यत् । अक्रेष्यत । प्रीञ् तर्पणे कान्तौ च । प्रीणाति । प्रीणीते । श्रीञ् पाके । श्रीणाति । श्रीणीते । मीञ् हिंसायाम् । प्रमीणाति । 'हिनुमीना' । प्रमीणीते । मीनातीत्यात्वम् । ममौ । मिम्यतुः । ममिथ । ममाथ । मिम्ये। माता । मास्यति । मीयात् । मासीष्ट । अमासीत् । अमासिष्टाम् । अमास्त । षिञ् बन्धने । सिनाति । सिनीते । सिषाय । सिष्ये । सेता । स्कुञ् आप्रवणे । **स्तन्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुञ्भ्यः श्नुश्च।३।१।८२।** चात्श्ना । स्कुनोति । स्कुनुते । स्कुनाति । स्कुनीते । चुस्काव । चुस्कुवे । स्कोता । अस्कौषीत् । अस्कोष्ट । स्तंभ्वादयश्च । त्वारः । सौत्राः सर्वे रोधनार्थाः परस्मै पदिनः । **हलः श्नः शानज्झौ ।३।१।८३** स्तभान[1] । **जृस्तंभुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च ।३।१।५८।**च्लेरङ् वा । व्यष्टभत् । अस्तंभीत् । युञ् बन्धने । युनाति । युनीते । योता । क्नूञ् शब्दे । क्नूनाति । क्नूनीते । क्नविता । द्रूञ् हिंसायम् । द्रूणाति । द्रूणीते । पूञ् पवने । **प्वादी-**

---

१ 'अतोहेः' इत्यारंभसामर्थ्यात्संनिपातपरिभाषाया अप्रवृत्तेर्हेर्लुक् ।

**नां ह्रस्वः ।७।३।८०।** पूञ् लूञ् स्तॄञ् कॄञ् वॄञ् धूञ् शॄ पॄ वॄ भॄ मॄ दॄ जॄ झॄ धॄ नॄ कॄ ऋ गॄ ज्या री ली क्ली प्ली एषां चतुर्विंशतेर्ह्रस्वः शिति । पुनाति । पुनीते । पविता । लूञ् छेदने । लुनाति । लुनीते । स्तॄञ् आच्छादने । स्तृणाति । स्तृणीते । तस्तार । तस्तरतुः । तस्तरे । स्तरिता । स्तरीता । स्तृणीयात् । स्तृणीत । 'ऋत इद्धातोः' । स्तीर्यात् । स्तरिषीष्ट । स्तीर्षीष्ट । 'सिचि च परस्मैपदेषु' । अस्तारीत् । अस्तारिष्टाम् । अस्तारिषुः । अस्तरिष्ट । अस्तीर्ष्ट । कॄञ् हिंसायाम् । कृणाति । कृणीते । चकार । चकरे । वॄञ् वरणे । वृणाति । वृणीते। ववार । ववरे । वरिता । वरीता । उदोष्ठ्येत्युत्वम् । वूर्यात् । वरिषीष्ट। वूर्षीष्ट । अवारीत् । अवारिष्टाम् । अवरिष्ट । अवरीष्ट । अवूर्ष्ट । धूञ् कंपने । धुनाति । धुनीते । दुधविथ । दुधोथ । दुधुविव । धोता। धविता । 'स्तुसुधूञ्भ्यः परस्मैपदेषु' । अधावीत् । अधविष्ट । ग्रह उपादाने । गृह्णाति । गृह्णीते । जग्राह । जगृहे । **ग्रहोऽलिटिदीर्घः । ७।२।३७ ।** एकाचो ग्रहेर्विहितस्येटो दीर्घो न तु लिटि । ग्रहीता । गृह्णातु । गृहाण । गृह्यात् । ग्रहीषीष्ट । ह्रयन्तेति न वृद्धिः । अग्रहीत् । अग्रहीष्टाम् । अग्रहीषाताम् । कुष निष्कर्षे । कुष्णाति । कोषिता। **निरः कुषः ।७।२।४६।** वलादेरार्द्धधातुकस्येड्वा । निष्कोषिता । निष्कोष्टा । निरकोषीत् । शलइगुपधादिति क्सः । निरकुक्षत्।अश भोजने । अश्नाति । आश । अशिता । अश्नातु । अशान । ज्ञा अवबोधने । ज्ञाजनोरिति जादेशः । जानाति । जज्ञौ । पॄ पालनपूरणयोः । पृणाति ।

शॄ हिंसायाम् । शृणाति । शॄदॄप्रांह्रस्वोवेति पक्षे यण् । शश्रतुः । शशरतुः । दॄ विदारणे । दृणाति । दद्रतुः । ददरतुः । जॄ वयोहानौ । जृणाति । मुष स्तेये । मुष्णाति । मोषिता । पुष पुष्टौ । पुष्णाति । पोषिता । बन्ध बन्धने । बध्नाति । बबन्ध । बबन्धिथ । बन्धा । भन्त्स्यति । अभान्त्सीत् । अबान्धाम् । अभान्त्सुः । क्लिशू विबाधने । क्लिश्नाति । क्लेशिता । क्लेष्टा । अक्लेशीत् । अक्लिक्षत् । वृङ् संभक्तौ । वृणीते । वव्रे । ववृढ्वे । वरिता । वरीता । अवरिष्ट । अवरीष्ट । अवृत ॥ **इति क्र्यादिः ॥**

चुर स्तेये । **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच् ।३।१।२५।** स्वार्थे । पुगन्तेति गुणः । सनाद्यन्ता इति धातुत्वम् । तिप्शबादि । गुणायादेशौ । चोरयति । **णिचश्च ।१।३।७४** णिजन्तादात्मनेपदं कर्तृगामिनि क्रियाफले । चोरयते । चोरयाञ्चकार । चोरयिता । चोर्यात् । चोरयिषीष्ट । णिश्रीति चङ् । णौचङीति ह्रस्वः । चङीति द्वित्वम् । 'हलादिःशेषः' । दीर्घो लघोरित्यभ्यासस्य दीर्घः । अचूचुरत् । चिति स्मृत्याम् । चिन्तयति । अचिचिन्तत् । चिन्तेति पठितव्ये इदित्करणं णिचः पाक्षिकत्वे लिङ्गम् । तेनचिन्त्यादित्यादौ नलोपो न । चिन्तति । चिन्तेदित्यादि । यन्त्रि संकोचे । यन्त्रयति । यन्त्रेतिपठितुं शक्यम् । यत्तु इदित्करणाद्यंत्रतीति माधवेनोक्तम् । तच्चिन्त्यम् । एवं

---

१ यन्त्रितन्त्रिमन्त्र्यादिषु इकारो व्यर्थ एव नतु ज्ञापनार्थः । तेषां संयोगान्तत्वात् यन्त्र इति नकारे पठितेऽपि अनिदितामिति लोपो न लभ्यते नकारस्यानुपधात्वात् चिन्त्यादित्यत्रतु चिन्तइति पठिते नकारस्योपधात्वाल्लोपः स्यात् तद्वारणाय कृत इकारस्तु ज्ञापक इति भावः ।

कुद्रि अनृतभाषणे । तन्त्रि कुटुम्ब धारणे । मन्त्रिगुप्तपरिभाषणे । तन्त्रयते । मन्त्रयते । एतौ आत्मने पदिनौ । स्फुडि परिहासे । स्फुण्डयति । पीड अवगाहे ।**भ्राजभासभाषदीपजीवलमीलपीडामन्यतरस्याम्**।७।४।३। एषामुपधाया ह्रस्वो वा चङ्परे णौ । अपीपीडत् । अपिपीडत् । प्रथ प्रख्याने । प्राथयति । **अत्स्मृदृत्वरप्रथम्रदस्तृस्पशाम्** ।७।४।९५। एषामभ्यासस्याकारश्चङ्परे णौ । इत्वापवादः । अपप्रथत् । पृथ प्रक्षेपे । पर्थयति । **उर्ऋत्** ।७।४।७। उपधाया ऋवर्णस्य ऋद्वा चङ्परे णौ । इररारामपवादः । अपीपृथत् । अपपर्थत् । लुण्ठ स्तेये । लुण्ठयति । अलुलुण्ठत् । तड आघाते । ताडयति । अतीतडत् । मडि भूषायां हर्षे च । मण्डयति । अममण्डत् । भडि कल्याणे । भण्डयति । अबभण्डत् । छर्द वमने । छर्दयति । अचछर्दत् । चुद संचोदने । चोदयति । अचूचुदत् । पाल रक्षणे । पालयति । अपीपलत् । पूज पूजायाम् । पूजयति । अपूपुजत् । कृत संशब्दने । **उपधायाश्च** । ७।१।१०१ । धातोर्ऋत इत्। रपरत्वम् । उपधायांचेति दीर्घः। कीर्तयति । अचीकृतत् । अचिकीर्तत्। म्लेच्छ अव्यक्तायां वाचि । म्लेच्छयति । अमिम्लेच्छत् । ईड स्तुतौ । ईडयति । पिडि संघाते । पिण्डयति । रुष रोषे । रोषयति । अरूरुषत्। तुल उन्माने । तोलयति । अतूतुलत् । शुल्बमाने । शुल्बयति । अशु-

१ ऋकारोपधे 'उपधायाश्च' इति अचीकृतत् इत्यादौ इङ्प्राप्तः अमीमृजदित्यत्र 'मृजेर्वृद्धिः' इति आर्प्राप्तः इतरेषां गुणेनार् प्राप्त इति विवेकः

शुल्बत्। घुषिर् विशब्दने। घोषयति। अजूघुषत्। पट पुट लुट तुजि मिजि पिजि लुजि भजि लघि त्रसि पिसि कुसि दसि कुशि घट वटि बृहि बर्ह बल्ह गुप धूप विच्छ चीव पुथ लोकृ लोचृ णद कुप तर्क वृतु वृधु भाषार्थाः। पाटयति। पोटयति। लोटयति। तुञ्जयति। एवं परेषाम्। घाटयति। घण्टययति। **नाग्लोपिशास्वृदिताम्** ॥७।४।२॥ णिच्यग्लोपिनः शास्तेर्ऋदितां चोपधाया ह्रस्वो न चङ्परे णौ। अलुलोकत्। अलुलोचत्। वर्तयति। वर्द्धयति। 'आधृषाद्वा'। इत ऊर्द्ध्वं विभाषितणिचो धृषधातुमभिव्याप्य। युज पृच संयमने। योजयति। योजति। अयौक्षीत्। पर्चयति। पर्चति। पर्चिता। अपर्चीत्। अर्च पूजायाम्। षह मर्षणे। साहयति।'सएवायं नागः सहति कलभेभ्यः परिभवम्'। वृञ् वरणे। वारयति। वरति। वरते। जॄ वयोहानौ। जारयति। जरति। शिष असर्वोपयोगे। शेषयति। शेषति। शेष्टा। अशिक्षत्। तप दाहे। तापयति। तपति। तप्ता। तृप तृप्तौ। तर्पयति। तर्पति। हिसि हिंसायाम्। हिंसयति। हिंसति। अर्ह पूजायाम्। छद

---

१'घुषिरविशब्दने' इतिसूत्रे अविशब्दने इतिनिषेधादनित्योऽस्य णिच्। तथा हि तेन सूत्रेण अविशब्दनेऽर्थे निष्ठाया इण्निषिध्यते विशब्दनार्थादस्मादनन्तरा निष्ठा न संभवति णिचा व्यवधानात् अतो अविशब्दनार्थाद्भौवादिकादेवेण्निषेधो भवेदिति किं विशब्दन प्रतिषेधन तस्माद्यमेव निषेधोऽस्यानित्योणिज्जितिज्ञापयति।

अपवारणे । छादयती । छदंति।छदते । धूञ् कंपने । (धूञ्प्रीञोर्नुक्) णौ। धूनयति । धवति । धवते । प्रीञ् तर्पणे । प्रीणयति । प्रिणयते । वच परिभाषणे । वाचयति । वचति । वक्ता । अवाक्षीत् । मानपूजायाम्। मानयति । मानति । मानिता । भूप्राप्तौ । आत्मनेपदी । भावयते । भवते । णिचूसंनियोगेनैवात्मनेपदमित्येके । भवति । मार्ग अन्वेषणे । धृष प्रसहने । धर्षयति । धर्षति । अथादन्ताः । कथ वाक्यप्रबन्धने । अल्लोपः । **अचः परस्मिन्पूर्वविधौ** ।१।१।५७। परनिमित्तोऽजादेशः स्थानिवत्स्यात् स्थानिभूतादचः पूर्वत्वेन दृष्टस्य विधौ कर्त्तव्ये । इतिस्थानिवत्वान्नोपधाया वृद्धिः कथयति । अग्लोपित्वाद्दीर्घसन्वद्भावौ न। अचकथत् । गण संख्याने । गणयति । **ई च गणः** ७।४।९४। अभ्यासस्य चादच्चङ्परे णौ । अजीगणत् । अजगणत् । रच प्रतियत्ने । रचयति । अररचत्। कल गतौ संख्याने च । कलयति । अचकलत्। मह पूजायाम् । महयति । सूच पैशुन्ये । सूचयति । अषोपदेशत्वान्न षः । असुसूचत् । कुमार क्रीडायाम् । कुमारयति । । अचुकुमारत् । ऊन परिहाणे । ऊनयति । ओः पुयणजीति सूत्रे पययोरिति वक्तव्ये

---

१अयं भ्वादौ स्वादौ तुदादौ क्र्यादौ चुरादौ च स्वादौ ह्रस्वश्च तथाच कविरहस्ये 'धुनोति चंपकवनानि धुनोत्यशोकं चूतं धुनाति धुवति स्फुटितातिमुक्तम् । वायुर्विधूनयति चंपकपुष्परेणून्यत्कानने धवति चन्दनमञ्जरीश्च' इति ।

वर्गप्रत्याहारजग्रहो[1] लिङ्गम् । णिच्यच आदेशो न द्वित्वे कर्तव्ये इति । यत्रद्विरुक्तावभ्यासोत्तरखण्डस्याद्योच् प्रक्रियायां परिनिष्ठितरूपे वा अवर्णो लभ्यते तत्रैवायं निषेधः । ज्ञापकस्य सजातीयापेक्षत्वात् । तेनाचिकीर्त्तदित्यादि सिद्धम् । प्रकृते तु नशब्दस्य द्वित्वम् । तत उत्तर खण्डे अल्लोपः । औननत् । ध्वन शब्दने । ध्वनयति । अदध्वनत् । सूत्र वेष्टने । सूत्रयति । मूत्र प्रस्रवणे । मूत्रयति । अदन्तत्वसामर्थ्याणिज्विकल्पः । मूत्रति । आगर्वादात्मनेपदिनः । पद गतौ । पदयते । अपपदत् । गृह ग्रहणे । मृग अन्वेषणे । मृगयते । शूर वीर विक्रान्तौ । शूरयते । वीरयते । गर्व माने । गर्वयते ॥ इतिचुरादिः ॥

**स्वतन्त्रः[2] कर्ता** ।१।४।५४। क्रियायां स्वातन्त्र्येण विवक्षितोर्थः कर्त्ता स्यात् । **तत्प्रयोजको हेतुश्च[3]** ।१।४।५५। कर्तृप्रयोजको हेतुसंज्ञः क-

---

१ वर्गादिग्रहणं तु अबीभवत् अमीमवत् बिभावयिषति मिमावयिषति इत्यादौ अभ्यासोकारस्येत्वार्थं तत्र तु णिचि 'परत्वादन्तरङ्गत्वाच्च वृद्ध्यादौ कृते द्वित्वे अभ्यासे उवर्णस्यैवदुर्लभत्त्वात् अकारस्य 'सन्यतः' इति इत्वे रूपासिद्धेश्च प्रकृतसूत्रे वर्गादि ग्रहणं व्यर्थं सदुक्तेऽर्थे ज्ञापकमिति भावः पययोरिति तु अपेक्षितमेव पूङ्यौतिभ्यां परस्य सनः 'स्मिपूङ्'-'सनीवन्तर्द्ध'-इतिसूत्राभ्यामिडागमे कृते 'द्विर्वचनेऽचि' इत्यादेशनिषेधात् पूर्वं द्वित्वे पुपविषते युयविषते इत्यादौ इत्वार्थम् ।
२ स्वातन्त्र्यं च कर्तृप्रत्ययसमभिव्याहारे प्रधानीभूतधात्वर्थाश्रयत्वम् पक्वस्तंडुलो देवदत्तेनेत्यत्र प्रधानीभूतधात्वर्थः पचनं तदाश्रयत्वाद्देवदत्तस्य स्वातन्त्र्यम् ।
३ अत्र चकार एक संज्ञाधिकारबाधनार्थस्तदाह हेतुसंज्ञः कर्तृसंज्ञश्चेति

कर्तृसंज्ञश्च । **हेतुमति च** ।३।१।२६। प्रयोजकव्यापारे प्रेरणादौ वाच्ये धातोर्णिच् । भवन्तं प्रेरयति भावयति । **ओः पुयण्ज्यपरे** । ७।४।८०। सनि परे यदंगं तदवयवो योऽभ्यासस्तस्योत इत्स्यात्पवर्गयण्जकारेष्ववर्णपरेषु परतः । अबीभवत् । अपीपवत् । मूङ् बन्धने । अमीमवत् । अयीयवत् । रु शब्दे । अरीरवत् । अलीलवत् । अजीजवत् । पुयण्जीति किम् । नुनावयिषति । अपरे किम् । बुभूषति । **स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा** ।७।४।८१। एषामभ्यासोकारस्येत्वं वा सनि अवर्णपरे धात्वक्षरे परे । असिस्रवत् । इत्यादि । अवर्णपरे किम् । अशुशूषत् । णिजन्ताण्णिच् । परत्वाद्वृद्धौ प्राप्तायाम् । णयल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेनेति णिलोपः । चोरयति । णौचङीति ह्रस्वः । दीर्घो लघोरिति दीर्घः । न चाग्लोपित्वाद्द्वयोरप्यसंभवः । ण्याकृति निर्देशात् । अचूचुरत् । टु ओश्वि गतिवृद्ध्योः। **णौ च संश्चङोः** ।३।१।३१। सन्परे चङ्परे च णौ श्वयतेः संप्रसारणं वा स्यात् । *संप्रसारणं तदाश्रयं च कार्यं बलवत्* इति वचनात्संप्रसारणम् । अशूशवत्।अलघुत्वान्न दीर्घः। अशिश्वयत् । **स्तंभुसिवुसहां चङि** ।८।३।११६। उपसर्गादेषां सस्य षो न स्याच्चङि । अदातस्तंभत् । पर्यसीषिवत् । न्यसीषहत् ।

---

१ चङ्परे णित्वे इत्यर्थः तेन णिद्वये सत्यपि चङ्परं णित्वमस्तीतिभावः । २ इयंच परिभाषा 'लिटचभ्यासस्य'–इति सूत्रे वच्यादीनां ग्रह्यादीनां चानुवृत्त्यैवेटसिद्धयोभयेषां ग्रहणसामर्थ्याज्ज्ञाप्यते ।

**स्वापेश्चङि** ।६।१।१८। ण्यन्तस्य स्वपेश्चङि संप्रसारणम् । असूषुपत् । **हनस्तोऽचिण्णलोः** ।७।३।३२। चिण्णल्वर्जे ञ्णिति णिति घातयति । **अर्त्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ** ।७।३।३६। स्थापयति । **तिष्ठतेरित्** ।७।४।५। उपधाया इश्चङ्परे णौ । अतिष्ठिपत् । **जिघ्रतेर्वा** ।७।४।६। उपधाया इत्वं चङ्परे णौ । अजिघ्रिपत् । अजिघ्रपत् । **शाच्छासाह्वाव्यावेपां युक्** ।७।३।३७। णौ । शाययति । अशीशयत् । ह्वाययति । **ह्वः सम्प्रसारणम्** ।६।१।३२। सन्परे चङ्परे च णौ । (काण्यादीनां वा) चङ्परे णौ उपधाया ह्रस्वो वा । ण्यन्ताः कणरणभणश्रणलुपहेठः षट् भाष्ये । ह्वायिवाणिलोटिलोचयश्चत्वारोधिका न्यासे । चाणिलोठी अप्यन्यत्र । इत्थं काण्यादयो द्वादश । अजूहवत् । **अजुहावत्** । पाययति । **लोपः पिबतेरीच्चाभ्यासस्य** ।७।४।४। पिबतेरुपधाया लोपः स्यादभ्यासस्य ईदन्तादेशश्च चङ्परे णौ । अपीप्यत्[2] । (पातेर्णौ[1] लुग्वक्तव्यः) । पुकोऽपवादः । पाल रक्षणे । पालयति । **वो विधूनने जुक्** ।७।३।३८। णौ वाजयति कंपे किम् । केशान्वापयति । **शदेरगतौ तः** ।७।३।४२। णौ । शा-

---

१ 'लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य' इति परिभाषया 'पा रक्षणे' इत्यस्य न ग्रहणम् तस्यतु पालयतीति रूपमनुपदं स्फुटी भविष्यति । इहशाच्छासादीनां कृतात्वनां निर्देशः पुकः प्राप्तिं ध्वनयितुं तत्प्रयोजनं त्वस्मिन्प्रकरणे लक्षणप्रतिपदोक्तपरिभाषा न प्रवर्तते । तेन ध्यापयतीत्यादि सिद्धम् । २ इह अभ्यासेकारसंनियोगशिष्टत्वाद्द्वित्वे कृते उपधालोपः । अन्यथा उपधाकार्यस्य द्वित्वात्प्रबलत्वात्पूर्वं लोपे अभ्यासस्येत्वं दुर्लभम् ।

नयति। गतौ तु। गाः शादयति गोविन्दः । गमयतीत्यर्थः । **रुहः पोऽन्यतरस्याम्** ।७।३।४३। णौ। रोपयति। रोहयति। **दोषो णौ।** ६।४।९०। दुष्यतेरुपधाया ऊत्स्याण्णौ। दूषयति। **वा चित्तविरागे।** ६।४।९१।विरागोऽप्रीतता।चित्तंदूषयति । दोषयति वा कामः। **उभौ साभ्यासस्य।**८।४।२१।साभ्यासस्यानितेरुभौ नकारौ णत्वं प्राप्नुतो निमित्ते सति। प्राणिणत्। **णौ गमिरबोधने।**२।४।४६।इणःगमयति। बोधने तु। प्रत्याययति । घट चेष्टायाम् । घटादयो मितः ( जनीजॄष्क्नसुरञ्जोऽमन्ताश्च )। मितः। 'ज्वलह्वलह्मलनमामनुपसर्गाद्वा'। एषां मित्त्वं वा। 'ग्लास्नावनुवमां च'। अनुपसर्गादेषां मित्त्वं वा 'नकम्यमिचमाम्'। अमन्तत्वात्प्राप्तं मित्वमेषां न। 'यमोऽपरिवेषणे'। मित्त्वं न। स्खदिरवपरिभ्यां च मिन्न। **मितां ह्रस्वः** ।६।४।९२। घटादीनां ज्ञपादीनां च णावुपधाया ह्रस्वः। घटयति। ज्ञप ज्ञापने च। ज्ञपयति। अजीघटत्। अजिज्ञपत्। **रभेरशब्लिटोः**।७।१।६३।नुमचि। **लभेश्च।** ७।१।६४।अररंभत्।अललंभत्। ईर्ष्ययति (ईर्ष्यतेस्तृतीयस्येति वक्तव्यम्।) तृतीयव्यञ्जनस्य तृतीयैकाच इति वार्थः। आद्ये षस्य द्वित्वं वारयितुमिदम्। द्वितीये त्वजादेर्द्वितीयस्येत्यस्यापवादतया संनन्ते प्रवर्त्तते। ऐर्ष्यियत्। द्वितीयव्याख्यायां णिजन्ताच्चङि ष एवाभ्यासे श्रूयते।

---

१ इह पूर्वं णत्वं कृत्वा पश्चाद्द्वित्वे कृते प्राणिणत् इत्यादि रूपसिद्धौ अयमारम्भः 'पूर्वत्रासिद्धीयमद्विर्वचने' इत्यस्यानित्यत्वं ज्ञापयितुं तेनऊर्णुनावेत्यत्र णत्वात्पूर्वमेव नुशब्दस्य द्वित्वम्।

हलादिः शेषात्। द्वित्वं तु द्वितीयस्यैव। तृतीयाभावेन प्रकृतवार्तिकाप्रवृत्तेः। ऐर्षिष्यत्॥ **इति णिजन्तप्रक्रिया**॥

**धातोः कर्मणः समानकर्तृकादिच्छायां वा।३।१।७।** इषिकर्मणो धातोरिषिणैककर्तृकात्सन्वेच्छायाम्। पठ व्यक्तायां वाचि। इट्। **सन्यङोः।६।१।९।** सन्नन्तस्य यङन्तस्य च प्रथमस्यैकाचो द्वे स्तोऽजादेस्तु द्वितीयस्य। 'सन्यतः'। पठितुमिच्छति पिपठिषति। कर्मणःकिम्। गमनेनेच्छति इति करणान्माभूत्। समानकर्तृकात्किम्।शिष्याः पठन्त्विवतीच्छति गुरुः। वाग्रहणाद्वाक्यमपि। 'शैषिकान्मतुवर्थीयाच्छैषिको मतुवर्थिकः।सरूपः प्रत्ययो नेष्टः सनन्तान्न सनिष्यते' तेन पिपठिषितुमिच्छतीति वाक्यमेव। 'लुङ्सनोर्घस्लृ'। **सः स्यार्द्धधातुके।७।४।४९।** सस्य तः स्यात्सादावार्द्धधातुके। अत्तुमिछति जिघत्सति। एकाच इति नेट्। **अज्झनगमांसनि।६।४।१६।** अजन्तानां हन्तेरजादेशगमेश्च दीर्घो झलादौ सनि। **इको झल्।१।२।१०।** इगतन्ताज्झलादिः सन्कित्। कर्तुमिच्छति चिकीर्षति। जिघांसति। **सनि च।२।४।४७।** इणो गमिः स्यात्सनि न तु बोधने। जिगमिषति। बोधने तु प्रतीषिषति। **इङश्च।२।४।४८।** गमिः सनि। अधिजिगांसते। **रुदविदमु-**

---

१ इहसनीत्येव सूत्रे कृते दीर्घश्रुत्योपस्थितेन अच इत्यनेनाङ्गस्य विशेषणादजन्ताङ्गस्य दीर्घः इत्यर्थे चिचीषतीत्यादि सिद्ध्यति। ततो हनिगम्योरित्यपरे च कृते जिघांसतीत्यपि सिद्ध्यति।एवं चाज्ग्रहणमतिरिच्यमानं गमेर्विशेषणं तेन गम्लृगताविरयस्य नात्रग्रहणं किन्तु 'सनिच' 'इङश्च' इति सूत्राभ्यां विहितस्य इण्इङोरादेशस्य ग्रहणम्। तदाह। अजादेशगमेश्चेति।

**रुदविदमुषग्रहिस्वपिप्रच्छः संश्च ।१।२।८।** एभ्यः सन् क्त्वा च कितौ स्तः। रुरुदिषति । विविदिषति । मुमुषिषति । **सनि ग्रहगुहोश्च ।७।२।१२।** ग्रहेर्गुहेरुगन्ताच्च सन इण्न । जिघृक्षति **हलन्ताच्च ।१।२।१०।** इक्समीपाद्धलः परो झलादिः सन्कित् । गुहू संवरणे । जुघुक्षति।सुषुप्सति। **किरश्च पञ्चभ्यः ।७।२।७५।** कॄ गॄ दृ धृङ् प्रच्छ एभ्यः सन इट् । पिपृच्छिषति।चिकरिषति।जिगरिषति । जिगलिषति'अन्तेटो दीर्घो नेष्टः' । **पूर्ववत्सनः ।१।३।६२।** सनः पूर्वो योधातुस्तेन तुल्यं सन्नन्तादप्यात्मनेपदं स्यात् । दिदरिषते । दिधरिषते । बुभूषति । **सनीवन्तर्द्धभ्रस्जदंभुश्रिस्वृयूर्णुभरज्ञपिसनाम् ।७२।४९।** इवन्तेभ्य ऋधादिभ्यश्च सन इड्वा । **च्छ्वोः शूडनुनासिके च।६।४।१९।** सतुक्कस्य छस्य वस्य च क्रमात् श ऊठ् एतावादेशौ स्तोऽनुनासिके क्वौ झलादौ क्ङिति च । यण् । द्वित्वम् । दुद्यूषति । दिदेविषति । **स्तौतिण्योरेव षण्यभ्यासात् ।८।३।६१।** अभ्यासेणः परस्य स्तौतिण्यन्तयो रेव सस्य षः षभूते सनि नान्यस्य । तुष्टूषति । सिसाधयिषति । स्तौतिण्योः किम् । सुस्यूषति । सिसेविषति । **आप्ज्ञप्यृधामीत्।७।४।५८।**एषामच ईत्स्यात्सादौ सनि । **अत्र लोपोऽभ्यासस्य।७।४।५६।** सनिमीमेत्यारभ्य य-

१ इह जगृह स इतिस्थिते ' ढोढे ' इति ढत्वे ' षढो, इति कत्वं प्राप्तं तस्यासिद्धत्वात्पूर्वं भष्भावः पश्चात्कत्वषत्वे । २ इदंसतुक्कस्यानुकरणम् तकारस्य चुत्वेन चकारः । अस्मादेव सतुक्कग्रहणात् 'अकृतव्यूहाः पाणिनीयाः' इति परिभाषा अनित्या अन्यथा विच्छ प्रच्छिभ्यां नङ्प्रत्यये विश्न इत्यादौ अनयैव परिभाषया तुक् निवृत्तौ तद्ग्रहणं व्यर्थम् ।

दुर्क तत्राभ्यासलोपः। आप्तुमिच्छति ईप्सति। अर्द्धितुमिच्छति ईर्त्सति। अर्दिधिषति। बिभ्रज्जिषति। बिभर्ज्जिषति। बिभ्रक्षति। बिभर्क्षति। **दंभ इच्च।६।४।५६।** दंभेरच इत्स्यादीच्च सादौ सनि। हलन्तादित्यत्र हल्ग्रहणं जातिपरम्। तेन सनः कित्वान्नलोपः। धिप्सति। धीप्सति। दिदंभिषति। शिश्रीषति। शिश्रयिषति। उदोष्ठ्येत्युत्वम्। सुस्वूर्षति। सिस्वरिषति। युयूषति। यियविषति। 'विभाषोर्णोः' इति ङित्। ऊर्णुनुविषति। ऊर्णुनविषति। ऊर्णुनूषति। बिभरिषति। बुभूर्षति। जिज्ञपयिषति। ज्ञीप्सति। सिसनिषति। सिषासति। ( आशङ्कायां सन्वक्तव्यः ) श्वा मुमूर्षति। ( तनिपतिदरिद्रातिभ्यः सनो वेट् वाच्यः )। तितनिषति। **तनोतेर्विभाषा।६।४।१।** उपधाया दीर्घो झलादौ सनि। तितांसति। तितंसति। कूलं पिपतिषति। **सनि मीमाघुरभलभशकपतपदामच इस्।७।४।५४।** सादौ सनि। अभ्यासलोपः। पित्सति। दिदरिद्रिषति। दिदरिद्रासति। **मुचोऽकर्मकस्य गुणो वा ७।४।५७।** सादौ सनि। अभ्यासलोपः। मुमुक्षते। मोक्षते वा वत्सः स्वयमेव। अकर्मकस्य किम्। मुमुक्षति वत्सं कृष्णः। **इट् सनि वा।७।२।४१** वृङ्वृञ्भ्यामृदन्ताच्च सन इड् वा। विवरिषते। विवरीषते। वुवूर्षते। विवरिषति। तितरिषति। तितरीषति। तितीर्षति। **स्मिपूङ्रञ्ज्वशां**

---

१ इडभावे 'अज्झनगमां' इति दीर्घः। इड्विकल्पस्तु 'सनीवन्तर्ध'—इत्यनेन। २ एकश्वविषया मरणशङ्केति बोधः। 'पूर्ववत्सनः' इत्यात्मनेपदं त्विह न भवति 'शदेः शितः' 'म्रियतेः'—इति सूत्रद्वये सनो न इत्यनुवर्त्य वाक्यभेदेन व्याख्यानात्। ३ 'हलन्ताच्च' इति कित्वेन गुणाप्राप्ते विधिरयम्।

सनि ।७।२।७४। स्मिङ् पूङ् ऋ अञ्जू अशू एभ्यः सन इट् । सिस्मयिषते । पिपविषते । अरिरिषति । अञ्जिजिषति । अशिशिषति । गुप गोपने । तिज निशाने । कित निवासे रोगापनयने च । मान पूजायाम् । बध बन्धने । दान खण्डने । शान तेजने । गुप्तिज्किद्भ्यः सन् ।३।१।५। मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य ।३।१।६। सूत्रद्वयोक्तेभ्यः सन्मानादीनामभ्यासस्येकारस्य दीर्घश्च । गुपेर्निन्दायाम् । तिजेः क्षमायाम् । कितेर्व्याधिप्रतीकारे निग्रहे अपनयने नाशने संशये च । मानेर्जिज्ञासायाम् । बधेश्चित्तविकारे । दानेरार्जवे । शानेर्निशाने । गुपिप्रभृतयः किद्भिन्ना निन्दाद्यर्थका एवाऽनुदात्तेतः । दानशानौ तु स्वरितेतौ । एष्वर्थेष्वेते नित्यसन्नन्ताः । अर्थान्तरे त्वननुबन्धकाश्चुरादयः । अनुबन्धस्य केवलेऽचरितार्थत्वात्सन्नन्तात्पदव्यवस्था । धातोरित्यविहितत्वात्सनोऽत्र नार्द्धधातुकत्वम् तेनेड्गुणौ न । जुगुप्सते । तितिक्षते । चिकित्सति । मीमांसते । बीभत्सते । दीदांसति । दीदांसते । शीशांसति शीशांसते । णिचि तु । गोपयति । गोपयते । इतिसन्नन्तप्रक्रिया ।

धातोरेकाचो हलादेः क्रियासमभिहारे यङ् ।३।१।२२। पौनःपुन्ये भृशार्थे च द्योत्ये धातोरेकाचो हलादेर्यङ् । गुणो यङ्लुकोः । ७।४।८२। अभ्यासस्य । ङिदन्तत्वादात्मनेपदम् । पुनः पुनरतिशयेन वा भवति । बोभूयते । बोभूयां चक्रे । अबोभूयिष्ट । धातोः किम् ।

---

१ अत्र स्मिङ् ऋ अनयोरनिट्त्वात्पूङः 'सनिग्रह'—इत्यनेन निषेधात् अप्राप्ते अञ्जू अशू अनयोश्च ऊदित्वाद्विकल्पे प्राप्ते अनेन सर्वेषामपि नित्यमिट् विधीयते ।

आर्द्धधातुकत्वं यथा स्यात् । तेन ब्रुवो वचिरित्यादि । एकाचः किम् । पुनः पुनर्जागर्त्ति । हलादेः किम् । भृशमीक्षते । **नित्यं कौटिल्ये गतौ ।३।१।२३।** गत्यर्थात्कौटिल्ये एव यङ् न तु क्रियासमभिहारे । **दीर्घोऽकितः ।७।४।८३।** अकितोऽभ्यासस्य दीर्घो यङ्लुकोः । कुटिलं व्रजति वाव्रज्यते । **यस्य हलः ।६।४।४९।** हलः परस्य यस्य लोपः स्यादार्द्धधातुके । 'आदेः परस्य' । 'अतो लोपः' । वाव्रजांचक्रे । वाव्रजिता । **रीङ् ऋतः ७।७।२७।** अकृद्यकारे असार्वधातुकयकारे च्वौ च परे ऋदन्ताङ्गस्य रीङादेशः । डुकृञ् करणे । चेक्रीयते । **रीगृदुपधस्य च ।७।४।९०।** धातोरभ्यासस्य रीगागमो यङ्यङ्लुकोः । वरीवृत्यते । वरीवृतांचक्रे । वरीवृतिता । 'क्षुभ्नादिषु च' । नरीनृत्यते । जरीगृह्यते । ( रीगृत्वत इति वाच्यम् ) । वरीवृश्च्यते । **लुपसदचरजपजभदहदशगॄभ्यो भावगर्हायाम् ।३।१।२४।** एभ्यो धात्वर्थगर्हायामेव यङ् । गर्हितं लुपति लोलुप्यते । सासद्यते । **चरफलो-**

---

१ अत्र 'सर्वेभ्यो ब्राह्मणेभ्यो दधिदीयतां तक्रं कौण्डिन्याय' इत्यत्र यथा कौण्डिन्यस्य तक्रदानविधानेन दधिदानस्यबाधः एवमत्रापि कौटिल्ये यङ्विधानेन क्रियासमभिहारे यङ् न संभवतीति नित्यग्रहणं व्यर्थं सदस्य न्यायस्यानित्यतां ज्ञापयति तेन 'गतिबुद्धिपूजार्थेभ्यश्च' इति सूत्रेण वर्तमाने विहितोऽपि क्तो भूते च भवति तेन 'पूजितोयः सरासुरैः' इत्यत्र 'क्तस्यच वर्तमाने' इति षष्ठ्यभावेऽपि न किंचिद्बाधकम् । २ अस्मादकिद्ग्रहणात् 'अभ्यास विकारेषु बाध्यबाधकभावोनास्ति' इति ज्ञाप्यते । एतत्तु यंयम्यते इत्यादौ दीर्घाभावार्थम् । परंतु तत्र नुक्कृतेऽनजन्तत्वाद्दीर्घप्राप्तिरेव नास्ति इति तद्व्यर्थम् । तेन अजीगणत् इत्यत्र 'ई च गणः' इतीत्वं हलादिः शेषं न बाधते ।

श्च।७।४।८७। अनयोरभ्यासस्यातो नुक् यङ्लुकोः । नुगित्यनेनानुस्वारो लक्ष्यते । (स च पदान्तवद्वाच्यः) । वापदान्तस्येति यथास्यात् । **उत्परस्यातः ७।४।८८।** चरफलोरभ्यासात्परस्यात उत्स्याद्यङ्लुकोः । हलिचेति दीर्घः । चञ्चूर्यते । चंचूर्यते । पम्फुल्यते । पंफुल्यते । **जपजभदहदशभजपशां च ।७।४।८६।** एषामभ्यासस्य नुक् यङ् लुकोः । गर्हितं जपति । जञ्जप्यते । इत्यादि । **ग्रो यङि ।८।२।२०।** गिरतेरेफस्य लत्वं यङि । गर्हितं गिलति । जेगिल्यते । ( सूचिसूत्रिमूत्र्यटयर्त्यशूर्णोतिभ्यो यङ् वाच्यः ) । सोसूच्यते । अट पट गतौ । अटाट्यते । **यङि च ।७।४।३०।** अर्त्तेः संयोगादेश्च ऋदन्ताङ्गस्य गुणो यङि । यकारपरस्य रेफस्य न द्वित्वनिषेधः । अरार्यते इति भाष्योदाहरणात् । अरारिता । अशाश्यते । ऊर्णोनूयते । **सिचो यङि ।८।३।११२।** सस्य षो न । निसेसिच्यते[१] । **न कवतेर्यङि।७।४।६३।**अभ्यासस्य चुत्वं न । कोकूयते । कौतिकुवत्योस्तु । चोकूयते । ( हन्तेर्हिंसायां यङि घ्नीभावो वाच्यः ) । जेघ्नीयते । हिंसायां किम् । **नुगतो नुनासिकान्तस्य ।७।४।८५।** अदन्ताभ्यासस्य नुक् यङ्लुकोः । जंगम्यते । **अयङ् यि क्ङिति ।७।४।२१।** शीङः । शाशय्यते । **स्वपिस्यमिव्येञां यङि ।६।१।१९।** संप्रसारणम् । सोषुप्यते । सेसिम्यते । वेवीयते । **न वशः ।६।१।२०।** संप्रसारणम् । वावश्यते । **चायः की ।६।१।२१**

---

१ अत्राभ्यासस्य 'उपसर्गात्सुनोति'-इत्यादिना षत्वं प्राप्तं अभ्यासात्परस्य तु 'स्थादिष्वभ्यासेन'-इति प्राप्तम् ।

चेकीयते । **ई घ्राध्मोः ।७।४।३१।** जेघ्रीयते । देध्मीयते । **नीग्वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम् ।७।४।८५।** एषामभ्यासस्य नीग्यङ्लुकोः । अकित इत्युक्तेर्न दीर्घः । वनीवच्यते । सनीस्रस्यते । दनीध्वस्यते । बनीभ्रस्यते । चनीकस्यते । पनीपत्यते । पनीपद्यते । चनीस्कद्यते । इतियङन्तप्रक्रिया ।

**यङोऽचि च ।२।४।७४।** यङोऽचि प्रत्यये लुक् स्यात् । चकारात्तं विनापि क्वचित् । अनैमित्तिकोयमन्तरङ्गत्वादादौ भवति । ततः प्रत्ययलक्षणेन यङन्तत्वाद्द्वित्वम् । अभ्यासकार्यम् । धातुत्वाल्लडादयः । 'शेषात्कर्त्तरि परस्मैपदम्' । चर्करीतं चेत्यदादौ पाठाच्छपो लुक् । **यङो वा ।७।३।९४।** यङन्तात्परस्य हलादेः पितः सार्वधातुकस्य ईड्वा स्यात् । भूसुवोरिति निषेधो यङ्लुकि भाषायां न । 'बोभूतुतेतिक्ते' इति छन्दसि निपातनात् । बोभवीति । बोभोति । बोभूतः । बोभुवति । बोभवीषि । बोभोषि । बोभूथः । बोभूथ । बोभवीमि । बोभोमि । बोभूवः । बोभूमः । बोभवांचकार । बोभवांबभूव । बोभवामास । बोभविता । बोभविष्यति । बोभवीतु । बोभोतु । बोभूतात् । बोभूताम् । बोभूवतु । बोभूहि । बोभवानि । अबोभवीत् । अबोभोत् । अबोभूताम् । अबोभवुः । बोभूयात् । बोभूयाताम् । बोभूयुः । बोभूयात् । बोभूयास्ताम् । गातिस्थेति सिचो लुक् । यङोवेतीट्पक्षे गुणं

---

१ 'सन्यङोः' इति सूत्रे सन्यङोरिति षष्ठी न तु सप्तमी । अन्यथात्र लुकालुप्तत्वेन प्रत्ययलक्षणाप्रवृत्तेर्द्वित्वं न स्यादिति भावः ।

बाधित्वा नित्यत्वाद्वुक् । अबोभूवीत् । अबोभोत् । अबोभूताम् । अबोभूवुः । अबोभविष्यत् । जङ्गमीति । जङ्गन्ति । अनुदात्तेत्यनुनासिकलोपः । जङ्गतः । जंग्मति । 'म्वोश्च' । जङ्गन्वः । शितपा शपानुबन्धेन निर्दिष्टं यद्गणेन च । यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकि । १ । इति वचनान्न इण्निषेधः । जङ्गमिता । अनुनासिकलोपस्याभीयत्वेनासिद्धत्वान्नहेर्लुक् । जङ्गहि । 'मोनोधातोः' । अजङ्गमीत् । अनुबन्धनिर्देशान्न च्लेरङ् । अजङ्गमीत् । **रुग्रिकौ च लुकि ७।४।९१।** ऋदुपधस्यधातोरभ्यासस्य रुक् रिक् रीक् एते स्युर्यङ्लुकि **ऋतश्च ७।४।९२।** ऋदन्तधातोरपि तथा । वर्वृतीति । वरिवृतीति । वर्वर्त्ति । वरिवर्त्ति । वरीवर्त्ति । वर्वृत्तः ३ । वर्वृतति ३ । वर्वर्त्तामास ३ । वर्वर्तिता ३ । गणनिर्दिष्टत्वान्न वृद्भ्यश्चतुर्भ्य इति न । वर्वर्त्तिष्यति ३ । अवर्वृतीत् ३ । अवर्वर्त् ३ । सिपि दश्चेति रुत्वपक्षे रोरि । अवर्वाः ३ । गणनिर्दिष्टत्वादङ् न । अवर्वर्तीत् ३ । चर्करीति । चरिकरीति । चरीकरीति । चर्कर्ति । चरिकर्त्ति । चरीकर्त्ति । चर्कृतः ३ । चर्क्रति ३ । चर्करांचकार ३ । चर्करिता ३ । अचर्करीत् ३ । अचर्कः ३ । चर्क्रियात् ३ । आशिषि रिङ् । चार्क्रियात् ३ । अचर्कारीत् ३ । ऋतश्चेति तपरत्वान्नेह । चाकर्त्ति । चाकरीति । चाकीर्त्तः । चाकीर्हि । चाकराणि । अचाकरीत् । अचाकः । अचाकीर्त्ताम् । अचाकरुः । अचाकारीत् । अचाकारिष्टाम् । तातरीति । तातर्तीत्यादि । इति यङ्लुगन्ताः ॥

**सुप आत्मनः क्यच्** ।३।१।८। इषि[1]कर्मण एषितुरात्मसंबन्धिनः सुबन्तादिच्छायामर्थे क्यज्वा । **सुपो धातुप्रातिपदिकयोः** ।२।४।७१। एतयोरवयवस्य सुपो लुक् स्यात् । **क्यचि च** ।७।४।३३। अवर्णस्य ईः । आत्मनः पुत्रमिच्छति पुत्रीयति । ( मान्तप्रकृतिकसुबन्तादव्ययाच्च क्यज्न ) । किमिच्छति । इदमिच्छति । स्वरिच्छति । **अशनायोदन्यधनाया बुभुक्षापिपासागर्द्धेषु** ।७।४।३४। एते क्यजन्ता निपात्यन्ते[2] । अशनायति । उदन्यति । धनायति । बुभुक्षादौ किम् । अशनीयति । उदकीयति । धनीयति । **अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि**।७।१।५१।एषां क्यच्यसुक् । (अश्ववृषयोर्मैथुनेच्छायाम्) । अश्वस्यति वडवा । वृषस्यति गौः । (क्षीरलवणयोर्लालसायाम् ) । क्षीरस्यति बालः । लवणस्यत्युष्ट्रः । ( सर्वप्रातिपदिकानां क्यचि लालसायां सुगसुकौ ) । दधिस्यति । दध्यस्यति । **नः क्ये** १।४।१५। क्यचि क्यङि च नान्तमेव पदं नान्यत् । राजीयति[3] । नान्तमेवेति किम् । वाच्यति[4] । ' हलि च ' । गीर्यति । पूर्यति । धातोरि-

---

१ परस्य पुत्रमिच्छतीत्यत्रातिप्रसङ्गवारणाय सूत्रे आत्मशब्द उपात्तः स तु स्वशब्दपर्यायः स्वस्येत्याकाङ्क्षायामिच्छायाः सन्निधापितत्वादेषितैव गृह्यत इत्याह । एषितुरिति । २ उदकशब्दस्योदन्भावोऽन्ययोर्दीर्घ इत्यपि ज्ञेयम् । इह यः सद्य एव भोक्तुमशनमिच्छति यश्च पातुमुदकं यश्च धने सत्यपि पुनर्धनं तत्रैतान्युदाहरणानि । ३ पदत्वात् 'नलोपः प्रातिपदिक'—इति नलोपः । इह 'क्यचि च' इति ईत्वे कर्तव्ये नलोपस्यासिद्धत्वं न 'नलोपः सुप्स्वर'—इति नियमात् । ४ पदत्वाभवात् 'चोः कुः' इति कुत्वं नेति भावः ।

त्येव। तेनेहन। दिवमिच्छति दिव्यति। **क्यस्य विभाषा।६।४।५०।** हलः परयोः क्यच्क्यङोर्लोपो वार्द्धधातुके। 'आदेः परस्य'। 'अतो लोपः'। तस्य स्थानिवद्भावान्नोपधाया गुणः। समिधिता। समिध्यिता। **काम्यच्च ।३।१।८।** उक्तविषये काम्यच्। पुत्रमात्मन इच्छति पुत्रकाम्यति। पुत्रकाम्यिता। **उपमानादाचारे ।३।१।१०।** उपमानात्कर्मणः सुबन्तादाचारेऽर्थे क्यच्। पुत्रमिवाचरति पुत्रीयति छात्रम्। विष्णूयति द्विजम्। (सर्वं प्रातिपदिकेभ्यः क्विब्वावक्तव्यः)। 'अतोगुणे'। कृष्णइवाचरति। कृष्णति। स्व इवाचरति। स्वति सस्वौ। **अनुनासिकस्य क्विझलोः क्ङिति ।६।४।१५।** अनुनासिकान्तस्योपधाया दीर्घः क्वौ झलादौ क्ङिति च। इदमिवाचरति। इदामति। राजेवाचरति। राजानति। इन्हन्निति नियमान्नेहोपधाया दीर्घः। पन्था इवाचरति। पथेनति। मथेनति। **कर्त्तुः क्यङ् सलोपश्च ।३।१।११।** उपमानात्कर्त्तुः सुबन्तादाचारेऽर्थे क्यङ् वा सान्तकर्तृवाचकस्य लोपो वा। क्यङ् वेत्युक्ते पक्षे वाक्यम्। * सन्नियोगशिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः * इति क्यङ्सलोपयोः सहैव प्रवृत्तिः। लोपश्च व्यवस्थितः। ओजसोप्सरसोर्नित्यमितरेषां विभाषया।

१ अत्र 'पुगन्त'-इति गुणापेक्षयान्तरङ्गत्वाद्दीर्घं कृत्वा पथीनति नथीनति इति रूपे सि० कौमुद्याम् रुक्ते। त एव युक्ते। तथाहि। अत्र 'इन्हन्'-इति नियमस्तु न प्रवर्तते। येषामित्रादीनां शावुपधादीर्घः क्रियते 'परमदण्डीनीत्यादौ' तेषामेव दण्डिन् वृत्रहन्नादीनां इन् हन्निति नियमः। पथ्यादीनामेषां तु शौ परतः सुपन्थानीत्यादौ दीर्घप्रवृत्तावपि 'इतोत्सर्वनाम'-इत्यत्वेऽत्र तत्समासेः।

कृष्णइवाचरति कृष्णायते। ओजायते। अप्सरायते। यशायते। यशस्यते। विद्वायते विद्वस्यते (आचारेऽवगल्भक्लीबहोडेभ्यः क्विब्वा वक्तव्यः) वाग्रहणाद्वाक्यमपि। अवगल्भादयः पचाद्यजन्ताः। क्विप्सन्नियोगेनानुदात्तत्वमनुनासिकत्वं चाचू प्रत्ययस्य प्रतिज्ञायते। तेन तङ्। अवगल्भते। क्लीबते। होडते। भूतपूर्वादप्यनेकाच आम्। एतद्वार्तिकारंभसामर्थ्यात्। अवगल्भांचक्रे। क्लीबांचक्रे। होडांचक्रे। उपसर्गसमानाकारं पूर्वपदं धातुसंज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक् क्रियते। तेन गल्भशब्दात्प्रागट्। अवागल्भत। अवागल्भिष्ट। **लोहितादिडाज्भ्यः क्यष्।३।१।१३। वा क्यषः १।३।९०।** क्यषन्तात्परस्मैपदम् वा। [3]अलोहितो लोहितो भवति। लोहितायति। लोहितायते। ननूच्चारणसामर्थ्यात्काम्यच इव क्यषोपि ककारः कुतो न श्रूयते। तस्यभाष्ये प्रत्याख्यानात्। पटपटायति। पटपटायते। **कष्टाय क्रमणे।३।१।१४।** चतुर्थ्यन्तात्कष्टशब्दादुत्साहेऽर्थे क्यङ्। कष्टाय क्रमते कष्टायते।

---

१ एतच्च चुरादौ 'संग्राम युद्धे' इति पठ्यते तत्सामर्थ्याज्ज्ञाप्यते तथाहि तत्र संग्रामेति प्रातिपदिकम्। तस्मात्तत्करोतीति णिच् सिद्धः णिच् सन्नियोगेन च संग्रामेति मकारोत्तरं अनुबन्धसबन्धः तस्मादात्मनेपदमपि सिद्धम् युद्धे यो ग्रामशब्द इत्युक्तेऽपि केवलग्रामशब्दस्य युद्धे प्रयोगाभावात्संग्रामशब्दे लब्धे विशिष्टपाठस्य वैयर्थ्यात्स एतज्ज्ञापयतीति भावः। २ लोहित चरित नील फेन मद्र हरित दास मन्द। लोहितादिराकृतिगणः। ३ अत्र 'भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः' इति पूर्वसूत्रे अच्वेरिति निषेधात् अभूत तद्भावे इति लभ्यते तदस्मिन्नपि सूत्रे अनुवर्तते तच्च लोहितशब्दस्यैव विशेषणम् न तु डाचो असंभवात् तस्येदमुदाहरणम्।

पापं कर्तुमुत्सहत इत्यर्थः । ( सत्रकक्षकष्टकृच्छ्रगहनेभ्यः कण्वचिकीर्षायाम् )। कण्वं पापं चिकीर्षति सत्रायते। कक्षायते । **कर्मणो रोमन्थतपोभ्यां वर्त्तिचरोः ।३।१।१५।** कर्मीभूताभ्यां रोमन्थतपोभ्यां क्रमेण वर्त्तनायां चरणे चार्थे क्यङ् स्यात्। रोमन्थं वर्त्तयति रोमन्थायते । ( हनुचलन इति वाच्यम् )। चर्वितस्याकृष्य पुनश्चर्वणमित्यर्थः। नेह । कीटो रोमन्थं वर्त्तयति । ( तपसः परस्मैपदं च )। तपश्चरति तपस्यति । **वाष्पोष्मभ्यामुद्वमने ।३।१।१६।** बाष्पमुद्वमति बाष्पायते। ऊष्मायते । ( फेनाच्चेति वक्तव्यम् ) । फेनायते। **शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे ।३।१।१७।** एभ्यः कर्मभ्यः करोत्यर्थे क्यङ्। शब्दं करोति शब्दायते। ( सुदिनदुर्दिननीहारेभ्यश्च ) । सुदिनायते । दुर्दिनायते । नीहारायते । प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च । प्रातिपदिकाद्धात्वर्थे णिच् स्यादिष्ठे यथा प्रातिपदिकस्य पुंवद्भावरभावटिलोपविन्मतुब्लोपयणादिलोपप्रस्थस्फाद्यादेशभसंज्ञास्तद्वण्णावपि स्युः। पटुमाचष्टे पटयति । परत्वाद्वृद्धौ सत्यां टिलोपः। अपीपटत्। णौचङीत्यत्र भाष्ये तु वृद्धेर्लोपो बलीयानिति स्थितम् । अपपटत् । **पुच्छभाण्डचीवराण्णिङ् ।३।१।२०।** ( पुच्छादुदसने व्यसने पर्यसने च )। विविधं विरुद्धं चोत्क्षेपणं व्यसनम्। उत्पुच्छयते । परिपुच्छयते। ( भाण्डात्समाचयने ) । संभाण्डयते । समवभा-

---

१ सत्रादयो वृत्तिविषये पापार्थाः । तेभ्यो द्वितीयान्तेभ्यश्चिकीर्षायां क्यङ्। तस्मादत्रास्वपदविग्रहः । तदाह । पापंचिकीर्षतीति ।

ण्डत । ( चीवरादर्जने परिधाने च )। संचीवरयते भिक्षुः। **मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच् ।३।१।२१।** करणार्थे । मुण्डं करोति मुण्डयति । ( व्रताद्भोजनतन्निवृत्त्योः ) । पयः शूद्रान्नं वा व्रतयति ( वस्त्रात्समाच्छादने )। संवस्त्रयति । ( हल्यादिभ्यो ग्रहणे )। हलिकल्योरदन्तत्वं च निपात्यते। हलिं कलिं वा गृह्णाति हलयति। कलयति । महद्धलं हलिः । कृतं गृह्णाति कृतयति । तूस्तानि विनिहन्ति वितूस्तयति । तूस्तं केशा इत्येके । जटीभूताः केशा इत्यन्ये । पापमित्यपरे । ( सत्यार्थवेदानामापुग् वक्तव्यः ) सत्यापयति । अर्थापयति । वेदापयति । पाशं विमुंचति विपाशयति। रूपंपश्यति रूपयति । वीणयोपगायति उपवीणयति । तूलेनानुकुष्णात्यनुतूलयति । तृणाग्रं तूलेनानुघट्टयतीत्यर्थः ।श्लोकैरुपस्तौत्युपश्लोकयति । सेनयाभियाति अभिषेणयति । लोमान्यनुमार्ष्टचनुलोमयति । त्वच संवरणे । पचाद्यच् ।त्वचं गृह्णाति त्वचयति । वर्मणा संनह्यति संवर्णयति । वर्णंगृह्णाति वर्णयति । चूर्णैरवध्वंसते ।अवचूर्णयति । **इति नामधातुप्रक्रिया ।**

**कण्ड्वादिभ्यो यक् ।३।१।२७।** एभ्यो धातुभ्यो नित्यं यक्[१]

---

१ द्विधाहि कण्ड्वादयः। धातवः प्रातिपदिकानि च यग्विधानाद्धातुत्वं कण्डूञ् इति दीर्घपाठात् प्रातिपदिकत्वम् अन्यथा ह्रस्वपाठे 'अकृत्'-इति दीर्घे इष्टरूपसिद्धेः । धातुत्वप्रातिपदिकत्वयोः फलं तु यकि परतः कित्वाद्गुणनिषेधः । कण्डूरित्यादियमहितरूपे दीर्घत्वं च सुस्थम् ।

स्यात् स्वार्थे । कण्डूञ् गात्रविघर्षणे । कण्डूयति । कण्डूयते । इत्यादि ॥ इति **कण्ड्वादिप्रक्रिया** ॥ **कर्त्तरि कर्मव्यतिहारे** ।१।३।१४। क्रियाविनिमये द्योत्ये कर्त्तर्यात्मनेपदं स्यात् । व्यतिलुनीते । अन्यस्य योग्यं लवनं करोतीत्यर्थः । **न गतिहिंसार्थेभ्यः**।१।३।१५। व्यतिगच्छन्ति । व्यतिघ्नन्ति । ( हरतेरप्रतिषेधः ) । संप्रहरन्ते राजानः। **इतरेतरान्योन्योपपदाच्च**।१।३।१६। (परस्परोपपदाच्चेति वक्तव्यम्।इतरेतरस्यान्योन्यस्य परस्परस्य वा व्यतिलुनन्ति । **नेर्विशः**।१।३।१७।निविशते । **परिव्यवेभ्यः क्रियः** ।१।३।१८। परिक्रीणीते । विक्रीणीते। अवक्रीणीते। **विपराभ्यां जेः** ।१।३।१९। विजयते । पराजयते । **क्रीडोऽनुसंपरिभ्यश्च** ।१।३।२१। चादाङः । अनुक्रीडते । संक्रीडते। आक्रीडते।

---

१ आदिशब्दादन्येऽपिज्ञेयाः । ते यथा मन्तु अपराधे । वल्गुपूजामाधुर्ययोः । लेट् लोट् धौर्त्ये पूर्वभावे स्वप्ने च । लेला दीप्तौ । इरस् इरज् इर्ष्यायाम् । उषस् प्रभातीभावे । वेद धौर्त्येस्वप्ने च । मेधा आशुग्रहणे कुषुभक्षेपे । मगध परिवेष्टने । नीच दास्ये । तन्तस् पम्पस् दुःखे । सुखदुःख तत्क्रियायाम् । सपर पूजायाम् । अरर आराकर्मणि । भिषज् चिकित्सायाम् । भिष्णज् उपसेवायाम् । इषुध शरधारणे । चरण वरण गतौ । चुरण चौर्ये । तुरण त्वरायाम् । भुरण धारणपोषणयोः । गद्गद वाक्स्खलने । एला केला खेला विलासे । लिट् अल्पकुत्सनयोः । लाटजीवने । हृणीङ् रोषणे लज्जायांच । महीङ पूजायाम् । रेखा श्लाघासादनयोः । द्रवस् परितापपरिचरणयोः । तिरस् अन्तर्धौ । अगद् नीरोगत्वे । उरस् बलार्थः । तरण गतौ । पयस् प्रसृतौ । संभुयस् प्रभूतभावे । अम्बर संवर संवरणे । आकृतिगणोऽयम् । २ शूद्रस्य योग्यं छेदनादिकं ब्राह्मणः करोतीत्यर्थः। ३ अर्थशब्दः प्रत्येकमभिसम्बध्यते । अत्रार्थग्रहणसामर्थ्यात् येशब्दान्तरमनपेक्ष्य गतिहिंसयोर्वर्तन्ते तएव गृह्यन्ते हरतिस्तु उपसर्गवशाद्धिंसायां प्रवर्तते इति 'हरतेरप्रतिषेधः' इति वार्त्तिकमर्थग्रहणलभ्यमेव ।

(समोऽकूजने) संक्रीडते कूजने तु संक्रीडति चक्रम् । आगमेः क्षमायाम् । ण्यन्तस्येदं ग्रहणम् । आगमयस्व तावत् । मात्वरिष्ठा इत्यर्थः । (शिक्षेर्जिज्ञासायाम् । धनुषि शिक्षते । धनुर्विषयज्ञाने शक्तो भवितुमिच्छतीत्यर्थः । **वृत्तिसर्गतायनेषु क्रमः ।१।३।३८।** वृत्तिरप्रतिबन्धः । क्रचि क्रमते बुद्धिः । सर्गउत्साहः । अध्ययनाय क्रमते । क्रमन्तेस्मिञ्छास्त्राणि । स्फीतानि भवन्तीत्यर्थः । **आङ उद्गमने ।१।३।४०।** आक्रमते सूर्यः । (ज्योतिरुद्गमन इति वाच्यम) । नेह । आक्रामति धूमो हर्म्यतलात् । **वेः पादविहरणे ।१।३।१४०।** साधुविक्रमते वाजी । **प्रोपाभ्यां समर्थाभ्याम् ।१।३।४२।** प्रारंभेऽनयोस्तुल्यार्थता । प्रक्रमते । उपक्रमते । समर्थाभ्यां किम् । प्रक्रामति । गच्छतीत्यर्थः । उपक्रामति । आगच्छतीत्यर्थः । **अनुपसर्गाद्वा । १।३।४३।** क्रामति । क्रमते । **अपह्नवे ज्ञः।१।३।४४।** शतमपजानीते । अपलपतीत्यर्थः । **अकर्मकाच्च ।१।३।४५।** सर्पिषो जानीते । सर्पिषोपायेन प्रवर्तत इत्यर्थः । **समवप्रविभ्यः स्थः ।१।३।२२।** संतिष्ठते । अवतिष्ठते । प्रतिष्ठते । वितिष्ठते । (आङः प्रतिज्ञायामुपसंख्यानम) । शब्दं नित्यमातिष्ठते । **प्रकाशनस्थेयाख्ययोश्च ।१।२।२३।** गोपी कृष्णाय तिष्ठते । आशयं प्रकाशयतीत्यर्थः । 'संशय्यकर्णादिषु तिष्ठते यः । कर्णादी-

---

१ अत्र 'शिक्ष विद्योपादाने' इतिश्वादिर्नगृह्यते तस्यानुदात्तेत्त्वादेवात्मनेपदसिद्धेः किन्तु शकेः सन्नन्तस्येति ध्वनयन्नाह । धनुर्विषये इत्यादिना । २ प्रकाशनं ज्ञापनं । स्थेयो विवादपदनिर्णेता तिष्ठन्तेस्मिन्विवादपदनिर्णयार्थमिति विग्रहः।'स्थेयो विवादस्थानस्य निर्णेतरि पुरोहिते' । इतिमेदिनी । तदाह कर्णादीन्निर्णेतृत्वेनेति ।

न्निर्णेतृत्वेनाश्रयतीत्यर्थः । **उदोऽनूर्ध्वकर्मणि ।१।३।२४।** मुक्तावुत्तिष्ठते । अनूर्ध्वेति किम् । पीठादुत्तिष्ठति । **उपान्मन्त्रकरणे ।१।३।२५।** आग्नेय्याग्नीध्रमुपतिष्ठते । मन्त्रकरणे किम् । भर्तारमुपतिष्ठति यौवनेन । ( उपाद्देवपूजासंगतिकरणमित्रकरणपथिष्विति वाच्यम् ) । आदित्यमुपतिष्ठते । गङ्गायमुनामुपतिष्ठते । रथिकानुपतिष्ठते । मित्रीकरोतीत्यर्थः । पन्थाः स्रुघ्नमुपतिष्ठते । प्राप्नोतीत्यर्थः । ( वा लिप्सायाम् ) । भिक्षुकः प्रभुमुपतिष्ठति उपतिष्ठते वा । **उद्विभ्यां तपः ।१।३।२७।** अकर्मकादित्येव । उत्तपते । वितपते । दीप्यत इत्यर्थः । ( स्वाङ्गकर्मकाच्चेति वक्तव्यम् ) । उत्तपते वितपते पाणिम् । नेह । सुवर्णमुत्तपति । **आङो यमहनः ।१।३।२८।** आयच्छते । आहते । अकर्मकात्स्वाङ्गकर्मकादित्येव । नेह । परस्य शिर आहन्ति । **आत्मनेपदेष्वन्यतरस्याम् ।२।४।४४।** हनो वधादेशो वा लुङि । आवधिष्ट । आवधिषाताम् । आवधिषत । **हनः सिच् । १।२।१४।** कित् । अनुनासिकलोपः । आहत । आहसाताम् । आहसत । **यमो गन्धने ।१।३।१५।** सिच् कित् । गन्धनं सूचनं परदोषाविष्करणम् । उदायत । गन्धने किम् । उदायंस्त पादम् । आकृष्टवानित्यर्थः । **समो गम्यृच्छिभ्याम् ।१।२।१९।** अकर्मकाभ्यामित्येव । संगच्छते । **वा गमः ।१।२।१३।** गमः परौ झलादी लिङ्सिचौ वा कितौ स्तः । संगसीष्ट । संगंसीष्ट । समगत । समगंस्त । समृच्छते । अकर्मकाभ्यां

---

१ मन्त्रः करणं साधनं यत्र तन्मन्त्रकरणं स्तुतिरित्यर्थः । आग्नेय्याग्नीध्रमिति । अग्निदेवताकया ऋचा आग्नीध्रमग्निविशेषं स्तौतीत्यर्थः ।

किम्। ग्रामं संगच्छति। (विदिप्रच्छिस्वरतीनामुपसंख्यानम्)। वेत्तेरेव ग्रहणम्। संवित्ते। संविदाते। **वेत्तेर्विभाषा** ।७।१।७। वेत्तेः परस्यझादेशस्यातो रुडागमो वा। संविद्रते। संविदते। संपृच्छते। संस्वरते। अथास्मिन्नकर्मकाधिकारे हनिगम्यादीनां कथमकर्मतेति चेत्। शृणु। धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात्। प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया॥ १॥ वहति भारम्। नदी वहति। स्यन्दत इत्यर्थः। जीवति। नृत्यति। प्रसिद्धेर्यथा। मेघो वर्षति। कर्मणोऽविवक्षातो यथा। 'हितान्नयः संशृणुते स किंप्रभुः'। **संमाननोत्संजनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः** ।१।३।३६। शास्त्रे नयते। दण्डमुन्नयते। उत्क्षिपतीत्यर्थः। माणवक मुप[3]नयते। कर्मकरानुपनयते। करं विनयते। राज्ञे देयं भागं परिशोधयतीत्यर्थः। शतं विनयते। धर्मार्थं विनियुंक्त इत्यर्थः। (उपसर्गादस्यत्यूह्योर्वेति वाच्यम्)। बन्धान्निरस्यति निरस्यते। समूहति। समूहते। **उपसर्गाद्ध्रस्व ऊहतेः** ।७।४।२३। यादौ क्ङिति। ब्रह्म समुह्यात्। अग्निं समुह्य। **निसमुपविभ्यो ह्वः** ।१।३।३०। निह्वयते।

---

१ विद धातुर्हि ज्ञाने सत्तायां प्राप्तौ विचारणे इति चतुर्ष्वर्थेषु अदादौ दिवादौ तुदादौ रुधादौच्च वर्तते तत्र दिवादिः रुधादिश्च एतौ आत्मनेपदिनावेव तुदादिस्तु स्वरितेत्। अतस्तेषांग्रहणे फलाभावात्परिशेषाददादेरेव ग्रहणमितिभावः। २ अत्रोत्संजन ज्ञानविगणनव्ययानयतेरर्था ज्ञेयाःइतरे तु प्रयोगानुरोधात् ज्ञेयाः। शास्त्रेनयते इत्यस्य शास्त्रस्थं सिद्धान्तं शिष्येभ्यः प्रापयतीत्यर्थः।तेन शिष्यसंमाननं फलितम्। ३ उपनयन विधिना आत्मसमीपं प्रापयतीत्यर्थः। उपनयनपूर्वकेणाध्यापनेन हि उपनेतरि आचार्यत्वं गम्यते 'उपनीयददद्वेदमाचार्यः सउदाहृतः' इति स्मृतेः।

**स्पर्द्धायामाङः ।१।३।३१।** कृष्णश्चाणूरमाह्वयते स्पर्द्धायां किम् पुत्रमाह्वयति । **उदश्चरः सकर्मकात् ।१।३।५३।** धर्ममुच्चरते उल्लंघ्य गच्छतीत्यर्थः । **समस्तृतीयायुक्तात् ।१।३।५४।** रथेन संचरते । **दाणश्च सा चेच्चतुर्थ्यर्थे ।१।३।५५।** समो दाणस्तृतीयान्तेन युक्तादुक्तं स्यात्तृतीया चेच्चतुर्थ्यर्थे । दास्या संयच्छते कामी । **उपाद्यमः स्वकरणे ।१।३।५६।** स्वकरणं स्वीकारः । भार्यामुपयच्छते । **विभाषोपयमने ।१।२।१६।** यमः सिच् किद्वा विवाहेऽर्थे । रामः सीतामुपायत । उपायंस्त वा । उदवोढेत्यर्थः । **ज्ञाश्रुस्मृदृशां सनः ।१।३।५७।** सन्नन्तानामेषां प्राग्वत् । धर्मं जिज्ञासते । शुश्रूषते सुस्मूर्षते दिदृक्षते । **नाऽनोर्ज्ञः ।१।३।५८।** पुत्रमनुजिज्ञासति । **प्रोपाभ्यां युजेरयज्ञपात्रेषु ।१।३।६४।** प्रयुङ्क्ते । उपयुङ्क्ते । ( स्वराद्यन्तोपसर्गादिति वाच्यम् । उद्युङ्क्ते । नियुङ्क्ते । अयज्ञपात्रेषु किम् । द्वन्द्वं न्यञ्चिपात्राणि युनक्ति । **समः क्ष्णुवः ।१।३।३३।** संक्ष्णुते शास्त्रम् । **गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः ।१।३।३२।** गन्धनं हिंसा । उत्कुरुते । सूचयतीत्यर्थः । अवक्षेपणं भर्त्सनम् । श्येनोवर्तिकामुदाकुरुते । भर्त्सयत इत्यर्थः । हरिमुपकुरुते । सेवते । परदारान्प्रकुरुते । तेषुसहसा प्रवर्त्तते । एधोदकस्योपस्कुरुते । गुणमाधत्ते । कथाः

---

१ स्वकरणशब्देन भार्यास्वीकारो गृह्यत इत्यभिप्रेत्याह भार्यामित्यादि । २ एधशब्दोऽत्राकारान्तः । एधाश्च उदकं चेति विग्रहः । अयंहि 'अत्रोदैधौद्मप्रश्रयहिमश्रथाः' इति सूत्रे निपातितः । यद्वाएधः शब्दः सान्तः । उदकवाची च उकशब्दः । तथाच हलायुधः 'प्रोक्तं प्राज्ञैर्भुवनममृतं जीवनीयं दकं च' इति ।

प्रकुरुते । प्रकथयतीत्यर्थः । शतं प्रकुरुते । धर्मार्थं विनियुङ्क्ते । एषु किम् । कटं करोति ॥ इत्यात्मनेपदप्रक्रिया ॥

'शेषात्कर्त्तरि परस्मैपदम्' । श्वि । श्वयति । **विभाषा श्वेः** ।६।१।३०। संप्रसारणम् लिटि यङि च । शुशाव । शुशुवतुः । (श्वयतेर्लिटयभ्यासलक्षणप्रतिषेधः) । शिश्वाय । शिश्वियतुः । शिश्वियुः । शूयात् । जृस्तंभ्वित्यङ् वा । **श्वयतेरः** ।७।४।१८। अङि । अश्वत् । अश्वः । विभाषेति चङ् । अशिश्वियत् । अश्वयीत् । **अनुपराभ्यां कृञः** ।१।३।७९। कर्त्तृगे फले गन्धनादौ च परस्मैपदं स्यात् । अनुकरोति । पराकरोति । **अभिप्रत्यतिभ्यः क्षिपः** ।१।४।८०। क्षिप प्रेरणे । स्वरितेत् । अभिक्षिपति । **प्राद्वहः** ।१।३।८१। प्रवहति । **परेर्मृषः** ।१।३।८२। परिमृष्यति । **व्याङ्परिभ्यो रमः** ।१।३।८३। विरमति । आरमति । **उपाच्च** ।१।३।८४। यज्ञदत्तमुपरमति । उपरमयतीत्यर्थः । अन्तर्भावितण्यर्थोऽयम् । **विभाषाऽकर्मकात्** ।१।३।८५ उपाद्रमेः परस्मैपदं वा स्यात् । उपरमति । उपरमते । निवर्त्तत इत्यर्थः। **बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः** ।१।३।८६। एभ्यो ण्यन्तेभ्यः परस्मैपदं स्यात् । णिचश्चेत्यस्यापवादः । बोधयति पद्मम् । योधयति काष्ठानि । नाशयति दुःखम् । जनयति सुखम् । प्रावयति । प्रापयतीत्यर्थः । द्रावयति । स्रावयति । **क्रीङ्जीनां णौ** ६।१।४८। आत्वं स्यात् । अध्यापयति । **णौ च संश्चङोः** २।४।५१। सन्परे चङ्परे च णौ इङो गाङ् वा । अध्यजीगपत् । अध्यापिपत् । क्रापयति । जापयति । **निगर-**

१०

**स्पर्द्धायामाङः ।१।३।३१।** कृष्णश्चाणूरमाह्वयते स्पर्द्धायां किम् पुत्रमाह्वयति । **उदश्चरः सकर्मकात् ।१।३।५३।** धर्ममुच्चरते उल्लंघ्य गच्छतीत्यर्थः । **समस्तृतीयायुक्तात् ।१।३।५४।** रथेन संचरते । **दाणश्च साचेच्चतुर्थ्यर्थे ।१।३।५५।** समो दाणस्तृतीयान्तेन युक्तादुक्तं स्यात्तृतीया चेच्चतुर्थ्यर्थे । दास्या संयच्छते कामी । **उपाद्यमः स्वकरणे ।१।३।५६।** स्वकरणं स्वीकारः । भार्यामुपयच्छते । **विभाषोपयमने ।१।२।१६।** यमः सिच् किद्वा विवाहेऽर्थे । रामः सीतामुपायत । उपायंस्त वा । उदवोढेत्यर्थः । **ज्ञाश्रुस्मृदृशां सनः।१।३।५७।** सन्नन्तानामेषां प्राग्वत् । धर्मं जिज्ञासते । शुश्रूषते सुस्मूर्षते दिदृक्षते । **नाऽनोर्ज्ञः ।१।३।५८।** पुत्रमनुजिज्ञासति । **प्रोपाभ्यां युजेरयज्ञपात्रेषु ।१।३।६४।** प्रयुङ्क्ते । उपयुङ्क्ते । ( स्वराद्यन्तोपसर्गादिति वाच्यम् । उद्युङ्क्ते । नियुङ्क्ते । अयज्ञपात्रेषु किम् । द्वन्द्वं न्यञ्चिपात्राणि युनक्ति । **समः क्ष्णुवः ।१।३।६५।** संक्ष्णुते शास्त्रम् । **गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः।१।३।३२।** गन्धनं हिंसा । उत्कुरुते । सूचयतीत्यर्थः । अवक्षेपणं भर्त्सनम् । श्येनोवर्तिकामुदाकुरुते । भर्त्सयत इत्यर्थः । हरिमुपकुरुते। सेवते । परदारान्प्रकुरुते । तेषुसहसा प्रवर्त्तते । एधोदकस्योपस्कुरुते । गुणमाधत्ते । कथाः

---

१ स्वकरणशब्देन भार्यास्वीकारो गृह्यत इत्यभिप्रेत्याह भार्यामित्यादि । २ एधशब्दोऽकारान्तः । एधाश्च उदकं चेति विग्रहः । अयंहि 'अवोदैधोद्मप्रश्रथहिमश्रथाः' इति सूत्रे निपातितः । यद्वाएधः शब्दः सान्तः । उदकवाची च उकशब्दः । तथाच हलायुधः 'प्रोक्तं प्राज्ञैर्भुवनममृतं जीवनीयं दकं च' इति ।

प्रकुरुते । प्रकथयतीत्यर्थः । शतं प्रकुरुते । धर्मार्थं विनियुङ्क्ते । एषु किम् । कटं करोति ॥ इत्यात्मनेपदप्रक्रिया ॥

'शेषात्कर्त्तरि परस्मैपदम्' । श्वि । श्वयति । **विभाषा श्वेः** ।६।१।३०। संप्रसारणम् लिटि यङि च । शुशाव । शुशुवतुः । ( श्वयतेर्लिट्यभ्यासलक्षणप्रतिषेधः ) । शिश्वाय । शिश्वियतुः । शिश्वियुः । शूयात् । जृस्तंभ्वित्यङ् वा । **श्वयतेरः** ।७।४।१८। अङि । अश्वत् । अश्वः । विभाषेति चङ् । अशिश्वियत् । अश्वयीत् । **अनुपराभ्यां कृञः** ।१।३।७९। कर्त्तृगे फले गन्धनादौ च परस्मैपदं स्यात् । अनुकरोति । पराकरोति । **अभिप्रत्यतिभ्यः क्षिपः** ।१।४।८०। क्षिप प्रेरणे । स्वरितेत् । अभिक्षिपति । **प्राद्वहः** ।१।३।८१। प्रवहति । **परेर्मृषः** ।१।३।८२। परिमृष्यति । **व्याङ्परिभ्यो रमः** ।१।३।८३। विरमति । आरमति । **उपाच्च** ।१।३।८४। यज्ञदत्तमुपरमति । उपरमयतीत्यर्थः । अन्तर्भावितण्यर्थोऽयम् । **विभाषाऽकर्मकात्** ।१।३।८५ उपाद्रमः परस्मैपदं वा स्यात् । उपरमति । उपरमते । निवर्त्तत इत्यर्थः। **बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः** ।१।३।८६। एभ्यो ण्यन्तेभ्यः परस्मैपदं स्यात् । णिचश्चेत्यस्यापवादः । बोधयति पद्मम् । योधयति काष्ठानि । नाशयति दुःखम् । जनयति सुखम् । प्रावयति । प्रापयतीत्यर्थः । द्रावयति । स्रावयति । **क्रीङ्जीनां णौ** ६।१।४८। आत्वं स्यात् । अध्यापयति । **णौ च संश्चङोः** २।४।५१। सन्परे चङ्परे च णौ इङो गाङ् वा । अध्यजीगपत् । अध्यापिपत् । क्रापयति । जापयति । **निगर-**

**णचलनार्थेभ्यश्च** ।१।३।८७। निगारयति । चलयति । ( अदेः प्रतिषेधः । ) आदयते देवदत्तेन । **अणावकर्म्मकाच्चित्तवत्कर्तृकात्** ।१।३।८८। ण्यन्तात्परस्मैपदम् । शेते कृष्णस्तं गोपी शाययति । **नपादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः** ।१।३।८९। एभ्यो ण्यन्तेभ्यः परस्मैपदं न । पाययते । दमयते । आयामयते । आयासयते । परिमोहयते । रोचयते । नर्तयते । वादयते । वासयते । ( धेट उपसंख्यानम् ) । धापयते । अकर्त्रभिप्राये शेषादिति परस्मैपदं स्यादेव । वत्सान्पाययति पयः । इति **पदव्यवस्था** ॥

**भावकर्म्मणोः** ।१।३।१३। लस्य तङानौ स्तः । **सार्वधातुके यक्** ।३।१।६७। भावकर्म्मवाचिनि सार्वधातुके धातोर्यक् स्यात् । भावः क्रिया । सा च भावार्थकलकारेणानूद्यते । युष्मदस्मद्भ्यां सामानाधिकरण्याऽभावात्प्रथमपुरुषः । तिङ्वाच्यक्रियाया अद्रव्यरूपत्वेन द्वित्वाद्यप्रतीतेर्न द्विवचनादिकम् । किन्तु एकवचनमेवोत्सर्गतः । त्वया मया अन्यैश्च भूयते । बभूवे । **स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वाचिण्वदिट् च** ।६।४।६२। उपदेशेऽयोच् तदन्तानां हनादीनां च चिणीवांगकार्यं वा स्यात् स्यादिषु भावकर्मणोर्गम्यमानयोः।

१ कर्तृत्वविवक्षायां आत्मनेपदे प्राप्ते परस्मैपदार्थमिदम् । २ पिबतिर्निगरणार्थः इतरे चित्तवत्कर्तृकाकर्मकाः । नृतिश्चलनार्थश्च । तेन 'निगरणचलनार्थ'–इति 'अणावकर्मकात्'–इति च सूत्रद्वयेन प्राप्तिः । ३ अत्र यद्यपि अजादयः सर्वे द्वन्द्वेन निर्दिष्टास्तथाप्युपदेशे इत्येतदच इत्यस्यैव विशेषणं न तु हनादीनां अव्यभिचारात्तराह । उपदेशे योजित्यादिना ।

स्यादीनामिडागमश्च । चिण्वद्भावपक्षे अयमिट् । चिण्वद्भावाद्वृद्धिः । भाविता । भविता । भाविष्यते । भविष्यते । भूयताम् । अभूयत । भूयेत । भाविषीष्ट । भविषीष्ट । **चिण्भावकर्मणोः ।३।१।६६।** च्लेश्चिण् स्याद्भावकर्मवाचिनि ते परे । अभावि । अभाविष्यत । अकर्मकोऽप्युपसर्गवशात्सकर्मकः । अनुभूयते आनन्दश्चैत्रेण त्वया मया च । अनुभूयेते । अनुभूयन्ते । त्वमनुभूयसे । अहमनुभूये । अन्वभावि । अन्वभाविषाताम् । अन्वभविषाताम् । णिलोपः । भाव्यते । भावयांचक्रे । भावयांबभूवे । भावयामासे । चिण्वदिट आभीयत्वेनासिद्धत्वाण्णिलोपः । भावयिष्यते । भाविष्यते । भाव्यताम् । अभाव्यत । भाव्येत । भावयिषीष्ट । भाविषीष्ट । अभावि । अभाविषाताम् । अभावयिषाताम् । बुभूष्यते । बुभूषांचक्रे । बुभूषिता । बुभूषिष्यते । बोभूयते । अकृत्सार्वधातुकेतिदीर्घः । स्तूयते विष्णुः । स्ताविता । स्तोता । स्ताविष्यते । स्तोष्यते । अस्तावि । अस्ताविषाताम् । अस्तोषाताम् । गुणोर्तीति गुणः । अर्यते । स्मर्यते । ऋच्छत्यृतामिति गुणः । आरे । सस्मरे । उपदेशग्रहणाच्चिण्वदिट् । आरिता । अर्ता । स्मारिता । स्मर्ता । नलोपः । स्रस्यते । सस्रंसे । इदितस्तु नन्द्यते । इज्यते । **तनोतेर्यकि ।६।४।४४** आदन्तादेशो वा स्यात् । तायते । तन्यते । **तपोनुतापे च ।३।१।६५।** च्लेश्चिण्न कर्मकर्त्तरि अनुतापे च । अन्वतप्त पापेन । घुमास्थेतीत्वम् । दीयते । धीयते । ददे । दधे । **आतो युक् चिण्कृतोः ।७।३।३३।**

---

१ 'च्चिण्ते पदः'—इति सूत्राच्चिणनुवृत्तावपि पुनरत्र चिण्ग्रहणं 'नरुधः'—इति सूत्रेण मध्ये तदनुवृत्तिप्रतिबन्धात् ।

आदन्तानां युगागमश्चिणि ञ्णितिकृति च । दायिता । दाता दायिषीष्ट । दासीष्ट । अदायि । अदायिषाताम् । शम्यते मोहो मुकुन्देन । **चिण्णमुलोर्दीर्घोऽन्यतरस्याम्** ।६।४।९३। चिण्परे णमुल्परे च णौ मितामुपधाया दीर्घो वा । शामिता । शमिता । शमयिता । शामिष्यते । शमिष्यते । शमयिष्यते । ण्यन्तत्वाभावे शम्यते मुनिना । **नोदात्तोपदेशस्य मान्तस्यानाचमेः** । ७।३।३४ । उपधाया वृद्धिर्न स्याच्चिणि ञ्णिति कृति च । अशमि । अदमि । उदात्तोपदेशस्येति किम् । अगामि । मान्तस्येति किम् । अवादि । अनाचमेति किम् । आचामि । ( अनाचमिकमिवमीति वक्तव्यम् । ) अकामि । **भञ्जेश्च चिणि** ।६।४।३३। नलोपो वा । अभाजि । अभञ्जि । लम्भ्यते । **विभाषा चिण्णमुलोः** ।७।१।६९। लभेर्नुम् । अलम्भि । अलाभि । ॥ **इति भावकर्मप्रक्रिया** ॥

यदा कर्मैव कर्तृत्वेन विवक्षितं तदा सकर्मकाणामपि अकर्मकत्वात्कर्तरि भावे च लः । **कर्मवत्कर्मणा तुल्यक्रियः** ।१।१।८७। कार्याति-

---

१ अत्र 'स्थाघ्वोरिच्च'-इत्येतद्बाधित्वापरत्वा चिण्वदिटि कृते 'घुमास्था'-इतीत्वं न भवति अजादित्वात् । स्थाघ्वोरितीत्वं च सिचःकित्वं च न भवति सिचोऽत्र अज्झलादित्वात् । तस्मिन्कर्तव्ये सिज्झलादिरेवापेक्षितः इकोझलिति सूत्राज्झलनुवर्तनात् । २ यदा सौकर्यातिशयं द्योतयितुं कर्तृव्यापारो न विवक्ष्यते तदेदमिति बोध्यम् । ३ अत्र शास्त्रे कार्यातिदेशः शास्त्रातिदेश इति द्वौपक्षावाश्रितौ लक्ष्यसिद्ध्ये तत्र शास्त्रातिदेशे येन सूत्रेण यत्कार्यं विधीयते तत्सूत्रमेवान्यलक्ष्ये आनीय तत्कार्यं विधीयते । कार्यातिदेशे तु कार्यमेवान्यलक्ष्ये आनीयते प्रकृते च 'सार्वधातुके यक्' 'भावकर्मणोः' 'स्यसिच्सीयुट्'-इति सूत्रत्रयविहितानि कार्याण्येवात्र गृह्यन्ते तदाह । यगात्मने पदेत्यादिना

देशोऽयम् । कर्मस्थया क्रियया तुल्यक्रियः कर्त्ता कर्मवत्। तेन यगात्मनेपदं चिण्चिण्वदिट् च स्युः । पच्यते फलम् । भिद्यतेकाष्ठम् । अपाचि । अभेदि । भावे तु भिद्यते काष्ठेन । ( भूषावाचिनां किरादीनां सन्नन्तानां च यक् चिणौ चिण्वदिट् च नेति वक्तव्यम् । ) अलङ्कुरुते कन्या । अलमकृत । अवकिरते हस्ती । अवाकीर्ष्ट । अवाकरिष्ट । गिरते । अगीर्ष्ट । अगरिष्ट । आद्रियते । आदृत । किरादिस्तुदाद्यन्तर्गणः । चिकीर्षते कटः । अचिकीर्षिष्ट। **तपस्तपः कर्मकस्यैव** ।३।१।८८। कर्त्ताकर्मवत् । तप्यते तपस्तापसः । अर्जयतीत्यर्थः । अतप्त । तपः कर्मकस्यैवेति किम् । उत्तपति सुवर्णं सुवर्णकारः । (सकर्मकाणां प्रतिषेधो वक्तव्यः । ) अजा ग्रामं नयति । (दुहिपच्योर्बहुलं सकर्मकयोरिति वाच्यम्) । **नदुहस्नुनमां यक्चिणौ** ।३।१।८९। एषां कर्मकर्त्तरि यक् चिणौ न । शप् । तस्य लुक् । गौः पयो दुग्धे । **अचः कर्मकर्त्तरि** ।३।१।६२। अजन्ताच्चूलेश्चिण्वा कर्मकर्त्तरि ते परे । अकारि । अकृत । **दुहश्च** ।३।१।६३। तथा । अदोहि । अदुग्ध । लुग्वेति क्सस्य लुक् । पक्षेऽयम् । अधुक्षत । उदुंबरः फलं पच्यते । **कुषिरञ्जोः प्राचां श्यन्परस्मैपदं च** ।३।१।९०। अनयोः कर्मकर्तरि न यक् किन्तु श्यन्परस्मैपदं च । आत्मनेपदापवादः । कुष्यति कुष्यते पादः । रज्यति रज्यते वस्त्रम्। यगविषये तु नास्य प्रवृत्तिः कोषिषीष्ट । रंक्षीष्ट ॥ **इति कर्मकर्तृप्रक्रिया** ॥

**अभिज्ञावचने लृट्** ।३।२।१०२। स्मृतिबोधिन्युपपदे भूतानद्यतने धातोर्लृट् लङोपवादः । वस निवासे । स्मरसि कृष्ण गोकुले वत्स्यामः । एवं बुध्यसे चेतयसे इत्यादि प्रयोगेपि । **न यदि** ।३।२।१०३। यद्योगे उक्तन्न । अभिजानासि यद्वने अभुञ्जमहि । **विभाषा साकांक्षे** ।३।२।११४। उक्तविषये लृड् वा । लक्ष्यलक्षणभावेन साकांक्षश्चेद्धात्वर्थः । स्मरसि कृष्ण वने वत्स्यामस्तत्र गाश्चारयिष्यामः । वासो लक्षणं चारणं लक्ष्यम् । पक्षे लङ् । 'परोक्षे लिट्' । चकार । उत्तमपुरुषे चित्तविक्षेपादिना पारोक्ष्यम् । सुप्तोहं किल विललाप । ( अत्यन्तापन्हवे लिड्वक्तव्यः ) । कलिङ्गेष्ववात्सीः । नाहं कलिङ्गान् जगाम । **प्रश्ने चासन्नकाले** ।३।२।११७। पृच्छमानेर्थे लिड्विषये लङ्लिटौस्त आसन्नकाले । आगच्छत्किम् । जगाम किम् । **लट्स्मे** ।३।२।११८। लिटोऽपवादः । यजतिस्म युधिष्ठिरः । **अपरोक्षे च** ।३।२।११९। भूतानद्यतने लट् स्यात्स्मयोगे । एवं स्मपिता ब्रवीति । **ननौपृष्टप्रतिवचने** ।३।२।१२०। भूते लट् । अकार्षीः किम् । ननु करोमि भोः । **नन्वोर्विभाषा** ।३।२।१२१। अकार्षीः किम् । न करोमि । नाकार्षम् । अहं नु करोमि । अहंन्वकार्षम् । **पुरिलुङ्चास्मे** ।३।२।१२२। पुरायोगे भूतानद्यतने वा लुङ् चाल्लट् न तु स्मयोगे । पक्षे यथाप्राप्तम् ।

---

१ अभिज्ञास्मृतिः स उच्यते बोध्यतेऽनेनेति विग्रहस्तदाह । स्मृति बोधिनीति।
२ पञ्चवर्षाभ्यन्तर आसन्नकालः पञ्चवर्षातीतस्तु विप्रकृष्ट एवं च आसन्नकालिके भूतानद्यतनपरोक्षार्थवृत्तिधात्वर्थे प्रष्टव्ये इत्यर्थः ।

वसन्तीह पुरा छात्राः । अवात्सुः । अवसन् । ऊषुर्वा । अस्म इति किम् । यजतिस्म पुरा । भविष्यतीत्यनुवर्त्तमाने । **यावत्पुरानिपातयो र्लट्**[1] ।३।३।४। यावद् भुङ्क्ते । पुराभुङ्क्ते । निपातयोः किम् । यावद्दास्यते । तावद्भोक्ष्यते । करणभूतया पुरा यास्यति । **विभाषाकदाकर्ह्योः**।३।३।५। लट् स्यात् । कदा कर्हि वा भुङ्क्ते भोक्ष्यते भोक्ता वा । **वर्तमानसमीप्ये वर्त्तमानवद्वा** ।३।३।१३१। वर्त्तमाने ये प्रत्यया उक्तास्ते वर्त्तमानसमीपे भूते भविष्यति च वा स्युः । कदा आगतोसि । अयं आगच्छामि । आगमं वा । कदा गमिष्यसि । एष गच्छामि । एष गमिष्यामि वा । **आशंसायां भूतवच्च** ।३।३।१३१। भविष्यत्काले भूतवद्वर्त्तमानवच्च प्रत्यया वा स्युराशंसायाम् । देवश्चेदवर्षीद्वर्षति वर्षिष्यति वा धान्यमवाप्स्म वपाम वप्स्यामो वा । **क्षिप्रवचनेलृट्**[3] ।३।३।१३२। क्षिप्रपर्यायोपपदे पूर्वविषये लृट् । वृष्टिश्चेत्क्षिप्रमाशु त्वरितं वा आयास्यति शीघ्रं वप्स्यामः । **आशंसावचने लिङ्** ।३।३।१३४। आशंसावाचिन्युपपदे भविष्यति लिङ्स्यात् न भूतवत् । गुरुश्चेदुपेयादाशंसे अधीयीय । **हेतुहेतुमतोर्लिङ्** ।३।३।१५६। वा स्यात् । कृष्णं नमेच्चेत्सुखं यायात् । कृष्णं नंस्यति चेत्सुखं यास्यति । भविष्यत्येवेष्यते । नेह । हन्तीति पलायते । **इच्छार्थेषु लिङ्लोटौ** ।३।३।१५७। इच्छामिभु-

---

१ अस्मान्निपातग्रहणाल्लक्षणप्रतिपदोक्तपरिभाषा अनित्येति ज्ञाप्यते । २ अप्राप्तस्य प्राप्तुमिच्छा आशंसा अत्र आशंसायां वर्तमानत्वेऽपि तद्विषयस्य वर्षादेर्भविष्यत्कालसंबन्धाद्भविष्यतीत्युक्तम् वृत्तौ । ३ अत्र वचनग्रहणं स्वरूपनिरासार्थम् तदाह क्षिप्रपर्यायेति ।

ञ्जीत भुङ्क्तां वा भवान् । एवं कामये प्रार्थये । (कामप्रवदने इतिवक्तव्यम्)। नेह । इच्छन्करोति । **लिङ् च ।३।३।१५८।** समानकर्तृकेषु इच्छार्थेषु । भुञ्जीयेतीच्छति । विधिनिमन्त्रणेति लिङ् । विधिः प्रेरणम् भृत्यादेर्निकृष्टस्य प्रवर्तनम् । यजेत । निमन्त्रणं नियोगकरणम् । आवश्यके श्राद्धभोजनादौ दौहित्रादेः प्रवर्त्तनम् । इहभुञ्जीत । आमन्त्रणं कामचारानुज्ञा इहआसीत । अधीष्टः सत्कारपूर्वको व्यापारः । पुत्रमध्यापयेत् । संप्रश्नःसंप्रधारणम् । किंभो वेदमधीयीय उत तर्कम् । प्रार्थनं याञ्चा। भो भोजनं लभेय । एवं लोट् । **प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च ।३। ३।१६३।** प्रैषो विधिः । अतिसर्गः कामचारानुज्ञा । भवता यष्टव्यम् । चाल्लोटोऽनुकर्षणं प्राप्तकालार्थम् । भवान्यजताम् । **अर्हे कृत्यतृचश्च । ३।३।१६९।** चाल्लिङ् । त्वं कन्यां वहेः। **शकि लिङ् च ।३।३।१७२।** शक्तौ लिङ्स्याच्चात्कृत्याः । त्वं भारं वहेः । **धातुसंबन्धे प्रत्ययाः।३।४।१** धात्वर्थानां संबन्धे यत्र काले प्रत्यया उक्तास्ततोन्यत्रापि स्युः । तिङन्तवाच्यक्रियायाः प्राधान्यात्तदनुरोधेन गुणभूतक्रियावाचिभ्यः प्रत्ययाः। वसन्ददर्श । भूते लट् । अतीतवासकर्तृकर्तृकंदर्शनमित्यर्थः । सोमयाज्यस्य पुत्रोभविता । सोमेन यक्ष्यमाणो यः पुत्रस्तत्कर्तृकं भवनम् । **क्रियासमभिहारे लोट्लोटोहिस्वौ वा च तध्वमोः।३।४।२।** पौनःपुन्ये भृशार्थे च द्योत्ये धातोर्लोट् । तस्य च हिस्वौ स्तस्तिङामपवादः। तौच

---

१ योग्ये कर्तरि गम्यमाने कृत्यतृचो भवन्ति । त्वया कन्या वोढव्या इति । अत्र लिङा बाधामाभूत् इति कृत्यतृचोर्ग्रहणम् । अन्यथा 'तयोरेवकृत्य'–'ण्वुल्तृचौ' इति सूत्राभ्यां कृत्यतृचोः सामान्यविहितत्वादर्हेऽपि भविष्यत इतिभावः ।

हिस्वौ क्रमेण परस्मैपदात्मनेपदसंज्ञौ स्तस्तिङ्संज्ञौ च । तध्वमोर्विषये तु हिस्वौ वा स्तः । पुरुषैकवचनसंज्ञे नानयोरतिदिश्येते हिस्वविधानसामर्थ्यात्तेन सकलपुरुषवचनविषये परस्मैपदिभ्यो हिः कर्त्तरि आत्मनेपदिभ्यः स्वो भावकर्मकर्तृषु । **समुच्चये न्यतरस्याम् ३।४।३।** अनेकक्रियासमुच्चये द्योत्ये प्रागुक्तं वा स्यात् । **यथाविध्यनुप्रयोगः पूर्वस्मिन् ।३।४।४** आद्ये लोड्विधाने लोट्प्रकृतिभूतएव धातुरनुप्रयोज्यः । **समुच्चये सामान्यवचनस्य ३।४।** समुच्चये लोड्विधौ सामान्यार्थस्य धातोरनुप्रयोगः स्यात् । अनुप्रयोगाद्यथायथं लडादयस्तिबादयश्च । ततः संख्याकालयोः पुरुषविशेषार्थस्य चाभिव्यक्तिः(क्रियासमभिहारे द्वेवाच्ये) । याहि याहीति याति । पुनःपुनरतिशयेन वा यानं ह्यन्तस्यार्थः । एककर्तृकं वर्त्तमानं यानं यातीत्यस्य इतिशब्दस्तु अभेदान्वये तात्पर्यं ग्राहयति । एवंयातः।यान्ति । याथः । याथ । यातयातेति यूयं याथ । याहि याहीत्ययासीत् । यास्यति वा । आधीष्वाधीष्वेत्यधीते । ध्वंविषयेतु पक्षे अधीध्वमधीध्वमिति । यूयमधीध्वे । समुच्चये सक्तून्पिब धानाः खादेत्यभ्यवहरति । अन्नं भुङ्क्ष्व दाधिकमास्वादस्वेत्यभ्यवहरते । तध्वमोस्तु पिबत खादतेत्यभ्यवहरथ । भुङ्ग्ध्वमास्वादध्वमित्यभ्यवहरध्वे । पक्षेतु हिस्वौ अत्र समुच्चीयमानविशेषाणामनुप्रयोगार्थेन सामान्येनाभेदान्वयः । पक्षे सक्तून् पिबति । धानाः खादति । अन्नं भुङ्क्ते । दाधिकमास्वादते । एतेन 'पुरीमस्कन्द लुनीहि नन्दनं मुषाण रत्नानि हरामराङ्गनाः । विगृह्य चक्रे नमुचिद्विषा बली य इत्थमस्वास्थ्यमहर्दिवं दिवः' । इतिव्याख्यातम् ।

अवस्कन्द लवनादिरूपा भूतानद्यतनपरोक्षा एककर्तृका अस्वास्थ्यक्रियेत्यर्थात्। इह पुनःपुनश्चस्कन्देत्यादिरर्थइति व्याख्यानं भ्रममूलकमेव। द्वितीयसूत्रे क्रियासमभिहारे इत्यस्याननुवृत्तेः। लोडन्तस्य द्वित्वापत्तेश्च। पुरीमवस्कन्देत्यादि मध्यमपुरुषैकवचनमित्यपि केषांचित्भ्रम एव पुरुषवचनसंज्ञे इह नैत्युक्तत्वात्॥ ॥ इति लकारार्थप्रक्रिया॥

इति तिङन्तप्रक्रिया समाप्ता॥



# अथ कृदन्तं प्रारभ्यते।



**श्रीगणेशाय नमः। धातोः ।३।१।९१।** आतृतीयाध्यायान्तं ये प्रत्ययास्ते धातोः परे स्युः। कृदतिङिति कृत्संज्ञा। **वाऽसरूपोऽस्त्रियाम् ३।१।९४।** अस्मिन्धात्वधिकारेऽसरूपोपवादः प्रत्यय उत्सर्गस्य वा बाधकः स्त्र्यधिकारोक्तं विना। **कृत्याः३।१।९५।** ण्वुल्तृचावित्यतः प्राक् कृत्यसंज्ञाः स्युः। **कर्त्तरि कृत् ३।४।६७।** इति प्राप्ते। **तयोरेव कृत्यक्तखलर्थाः ३।४।७०।** एते भावकर्मणोरेवस्युः। **तव्यत्तव्यानीयरः ३।१।९६।** धातोरेते स्युः। एधितव्यम् एधनीयं त्वया। भावे। औत्सर्गिकमेकवचनं क्लीबत्वं च। चेतव्यश्चनीयोवा धर्मस्त्वया। (केलिमर उपसंख्यानम्) पचेलिमा माषाः। पक्तव्या इत्यर्थः। भिदेलिमाः सरलाः। कर्मणि प्रत्ययः। (वसेस्तव्यत्कर्त्तरि णिच्च)वसतीति वास्तव्यः। **कृत्यचः ।८।४।२९।** उपसर्गस्थान्निमित्तात्परस्याच उत्तरस्य कृत्स्थस्य नस्य णत्वं स्यात्। प्रयाणीयम्। अचः किम्। प्रमग्नः। (निर्विण्णस्योपसंख्यानम्)। **णेर्विभाषा ८।४।३०।** प्राग्वत्। प्रयापणीयम्।

---

१ अपवादेन नित्यं बाधे प्राप्ते क्वचिदुत्सर्गस्यापि प्रवृत्त्यर्थमिदम् तेन 'अचोयत्' 'ऋहलोर्ण्यत्' इत्याद्यपवादविषये तव्यदादयोऽपि प्रयुज्यन्ते। भव्यम् भवितव्यमित्यादि। इदंहि परिभाषासूत्रम् न त्वधिकारः।अधिकारइतिस्वीकारे तु आसित्वाभुङ्क्ते आस्यते भोक्तुम् इत्यादि न सिध्येत् स्त्र्यधिकारेणास्याधिकारस्य विच्छेदात्तत्राप्रवृत्त्या लकारक्त्वाप्रत्यययोर्बाध्यबाधकभावापत्तेः।

प्रयापनीयम् । **हलश्चेजुपधात् ८।४।३१।** हलादेरिजुपधाद्धातोः परस्य कृन्नस्याचः परस्य णो वा । प्रकोपणीयम् । प्रकोपनीयम् । हलः किम् । प्रोहणीयम् । इजुपधात्किम् प्रवपणीयम् । **इजादेः सनुमः ८।४।३२।** सनुमश्चेद्भवति इजादेर्हलन्ताद्विहितो यः कृत्तत्स्थस्यैव । इखिगतौ । प्रेंखणीयम् । इजादेः किम् । मगिसर्पणे । प्रमङ्गनीयम् । **वा निंसनिक्षनिन्दाम् ।८।४।३३।** एषां नस्य णो वा कृति । प्रणिंसितव्यम् । **नभाभूपूकमिगमिप्यायीवेपाम् ।८।४।४३।** एभ्यः कृन्नस्य णो न । प्रभानीयम् । प्रभवनीयम् । ( ण्यन्तभादीनामुपसंख्यानम् । ) प्रभापनीयम् । **कृत्यल्युटोबहुलम् ।३।३।११३।** क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव । विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति ॥ १॥ स्नात्यनेन स्नानीयं चूर्णं दीयतेऽस्मै दानीयो विप्रः । **ऋदुपधच्चाकॢपिचृतेः ।३।१।११०।**क्यप्स्यात् । वृत् वृत्यम् । वृध् वृध्यम् । कॢपिचृत्योस्तु कल्प्यम् । चर्त्यम् । **अचो यत् ।३।३।९७।** चेयम् । जेयम् । **ईद्यति ।६।४।६५।** आतः । गुणः । देयम् । ग्लेयम् । **पोरदुपधात् ।३।१।९८।**पवर्गान्तादुदुपधाद्यत् । ण्यतोपवादः । शप्यम् । लभ्यम् । **आङो यि।७।१।६५।**आङः परस्य लभेर्नुम् यादौप्रत्यये । आलंभ्यो गौः । **उपात्प्रशंसायाम् ।७।१।६६।** उपलंभ्यः साधुः । स्तुतौ किम् । उपलब्धुं शक्यः । उपलभ्यः । श-

---

१ यादौ प्रत्यये विवक्षिते उपपूर्वाल्लभेर्नुम् प्रशंसायाम् इत्यर्थः सा चात्र गन्यमाना धात्वर्थस्तु प्राप्तिरेवेतिज्ञेयम् ।

**किसहोश्च** ।३।१।९९। शक्यम् । सह्यम् । **गदमदचरयमश्चानुपसर्गे** ।३।१।१००। गद्यम् । मद्यम् । चर्यम् ।(चरेराङि चागुरौ) । आचर्यो-देशः । अगुरौ किम् । आचार्यो गुरुः । यम्यम् । **अवद्यपण्यवर्या-गर्ह्यपणितव्यानिरोधेषु**३।१।१०१।अवद्यम् पापम् । पण्यं विक्रेयम् । शतेन वर्या कन्या । **वह्यं करणम्** ।३।१।१०२ । वहन्त्यनेनेति वह्यं शकटं । वाह्यमन्यत् । **अर्य्यः स्वामिवैश्ययोः** ।३।१।१०३। अनयोः किम्। आर्य्यो ब्राह्मणः।**उपसर्य्या काल्या प्रजने**।३।१।१०४।गर्भग्रह-णे प्राप्तकालाचेदित्यर्थः । उपसर्य्या गौः । गर्भाधानार्थं वृषभेणोपगन्तुं योग्येत्यर्थः । प्रजनेकाल्येति किम् । उपसार्य्या काशी । प्राप्तव्येत्यर्थः । **अजर्यं संगतम्** ३।१।१०५। विशेष्यं चेत् । न जीर्यतीत्यजर्य्यम् सतां-संगतम् । **वदः सुपिक्यप् च** ।३।१।१०६।चाद्यत् । ब्रह्मोद्यम् । ब्रह्मव-द्यम् ।**भुवो भावे**। ३।१।१०७। क्यप् । ब्रह्मणोभावो ब्रह्मभूयम् । **हन-स्तच** ३।१।१०८। चात्क्यप् । ब्रह्मणो हननम् ब्रह्महत्या । **एतिस्तु-शास्वृदृजुषः क्यप्** ३।१।१०९। **ह्रस्वस्य पिति कृति तुक्** ।६।१। ७१। इत्यः। स्तुत्यः। शिष्यः ।वृ इति वृञोग्रहणं नवृङः । वृत्यः। वृङ-स्तु वार्यो ऋत्विजः । आदृत्यः । जुष्यः पुनःक्यबुक्तिः परस्यापि

---

१'ईडवन्दवृशंसदुहां ण्यतः' इतिज्ञापकादिति भावः तत्र हि ईडवन्दिभ्यामात्मने-पदिभ्यां साहचर्यादात्मनेपद्येव वृधातुर्गृह्यते । २ 'ओरावश्यके' इति प्राप्तस्य त-स्यावकाशस्तु अवश्यलाव्यमित्यादौ स्तुत्य इत्यादौच क्यपोऽवकाशः एवं अव-श्यस्तुत्य इत्यादौ तु उभयोः प्राप्तौ विप्रतिषेधेन परत्वात् ण्यति प्राप्तौ तदभावार्थं पुनः क्यप्ग्रहणमिति भावः ।

ण्यतो बाधनार्था । अवश्यस्तुत्यः । **मृजेर्विभाषा ।३।१।११३।** मृजेः क्यब्वा । मृज्यः । **ऋहलोर्ण्यत्।३।१।१२०।** ऋवर्णान्ताद्धलन्ताच्च ण्यत् । **चजोः कुघिण्यतोः । ७।३।५२।** चजोः कुत्वं घिति ण्यति च । (निष्ठायामनिट इति वक्तव्यम् ) । तेनेह न । गर्ज्यम् । मार्ग्यः । **ओरावश्यके ३।१।१२२।** ण्यत् । पाव्यम् । 'लुंपेदवश्यमः कृत्ये तुंकाम मनसोरपि । समो वा हिततततयोर्मांसस्य पचि युट्घञोः' । अवश्यलाव्यम् । **भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा ३।४।६८।** एते कृत्यान्ताः कर्त्तरि्वा निपात्यन्ते । भवतीतिभव्यः । भव्यमनेन वा । **भोज्यं भक्ष्ये ।७।३।६९।** भोग्यमन्यत्। **वचोऽशब्दसंज्ञायाम् ।७।३।६७।** न कुत्वम्। वाच्यम् । वाक्यमन्यत्। **राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः ।३।१।११४।** एते सप्त क्यबन्ता निपात्यन्ते । **भिद्योध्यौ नदे २।१।१२५।** नदे किम्। भेत्ता। उज्झिता। **पुष्यसिध्यौ नक्षत्रे ३।१।११६। विपूयविनीयजित्यामुञ्जकल्कहलिषु ३।१।११७।** विपूयो मुञ्जः । विनीयः कल्कः । जित्यो हलिः । **प्रत्यपिभ्यां ग्रहेः ।३।१।११८।** ( छन्दसीति वक्तव्यम् । ) प्रतिगृह्यम् अपिगृह्यम् । लोके तु । प्रतिग्राह्यम् । अपिग्राह्यम् । **पदास्वैरिबाह्यापक्षेषु च ।३।१।११९।** अवगृह्यम् । प्रगृह्यम् । पदम् । अस्वैरी परतन्त्रः। गृह्यकाः शुकाः । ग्रामगृह्यसेना । आर्यैर्गृह्यते आर्यगृह्यः। तत्पक्षाश्रित इत्यर्थः । **विभाषाकृवृषोः ३।१।१२०।** कृत्यं वृष्यं कार्यं वर्ष्यम्। **युग्यं च पत्रे ३।१।१२१।** पत्रं वाहनं योग्यमन्यत् । **अमा-**

**वस्यदन्यतरस्याम् ।३।१।१२२।** अमा सह वसतोऽस्यां चन्द्रार्काविंत्यमावस्या । अमावास्या वा । **अग्नौ परिचाय्योपचाय्यसमूह्याः ।३।१।१३१।** अग्नावेते साधवः । **क्रतौ कुण्डपाय्यसंचाय्यौ ।३।१।१३०। चित्याग्निचित्ये च ।३।१।१३२।** चित्योऽग्निः अग्नेश्चयनमग्निचित्या ॥ **इति कृत्यप्रत्ययाः ॥**

**ण्वुल्तृचौ ।३।१।१३३।** धातोरेतौ स्तः । कर्त्तरि कृदिति कर्त्रर्थे । **युवोरनाकौ ७।१।१।** युवु एतयोरनुनासिकयोरेतौ स्तः । कारकः । कर्त्ता । **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ३।१।१३४।** नन्द्यादेर्ल्युर्ग्रह्यादेर्णिनिः पचादेरच्स्यात् । नन्दयतीति नन्दनः । जनार्दनः । लवणः ।

---

१ इहाग्निशब्देन न ज्वलनः किन्तु तद्धारणार्थमिष्टकाचयनेन निर्मितं स्थलं गृह्यते तस्मादग्नावेते इत्यत्रापि अग्निशब्देन अग्निधारणार्थेनिर्मितं स्थलमेव माह्यम् अत्र परिपूर्वाच्चिनोतेः ण्यदायादेशश्च संपूर्वाच्च वहेः संप्रसारणं दीर्घश्च निपात्यते ।

२ नन्दनः वाशनः मदनः दूषणः साधनः वर्धनः शोभनः रोचनः । (सहितपिदमः संज्ञायाम्) । सहनः तपनः दमनः जल्पनः रमणः दर्पनः संक्रन्दनः संकर्षणः संहर्षणः जनार्दनः यवनः मधुसूदनः विभीषणः लवणः चित्तविनाशनः कुलदमनः [ शत्रुदमनः ] इति नन्द्यादिः ।

ग्राही उत्साही उद्दासी उद्भासी स्थायी मन्त्री संमर्दी ( रक्षश्रुवपशां नौ ) नीरक्षी निश्रावी निवापी निशायी ( याचृव्याहृव्रजवदवसां प्रतिषिद्धानाम् ) अयाची अव्याहारी असंव्याहारी अव्राजी अवादी अवासी ( अचामचित्तकर्तृकाणाम् ) अकारी आहारी अविनायी [ विशायी विषाई ] विशयी विषयी देशे । अभिभावी भूते । अपराधी उपरोधी परिभवी परिभावी । इति ग्रहादिः ।

पच वच वप वद चल पत नदट् भषट् प्लवट् चरट् गरट् चोरट् गाहट् सूरट् देवट् [ दोषट् ] जर ( रज ) मर ( मद ) क्षम ( क्षय ) सेव मेष कोप (कोष) मेध नर्त व्रण दर्श सर्प [ दम्भ दर्प ] जारभर श्वपच ॥ पचादिराकृतिगणः ।

ण्यतो बाधनार्थो । अवश्यस्तुत्यः । **मृजेर्विभाषा ।३।१।११३।** मृजेः क्यब्वा । मृज्यः । **ऋहलोर्ण्यत्।३।१।१२०।** ऋवर्णान्ताद्धलन्ताच्च ण्यत् । **चजोः कु घिण्यतोः । ७।३।५२।** चजोः कुत्वं घिति ण्यति च । (निष्ठायामनिट इति वक्तव्यम्) । तेनेह न । गर्ज्यम् । मार्ग्यः । **ओरावश्यके ३।१।१२२।** ण्यत् । पाव्यम् । 'लुंपेदवश्यमः कृत्ये तुंकाममनसोरपि । समो वा हिततततयोर्मांसस्य पचि युड्घञोः' । अवश्यलाव्यम् । **भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा ३।४।६८।** एते कृत्यान्ताः कर्त्तरिवा निपात्यन्ते । भवतीतिभव्यः । भव्यमनेन वा । **भोज्यं भक्ष्ये ।७।३।६९।** भोग्यमन्यत्। **वचोऽशब्दसंज्ञायाम् ।७।३।६७।** न कुत्वम्। वाच्यम् । वाक्यमन्यत्। **राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः ।३।१।११४।** एते सप्त क्यबन्ता निपात्यन्ते । **भिद्योध्यौ नदे २।१।१२५।** नदे किम्। भेत्ता। उज्झिता। **पुष्यसिध्यौ नक्षत्रे ३।१।११६। विपूयविनीयजित्यामुञ्जकल्कहलिषु ३।१।११७।** विपूयो मुञ्जः । विनीयः कल्कः । जित्यो हलिः । **प्रत्यपिभ्यां ग्रहेः ।३।१।११८।** ( छन्दसीति वक्तव्यम् । ) प्रतिगृह्यम् अपिगृह्यम् । लोके तु । प्रतिग्राह्यम् । अपिग्राह्यम् । **पदास्वैरिबाह्यापक्षेषु च ।३।१।११९।** अवगृह्यम् । प्रगृह्यम् । पदम् । अस्वैरी परतन्त्रः। गृह्यकाः शुकाः । ग्रामगृह्यसेना । आर्यैर्गृह्यते आर्यगृह्यः। तत्पक्षाश्रित इत्यर्थः। **विभाषाकृवृषोः ३।१।१२०।** कृत्यं वृष्यं कार्यं वर्ष्यम् । **युग्यं च पत्रे ३।१।१२१।** पत्रं वाहनं योग्यमन्यत् । **अमा-**

**वस्यदन्यतरस्याम्** ।३।१।१२२। अमा सह वसतोऽस्यां चन्द्रा
वित्यमावस्या । अमावास्या वा । **अग्नौ परिचाय्योपचाय्यस**
**ह्याः** ।३।१।१३१। अग्नावेते साधवः । **क्रतौ कुण्डपाय्यसंचाय**
।३।१।१३०। **चित्याग्निचित्ये च** ।३।१।१३२। चित्योऽग्निः अ
श्चयनमग्निचित्या ॥ **इति कृत्यप्रत्ययाः** ॥

**ण्वुल्तृचौ** ।३।१।१३३। धातोरेतौ स्तः । कर्त्तरिकृदिति कर्त्
**युवोरनाकौ** ७।१।१। युवु एतयोरनुनासिकयोरेतौ स्तः । कारकः ।
र्त्ता । **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** ३।१।१३४। नन्द्यादेल्यु
ह्यादेर्णिनिः पचादेरच्स्यात् । नन्दयतीति नन्दनः । जनार्दनः । लवण

---

१ इहाग्निशब्देन न ज्वलनः किन्तु तद्धारणार्थमिष्टकाचयनेन निर्मितं स्थलं गृ
तस्मादग्नावेते इत्यत्रापि अग्निशब्देन अग्निधारणार्थेनिर्मितं स्थलमेव माह्यम्
परिपूर्वाच्चिनोतेः ण्यदायादेशश्च संपूर्वाच्च वहेः संप्रसारणं दीर्घश्च निपात्यते ।

२ नन्दनः वाशनः मदनः दूषणः साधनः वर्धनः शोभनः रोचनः । (सहित
मः संज्ञायाम् ) । सहनः तपनः दमनः जल्पनः रमणः दर्पनः संक्रन्दनः संक
संहर्षणः जनार्दनः यवनः मधुसूदनः विभीषणः लवणः चित्तविनाशनः कुलद
[ शत्रुदमनः ] इति नन्द्यादिः ।

ग्राही उत्साही उद्दासी उद्भासी स्थायी मन्त्री संमर्दी ( रक्षश्रुवपशां नौ ) नी
निश्रावी निवापी निशायी ( याचृव्याहृव्रजवदवसां प्रतिषिद्धानाम् ) अय
अव्याहारी असंव्याहारी अव्राजी अवादी अवासी ( अचामचित्तकर्तृकाणा
अकारी आहारी अविनायी [ विशायी विषाई ] विशयी विषयी देशे । अभि
भूते । अपराधी उपरोधी परिभवी परिभावी । इति ग्रहादिः ।

पच वच वप वद चल पत नदट् भषट् प्लवट् चरट् गरट् चोरट् गाहट् सूरट् दे
[ दोषट् ] जर ( रज ) मर ( मद ) क्षम ( क्षय ) सेव मेष कोप (कोष) मेध
व्रण दर्श सर्प [ दम्भ दर्प ] जारभर श्वपच ॥ **पचादिराकृतिगणः** ।

गणे निपातनाण्णत्वम् । ग्राही । स्थायी । मन्त्री । पचः । आकृतिगणोऽयम् । **इगुपधज्ञाप्रीकिरः कः ३।१।१३५।** एभ्यः । कः । स्यात् । क्षिपः बुधः । कृशः । ज्ञः प्रियः । किरः । **आतश्चोपसर्गे ३।१।१३६।** प्रज्ञः। सुग्लः। **पाघ्राध्माधेट्दृशः शः । ३।१।१३७।** एभ्यः शः स्यात् । पिबः । जिघ्रः । धमः । धयः। पश्यः । **अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च । ३।१।१३८।** लिम्पः । विन्दः । धारयः । पारयः । वेदयः । उद्वेजयः । चेतयः । सातयः । साहयः । अनुपसर्गात्किम् । प्रलिपः । ( गवादिषु विन्देः संज्ञायाम् ) । गोविन्दः अरविन्दः । **ददातिदधात्योर्विभाषा ३।१।१३९।** ददः । दधः । पक्षे वक्ष्यमाणो णः । **ज्वलितिकसन्तेभ्यो णः ३।१।१४०।** वा स्यात् । ज्वालः। ज्वलः । चालः । चलः । **श्याद्व्यधास्रुसंस्रवतीणवसाऽवहृलिहश्लिषश्वसश्च ३।१।१४१।** अवश्यायः । अवदायः । धायः । व्याधः । आस्रावः। अत्यायः । अवसायः । अवहारः । लेहः । श्लेषः । श्वासः । **विभाषा ग्रहः । ३।१।१४३।** व्यवस्थितविभाषेयम् । तेन । जलचरे ग्राहः ज्योतिषि ग्रहः । **गेहे कः । ३।१।१४४।** गृह्णातिधान्यादिकमिति गृहम् । **शिल्पिनि ष्वुन् ३।१।१४५।** क्रियाकौशलं शिल्पम् । **षः प्रत्ययस्य १।३।६।** आदिरित् । नृतिखनिरञ्जिभ्य एव । नर्त्तकः । खनकः । । ( असि अकेऽने च रञ्जेर्नलोपो वाच्यः। ) रजकः । **गः स्थकन् ३।१।१४६।** गायतेस्थकन् ।

---

१ इह 'गामादा ग्रहणेष्वविशेषः' इत्यनया परिभाषया गाङ्गतौ गैशब्दे इति द्वयोर्ग्रहणे प्राप्तेऽपि गैशब्दे इत्यस्यैव ग्रहणम् यतःस्थकन् प्रत्ययो गायत्यर्थविषयमेव शिल्पिनमभिधातुं समर्थ इत्यशयेनाह । गायते रिति ।

गाथकः । **ल्युट् च ।३।१।१४७।** गायनः । **प्रसृल्वः समभिहारे वुन् ३।१।१४९।** समभिहारग्रहणेन साधुकारित्वं लक्ष्यते । प्रवकः सरकः । लवकः । **आशिषि च ।३।१।१५०।** वुन् स्यात् । जीवतात्जीवकः । **तत्रोपपदं सप्तमीस्थम् ३।१।९२।** सप्तम्यन्ते पदे कर्मणीत्यादौ वाच्यत्वेन स्थितं यत् कुम्भादि तद्वाचकं पदमुपपदसंज्ञं स्यात् । **कर्मण्यण् ।३।१।११०।** कर्मण्युपपदे धातोरण् । कुम्भं करोतीति कुम्भकारः । **आतोनुपसर्गे कः ३।२।३।** कर्मण्युपपदे आदन्ताद्धातोरनुपसर्गात्कःस्यान्नाऽण् अणोपवादः।गोदः। कम्बलदः।अनुपसर्गे किम् । गोसंदायः । ( मूलविभुजादिभ्यः कः ) । मूलानि विभुजतीति मूलविभुजो रथः । आकृतिगणोऽयम् । महीध्रः । कुध्रः। **सुपि स्थः ३।२।४।** कः स्यात् । समस्थः । विषमस्थः । सुपीति योगविभागादन्यस्मादपि । द्वाभ्यां पिबति इति द्विपः । **अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशंकङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः ४।३।९७।** एभ्यः स्थस्य सस्य षः स्यात् । द्विष्ठः। त्रिष्ठः। **तुन्दशोकयोः परिमृजापनुदोः ३।२।५।** तुन्दशोकयोः कर्मणोरुपपदयोराभ्यां कः । ( आलस्यसुखाहरणयोरिति वक्तव्यम् ) । तुन्दपरिमृजोऽलसः । शोकापनुदः । सुखस्याहर्त्ता ।

---

१ अप्राप्तप्रार्थनमाशीः सा च प्रयोक्तुर्धर्मः नतु प्रत्ययार्थः कर्तरिकृदिति कर्त्रर्थे विधानात् । जीवक इति । वुनि 'युवोरनाकौ' इत्यनेन अकादेशः जीवनं तव भूयात् इत्यर्थः । २ मूलविभुज नखमुच काकगुह कुमुद महीध्र कुध्र गिध्र ॥ आकृतिगणोयम् ॥ इति मूलविभुजादिः ॥

**भेदाज्ञः ३।२।६।** कः स्यात् । सर्वंमदः । पथिप्रज्ञः । **समिस्थः ।३।२।७।** गोसंख्यः । **गापोष्टक् ।३।२।८।** कर्मण्युपपदे । सामगः ( पिबतेः सुराशीध्वोरिति वाच्यम् । ) सुरापी । शिधुपी । **हरतेरनुद्यमनेच् ।३।२।९।** अंशहरः । अनुद्यमने किम् । भारहारः । (शक्तिलाङ्गलांकुशतोमरयष्टिघटघटीधनुष्षु ग्रहः ) । शक्तिग्रहः । **वयसि च ।३।२।१०।** उद्यमनार्थं सूत्रम् । कवचहारः कुमारः । **आङि ताच्छील्ये ।३।२।११।** पुष्पाण्याहरति तच्छीलः पुष्पाहरः । **अर्हः ३।२।१२।** अच्स्यात् कर्मण्युपपदे । पूजार्हा ब्राह्मणी । **स्तम्बकर्णयोरमिजपोः ।३।१।१३।** ( हस्तिसूचकयोरिति वक्तव्यम् ) स्तंबेरमो हस्ती । कर्णेजपः सूचकः । **अधिकरणे शेतेः ।३।२।१५।** खे शेते खशयः । (पार्श्वादिषूसंख्यानम्) । पार्श्वाभ्यां शेते पार्श्वशयः । पृष्ठशयः । उदरशयः । **चरेष्टः ।३।२।१६** अधिकरणे उपपदे । कुरुचरः । **भिक्षासेनादायेषु च ।३।२।१७।** भिक्षाचरः । सेनाचरः । आदायेति ल्यबन्तम् । आदायचरः । **कृञो हेतुताच्छील्यानुलोम्येषु ।३।२।२०।** एषुद्योत्येषु कृञष्टः । **अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य ।१।३।४६।** अतउत्तरस्यानव्ययविसर्गस्य समासे नित्यं सादेशः करोत्यादिषु । यशस्करी विद्या ।

---

१ इह घटग्रहणेनैव सिद्धे घटीग्रहणं 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इति परिभाषाया अनित्यत्वज्ञापनार्थम् तेन मद्रराज्ञीत्यत्र 'राजाहः।' इत्यादिना टच् न । २ 'तत्पुरुषे कृति बहुलम्' इति सप्तम्या अलुक् ३ हेतुरिह लौकिकः न तु 'तत्प्रयोजक'—इत्यनेन विहितः कृत्रिमः तस्मिन् हेतोरसंभवात् ।

श्राद्धकरः । वचनकरः । **दिवाविभानिशाप्रभाभास्कारान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्यत्तद्धनुररुष्षु ।३।२।२१।** एषु कृञष्टोऽहेत्वादावपि । दिवाकरः । विभाकरः । निशाकरः । कस्कादित्वात्सः । भास्करः । बहुकरः । एककरः । द्विकरः । अहस्करः । धनुष्करः । अरुष्करः । **नशब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु।३।१।२३।** एषु कृञष्टो न । शब्दकारः । **स्तम्बशकृतोरिन् ३।२।२४।** ( व्रीहिवत्सयोरिति वक्तव्यम् ) स्तम्बकरिर्व्रीहिः । शकृत्करिर्वत्सः । **हरतेर्दृतिनाथयोः पशौ ।३।२।२५** दृतिहरिः । नाथं नासारज्जुं हरतीति नाथहरिः पशुः । **फलेग्रहिरात्मंभरिश्च ।३।२।२६।** एतौ निपात्येते । चात्कुक्षिंभरिः । चान्द्रास्तु-आत्मोदरकुक्षिष्विति पेठुः । 'ज्योत्स्नाकरंभमुदरंभरयश्चकोराः' । इति मुरारिः । **एजेः[1] खश् ।३।२।२८।** ण्यन्तात् । **अरुर्द्विषदजन्तस्य मुम् ६। ३।६७।** अरुषो द्विषतोऽजन्तस्य मुम्खिदन्ते नत्वव्ययस्य । शित्वाच्छबादिः । जनमेजयतीति जनमेजयः । ( वातशुनीतिलशर्धेष्वजधेट्तुदजहातिभ्यः खश् )वातमजा मृगाः।**खित्यनव्ययस्य ६।३।६६।**ह्रस्वः शुनिन्धयः । तिलंतुदः।शर्धंजहा माषाः।**नासिकास्तनयोर्ध्माधेटोः।३।२। २९।**(स्तनेधेटो नासिकायां ध्मश्चेति वक्तव्यम्)।स्तनंधयः टित्वात्स्तनंधयी। **नाडीमुष्ट्योश्च ।३।२।३०।** ध्माधेटोः । खश् । नाडिंधमः । नाडिंधयः।

---

१ एजेरिति ण्यन्तस्य निर्देशः न तु शुद्धस्यैका निर्देशः खशः शित्करणाल्लिङ्गात् तत्तु सार्वधातुकार्थम्। सार्वधातुकत्वे च सति शप् यथा स्यादिति । केवलस्य तु एजृ इत्यस्य शपि सत्यसति वा विशेषो नास्तीति भावः

मुष्टिंधमः । मुष्टिंधयः । उदि कूले रुजिवहोः ।३।२।३१। कूलमुद्रुजः ।कूलमुद्वहः । वहाभ्रे लिहः ।३।२।३२। वहः स्कन्धः तं लेढीति वहंलिहो गौः । अभ्रंलिहो वायुः । परिमाणे पचः ।३।२।३३। प्रस्थंपचा स्थाली। खारिंपचः कटाहः । मितनखे च ।३।२।३४। मितंपचा ब्राह्मणी । नखंपचा यवागूः । विध्वरुषोस्तुदः ३।२।३५। विधुंतुदः । अरुन्तुदः । असूर्यललाटयोर्दृशितपोः ।३।२।३६। असूर्यमित्यसमर्थसमासः । दृशिना नञः संबन्धात् । असूर्यंपश्या राजदाराः । ललाटंतपः सूर्यः । प्रियवशे वदः खच् ।३।२।३८। प्रियंवदः । वशंवदः ( गमेः सुपि वाच्यः ) मितङ्गमो हस्ती । ( विहायसो विह च खश्च डिद्वा वाच्यः ) विहङ्गमः विहङ्गः । भुजङ्गः । भुजङ्गमः । द्विषत्परयोस्तापेः ।३।२।३९। खच् । खचि ह्रस्वः ।६।४।९४। खचिपरे णौ उपधाया ह्रस्वः । द्विषन्तं परं वा तापयति द्विषंतपः।परन्तपः। वाचि यमो व्रते।३।२।४०।खच्।वाचंयमपुरंदरौ च ।६।३।६२। वाक्पुरोरमन्तत्वं निपात्यते। वाचंयमो मौनव्रती। व्रते किम् अशक्त्यादिना वाचं यच्छतीति वाग्यामः।पूः सर्वयोर्दारिसहोः।३।२।४१।खच् । पुरं दारयतीति पुरंदरः। सर्वंसहः । भगं दारयतीति भगंदरः इति कथं। बाहुलकात । सर्वकूलाभ्रकरीषेषु कषः।३।२।४२।सर्वंकषः खलः । कूलंकषा नदी । अभ्रंकषो वायुः । करीषंकषा वात्या । मेघर्त्तिभयेषु कृञः ।३।४३ । मेघंकरः । ऋतिंकरः। भयंकरः । भयशब्देन तदन्तविधिः अभयंकरः । क्षेमप्रियमद्रेऽण् च ।३।२।४४। एषु कृञोण् चात्खच्।क्षेमंकरः।क्षेमकारः।प्रियंकरः।प्रियकारः।मद्रंकरः।मद्रकारः।

कथंतर्हि अल्पारंभाः क्षेमकरा इति । कर्मणः शेषत्वविवक्षायां-पचाद्यच् । एवं गङ्गाधरभूधरादयः । **आशितंभुवः करणभावयोः ।३।२।४५।** खच् । आशितोऽभवत्यनेन आशितंभव ओदनः । आशितस्य भवनं आशितंभवः । **संज्ञायां भृतॄवृजिधारिसहितपिदमः ।३।२।४६।** खच् विश्वं बिभर्तीति विश्वंभरः । रथंतरं साम । शत्रुंजयो हस्ती । युगंधरः पर्वतः । शत्रुंसहः । शत्रुंतपः । अरिंदमः । **गमेश्च[1] ।३।२।४७।** सुतंगमः । **अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः ।३।२।४८।** गमेः । अन्तगः (सर्वत्रपन्नयो रिति वाच्यम्) सर्वत्रगः । पन्नं पतितं गच्छतीति पन्नगः । ( उरसो लोपश्च । ) उरसा गच्छतीत्युरगः । ( सुदुरोरधिकरणे ) सुखेन गच्छतीत्यत्र सुगः । दुर्गः ( अन्यत्रापि दृश्यत इति वाच्यम् । ) ग्रामगः ( डे च विहायसो विहादेशो वाच्यः । ) विहगः । **आशिषि हनः ।३।२।४९।** शत्रुं वध्यात् शत्रुहः । आशिषि किम् शत्रुघातः । (दारावाहनोणन्तस्य च टः संज्ञायाम् ) । दारुशब्दे उपपदे आङ्पूर्वाद्धन्तेरण् टकारश्चान्तादेशो वक्तव्य इत्यर्थः । दार्वाघाटः । ( चारौ वा ) । चार्वाघाटः । चार्वाघातः । **अपे क्लेशतमसोः ।३।२।५०।** अपपूर्वाद्धन्तेर्डः । अनाशीरर्थमिदम् । क्लेशापहः पुत्रः । तमोपहः सूर्य्यः । **कुमारशीर्षयोर्णिनिः[2] ।३।२।५१।** कुमारघाती । शीरसः शीर्षभावो निपात्यते । शीर्षघाती । लक्षणे

---

१ गमिस्तु पूर्वसूत्रे एवनोक्तः उत्तरसूत्रे गमेरेवानुवृत्तिर्यथा स्यात् । २ एतयोः कर्मणोरुपपदयोर्हन्तेर्णिनिः । 'सुप्यजातौ'–' आवश्यकाधमर्ण्य '–इत्यादिभिः सिद्धेऽपि ताच्छील्यआवश्यकाद्यभावेपि णिन्यर्थे शिरसः शीर्षभावार्थं च वचनम् ।

**जायापत्योष्टक् ।३।२।५२।** हन्तेष्टक् लक्षणवति कर्त्तरि । जायाघ्नो ना । पतिघ्नी स्त्री । **अमनुष्यकर्त्तृके च ।३।२।५३।** जायाघ्नस्तिलकालकः । पतिघ्नी पाणिरेखा । पित्तघ्नं घृतम् । अमनुष्येति किम् । आखुघातः शूद्रः । अथ कथंबलभद्रः प्रलंबघ्नः कृतघ्न इत्यादि । मूलविभुजादित्वात्सिद्धम् । चोरघातो नगरघातो हस्तीति तु बाहुलकादण् । **शक्तौ हस्तिकपाटयोः ।३।२।५४।** हन्तेष्टक् । मनुष्यकर्तृकार्थमिदम् । हस्तिघ्नो ना । कपाटघ्नश्चोरः । कवाटेति पाठान्तरम् । **पाणिघताडघौ-शिल्पिनि ।३।२।५५।** शिल्पिनि किं पाणिघातः । (राजघ उपसंख्यानम् ) । राजानं हन्ति राजघः । **आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन् ।३।२।५६।** एषुच्व्यर्थेष्वन्तेषु कर्मसूपपदेषु कृञः ख्युन् । अनाढ्यमाढ्यंकुर्वन्त्यनया आढ्यंकरणी । अच्वौ किम् । आढ्यीकुर्वन्त्यनेन । **कर्त्तरि भुवः खिष्णुच्खुकञौ ।३।२।५७।** आढ्यादिषु च्व्यर्थेष्वच्व्यन्तेषु भवतेरेतौ स्तः । अनाढ्य आढ्यो भवति आढ्यंभविष्णुः । आढ्यम्भावुकः । **सत्सूद्विषद्रुहदुहयुजविदभिदछिदजिनीराजामुपसर्गेपि क्विप् ।३।२।६१।** एभ्यः क्विप्स्यादुपसर्गे सत्यसति च सुप्युपपदे । द्युसत् । संदिग्पतेरिति षः । उपनिषत् । अण्डसूः । प्रसूः । मित्रद्विट् । प्रद्विट् । मित्रध्रुट् । प्रध्रुट् । गोधुक् प्रधुक् । अश्वयुक् । प्रयुक् । देववित् । निवित् ।

---

१ सूत्रे लक्षणशब्दात् 'अर्श आदिभ्योच्' इत्यनेन मतुबर्थे अच्प्रत्ययः तेनायमर्थो लभ्यते । २ जायामरणसूचकं पाणिरेखाविशेषादिकं यस्यास्ति सः तं हन्तीति विग्रहः । एवं पतिघ्नी स्त्री इत्यत्रापिज्ञेयम् ।

( अग्रग्रामाभ्यां नयतेर्णो वाच्यः ) अग्रणीः । ग्रामणीः। **भजो ण्विः ।३।२।६२।** अंशभाक् । प्रभाक् । **अदोऽनन्ने ।३।२।६८।** विट् स्यात् । आममत्तीत्यामात् । सस्यात् । अनन्ने किम् । अन्नादः । **क्रव्ये च ।३।२।६९।** अदेर्विट् । पूर्वेण सिद्धे वचनं वासरूपेति प्राप्ताणूबाधनार्थम् । क्रव्यात्।आममांसभक्षकः।**दुहः कप्घश्च।३।२।७०।**कामदुघा।**अन्येभ्योऽपि दृश्यन्ते।३।२।७५।**मनिन् क्वनिप् वनिप् विच् एते प्रत्यया धातोः स्युः। **नेड्वशि कृति ।७।२।८।** वशादेः कृत इण्न । सुशर्मा[१] । प्रातरित्वा[२] । **विड्वनोरनुनासिकस्यात् ।६।४।४१।** विजायत इति विजावा । ओणृ अपनयने। अवावा । रोट् । रेट् । सुगण् । **क्विप् च।३।२।७६।** अयमपि दृश्यते । उखास्रत् । पर्णध्वत् । वाहभ्रट् । **अन्तः[३] ।७।४।२०।** पदान्तस्यानितेर्नस्य णत्वं स्यादुपसर्गस्थान्निमित्तात्परश्चेत् । हे प्राण्[४] । ( आशासः क्वौ उपधाया इत्वं वाच्यम् ) आशीः । इत्वोत्वे । गीः । पूः । 'मो नो धातोः ।' प्रतान् । प्रशान् । **गमः क्वौ ६।४।४०।** अनुनासिकलोपः । अङ्गगत् । ( गमादीनामिति वक्तव्यम् । ) परीतत् । संयत् । ( ऊङ् च गमादीनामिति वक्तव्यम् । ) लोपश्च । गूः । भूः । **स्थः क च । ३।२।७७।** चात्क्विप् । शंस्थः । शंस्थाः । **सुप्यजातौ णिनिस्ता-**

---

१ सुष्टु शृणातीति विग्रहः । २ प्रातः एतीति प्रातरित्वा इणः क्वनिपि 'ह्रस्वस्य पिति कृति'–इति तुक् । ३ अनितेरिति वर्तते । अन्तोऽत्र पदापेक्षया गृह्यते नानितेरपेक्षया अव्यभिचारात्तदाह पदान्तस्येत्यादि । ४ अन प्राणने 'अनुनासिकस्य क्विझलोः'–इति दीर्घः 'नङिसंबुद्ध्योः' इति नलोपो न ।

च्छील्ये ।३।२।७८। अजात्यर्थे धातोर्णिनिस्ताच्छील्ये द्योत्ये । उष्ण-भोजी । शीतभोजी । मनः ।३।२।८२। सुपि मन्यतेर्णिनिः । दर्शनी-यमानी । आत्ममाने खश्च ।३।२।८३। स्वकर्मके मनने वर्त्तमाना-न्मन्यतेः सुपि खश् चाण्णिनिः । पण्डितमात्मानं मन्यते पण्डितं-मन्यः । पण्डितमानी । इच एकाचोऽम्प्रत्ययवच्च ६।३।६८। इजन्ता-देकाचोऽम्स्यात्सच स्वाद्यम्वत् । खिदन्ते परे। 'औतोऽम्शसोः'। गांमन्यः। 'वाऽम्सोः' स्त्रियं मन्यः । स्त्रीं मन्यः । नृ नरं मन्यः । भुवं मन्यः । श्रियमात्मानं मन्यते श्रिमन्यं कुलम् । भाष्यकारप्रयोगाच्छ्रीशब्दस्य ह्रस्वो मुममोरभावश्च । भूते ।३।२।८४। अधिकारोऽयं वर्त्तमानेल-ड्डिति यावत् । करणे यजः ।३।२।८५।करणे उपपदे भूतार्थाद्यजेर्णिनिः कर्त्तरि । सोमेनेष्टवान्सोमयाजी । कर्मणि हनः।३।२।८६।पितृव्यघाती। ब्रह्मभ्रूणवृत्रेषु क्विप् ।३।२।८७। ब्रह्महा । भ्रूणहा । वृत्रहा । क्विप्-चेत्येव सिद्धे ब्रह्मादिष्वेव क्विबेवेति द्विविधनियमार्थमिदम् । एवम-ग्रेपि । सुकर्मपापमन्त्रपुण्येषु कृञः ।३।२।८९। सुकृत् । कर्मकृत् । पापकृत् । मन्त्रकृत् । पुण्यकृत् । सोमे सुञः ।३।२।९०। सोमसुत् । अग्नौचेः ।३।२।९१। अग्निचित् । कर्मण्यग्न्याख्यायाम् ।३।२।९२। कर्मण्युपपदे कर्मण्येव कारके चिनोतेः क्विप् अग्न्याधारस्थलविशेष-स्याख्यायाम् । श्येन इव चितः श्येनचित्) । कर्मणीनिर्विक्रियः ।३।२ ९३। कर्मण्युपपदे विपूर्वात्क्रीणातेरिनिः। (कुत्सितग्रहणं कर्तव्यम्)। सोम-

विक्रयी । घृतविक्रयी । दृशेः क्वनिप् । ३।२।९४। कर्मणि भूते । पारं दृष्टवान्पारदृश्वा । राजनि युधि कृञः ।३।२।९५। क्वनिप् । युधिरन्तर्भावितण्यर्थः । राजानं योधितवान् । राजयुध्वा । राजकृत्वा । सहे च ।३।२।९६। सहयुध्वा । सहकृत्वा । सप्तम्यां जनेर्डः ।३।२।९७। तत्पुरुषे कृति बहुलम् ।६।३।१४। ङेरलुक् । सरसिजम् । सरोजम् । उपसर्गे च संज्ञायाम् ।३।२।९९। प्रजाः । अनौ कर्मणि ।३।२।१००। अनुपूर्वाज्जनेः कर्मण्युपपदे डः । पुमांसमनुरुध्य जाता पुमनुजा । अन्येष्वपि दृश्यते ।३।२।१०१। अजः । द्विजः । ब्राह्मणजः । अपिशब्दः सर्वोपाधिव्यभिचारार्थः । तेन धात्वन्तरादपि कारकान्तरेष्वपि क्वचित् । परितः खाता परिखा । पञ्चम्यामजातौ ।३।२।९८। जातिशब्दवर्जिते पञ्चम्यन्ते जनेर्डः । संस्कारजः । अदृष्टजः । क्तक्तवतू निष्ठा ।१।१।२६। एतौ निष्ठासंज्ञौ स्तः । निष्ठा ।३।२।१०२। भूतार्थवृत्तेर्धातोर्निष्ठा स्यात् । तत्र तयोरेवेति भावकर्मणोः क्तः कर्त्तरि कृदिति कर्त्तरि क्तवतुः । स्नातं मया । स्तुतस्त्वया विष्णुः । विश्वं कृतवान् । अदो जग्धिर्ल्यप्ति किति ।२।४।३६। ल्यपि तादौ किति च । इकार उच्चारणार्थः । जग्धम् । निष्ठायामण्यदर्थे ।६।४।६०। ण्यदर्थौ भावकर्मणी ततोऽन्यत्र

---

१ 'अन्येभ्योऽपि दृश्यन्ते' इत्येव सिद्धे नियमार्थमिदम् दृशेः क्वनिबेव यथा स्यात् तत्सहचरितौ मनिन्वनिपौ माभूताम् इति । सोपपदप्रत्ययस्यैव निवर्त्तनान्निष्ठा तु भवत्येव पारं दृष्टवानिति । २ अत्र भाविनी संज्ञा आश्रीयते स प्रत्ययो भूते भवति यस्योत्पन्नस्य निष्ठा संज्ञेति तत्सामर्थ्यात् क्तक्तवत्वोः सिद्धयोर्निष्ठासंज्ञा निष्ठासंज्ञायां सिद्धायां क्तक्तवत्वोर्विधानमित्यन्योन्याश्रयो न ।

निष्ठायां क्षियोदीर्घः स्यात् । **क्षियो दीर्घात्** ।८।२।४६। निष्ठातस्य नः । क्षीणवान् । भावकर्मणोस्तु क्षितः कामो मया । ( ऊर्णोतेर्णुवद्भावो वाच्यः ) तेन एकाच्त्वान्नेट् । ऊर्णुतः । **रदाभ्यां निष्ठातो नः पूर्वस्य च दः** ।८।२।४२। र[1]दाभ्यां परस्य निष्ठातस्य नो निष्ठापेक्षया पूर्वस्य धातोर्दस्य च । शॄ शीर्णः । भिन्नः । छिन्नः । **संयोगादेरातो धातोर्यण्वतः** ।८।२।४३। यण्वत्संयोगादेरादन्तान्निष्ठातस्य नः।द्राणः। ग्लानः। **ल्वादिभ्यः** ।८।२।४४। एकविंशतेर्लूञादिभ्यः प्राग्वत् । लूनः ज्या वयोहानौ । **हलः** ।६।४।२। अङ्गावयवाद्धलः परं यत्संप्रसारणं तदन्तस्याङ्गस्य दीर्घः । जीनः । ( दुग्वोर्दीर्घश्च । ) दु गतौ दूनः । गु पुरीषोत्सर्गे । गूनः । ( पूञो विनाशे )[2] । पूना यवाः । विनष्टा इत्यर्थः । पूतमन्यत् । ( सिनोतेर्ग्रासकर्मकर्तृकस्य )[3] सिनो ग्रासः । ग्रासेति किम् । सिता पाशेन सूकरी । कर्मकर्तृके ति किम् । सितो ग्रासो देवदत्तेन । **ओदितश्च** ।८।२।४५। प्राग्वत् । भुजो भुग्नः । टु ओश्वि शूनः। **द्रवमूर्तिस्पर्शयोः श्यः** ।६।१।२४। द्रवस्य मूर्तौ काठिन्ये स्पर्शे-चार्थे श्यैङः संप्रसारणं स्यान्निष्ठायाम् । **श्योऽस्पर्शे** ।८।२।४७। श्यैङो निष्ठातस्य नः स्यादस्पर्शेऽर्थे । शीनं घृतम् । अस्पर्शे किम् । शीतं जलम्। द्रवमूर्तिस्पर्शयोरिति किम् । संश्यानो वृश्चिकः । शीतात्संकुचित इत्य-

१ इह रदाभ्यामित्येतत्तकारस्य विशेषणम् न निष्ठायाः तेन चरितं मुदितमित्यत्र तकारस्येटा व्यवधानान्न नत्वम् । तदेतदाह परस्य निष्ठातस्येति । २ धातूनामनेकार्थत्वात् 'पूञ् पवने' इत्यस्य विनाशे अपि प्रवृत्तिः । ३ ग्रासरूपं ग्रासकर्म तत्कर्तृ यस्य सिनोतेस्ततः परस्य निष्ठातस्य नः स्यादित्यर्थः ।

र्थः । **प्रतेश्च** ।६।१।२५। संप्रसारणं निष्ठायाम् । प्रतिशीनः । **विभाषाभ्यवपूर्वस्य** ।६।१।२६। तथा । अभिश्यानं घृतं अभिशीनं । अवश्यानः अवशीनो वृश्चिकः । व्यवस्थितविभाषेयम् । तेनेह न । समवश्यानः । **अञ्चोऽनपादाने** ।८।२।४८। निष्ठातस्य नः । **यस्य विभाषा** ७।२।१५।यस्य क्वचिद्विभाषयेड्विहितस्ततो निष्ठायामिण् न । उदितो वेति क्त्वायां वेट्त्वादिह नेट् । समक्नः । अनपादाने किम् । उदक्तमुदकं कूपात् । **दिवोऽविजिगीषायाम्** ।८।२।४९। द्यूनः । विजिगीषायां तु द्यूतम् । **निर्वाणोऽवाते** ।८।२।५०। अवाते इति छेदः । निपूर्वाद्वातेर्निष्ठातस्य नत्वं स्याद्वातश्चेत्कर्त्ता न । निर्वाणोऽग्निर्मुनिर्वा । वाते तु निर्वातो[1] वातः । **शुषः कः** ।८।२।५१। निष्ठातस्य कः । शुष्कः । **पचो वः** ।८।२।५२। पक्वः । **क्षायो मः** ।८।२।५३। क्षामः । **स्त्यः प्रपूर्वस्य** ।६।१।२३। प्रात्स्त्यः संप्रसारणं निष्ठायाम् । **प्रस्त्योऽन्यतरस्याम्** ।८।२।५४। निष्ठातस्य मो वा । प्रस्तीमः । प्रस्तीतः । प्रात्किम् । स्त्यानः । **अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः** ।८।२।५५। एते निपात्यन्ते । ञिफला फुल्लः निष्ठातस्य लत्वं निपात्यते । क्तवत्वेकदेशस्यापीदं निपातनमिष्यते । फुल्लवान् । अनुपसर्गात्किम् । **आदितश्च** ।७।२।५६। आकारेतो निष्ठाया इण्न । **तिच** ।७।२।८९। चरफलोरत उत्

---

१ एवं च वातेन हेतुना निर्वाणोदीप इत्यत्र न निषेधः । वातस्य कर्तृत्वाभावात् ।

२ अत्र फुल्ल विकसने इत्यस्मादुल्लाघेश्च पचाद्यचि क्षीबृ मदे कृश तनुत्वे आभ्यां च इगुपधलक्षणे कप्रत्यये च कृते फुल्ल इत्यादीनिरूपाणि सिध्यन्ति तथापि निष्ठायां फुल्तः इत्यादिरूपाणां निवृत्त्यर्थमिदं सूत्रम् ।

तादौ किति । प्रफुल्तः । प्रक्षीबितः । प्रकृशितः । प्रोल्लाघितः । ( उत्फुल्लसंफुल्लयोरुपसंख्यानम् । ) **नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम् ।८।२।५६।** निष्ठातस्य नः । नुन्नः । नुत्तः । विन्नः । वित्तः । उन्दी । **श्वीदितो निष्ठायाम् ।७।२।१४।** श्वयतेरीदितश्च निष्ठाया इण् न । उन्नः । उत्तः । इत्यादि । **नध्याख्यापॄमूर्छिमदाम् ।८।२।५७।** एभ्यो निष्ठातस्य नो न । ध्यातः । ख्यातः । पूर्तः । **राल्लोपः ।६।४।२१।** छ्वोःशूडनुनासिके चेत्यतोऽनुवृत्तेर्झलादावनुनासिकादौ च प्रत्यये । मूर्तः । मत्तः । **वित्तो भोगप्रत्यययोः ।८।२।५८।** विन्दतेर्निष्ठान्तस्य निपातोऽयं भोग्ये प्रतीतेचार्थे । वित्तः पुरुषः । अनयोः किम् । विन्नः । **भित्तं शकलम् ।८।२।५९** भिन्नमन्यत् । **ऋणमाधमर्ण्ये ।८।२।६०।** ऋतमन्यत् । **स्फायः स्फी निष्ठायाम् ।६।१।२२।** स्फीतः । **इण्निष्ठायाम् ।७।२।४७।** निरः कुषो निष्ठाया इट् । यस्य विभाषेति निषेधे प्राप्ते पुनर्विधिः । निष्कुषितः । **वसतिक्षुधोरिट् ।७।२।५२।** आभ्यां क्त्वानिष्ठयोर्नित्यमिट् । उषितः । क्षुधितः । **अञ्चेः पूजायाम् ।७।२।५३।** क्त्वानिष्ठयोरिट् । अञ्चितः । गतौ तु अक्तः । **लुभो विमोहने ।७।२।५४।** क्त्वानिष्ठयोरिट् नतु गार्ध्ये । लुभितः । गार्ध्ये तु लुब्धः । **क्लिशःक्त्वानिष्ठयोः ।७।२।५०।** इट् वा क्लिशितः क्लिष्टः । **पूङश्च ।७।२।५१।**

---

१ अत्र नुद विद उन्दी त्रा घ्रा इत्येतेभ्यो 'रदाभ्यां'–'संयोगादेरातो'–इत्याभ्यां नित्ये प्राप्ते ह्री इत्यस्त्वप्राप्ते च उभयत्र विभाषेयम् । २ तीषसहेति क्त्वायां विकल्पे प्राप्ते 'यस्य विभाषा' इति निष्ठायां निषेधे च प्राप्ते वचनम् ।

त्वानिष्ठयोरिड् वा । **पूङः क्त्वा च ।१।२।२२।** निष्ठासेट् किन्न स्या-
। पवितः । पूतः । क्त्वाग्रहणमुत्तरार्थम् । नोपधादित्यत्र हि क्त्वै-
संबध्यते । **निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः ।१।२।१९।** सेट् कि
। शयितः । (आदिकर्मणि निष्ठावक्तव्या) **आदिकर्मणि क्तः**
**र्त्तरि च ।३।४।७०।** चाद्भावकर्मणोः । **विभाषाभावादिकर्मणोः ।**
**।२।१७।** आदितो निष्ठाया इड् वा । प्रस्वेदितश्चैत्रः । प्रस्वेदितन्तेन ।
ञिष्विदेति भ्वादिरत्र गृह्यते । ञीद्भिः साहचर्यात् । स्विद्यते स्तु स्विदित
येव । ञिमिदा ञिक्ष्विदा दिवादी भ्वादी च । प्रमेदितः । प्रक्ष्वेदितः ।
धर्षितः । धर्षितन्तेन । सेट् किम् । प्रस्विन्नः । प्रस्विन्नन्तेनेत्यादि ।
**मृषस्तितिक्षायाम् ।१।२।२०।** सेट् निष्ठाकिन्न । मर्षितः । क्षमायां
म् । अपमृषितं वाक्यम् । अविस्पष्टमित्यर्थः । **उदुपधाद्भावादि-**
**कर्मणोरन्यतरस्याम् ।१।२।२१।** उदुपधात्परा भावादिकर्मणोः से-
निष्ठा वा किन्न । द्युतितम् । द्योतितम् । मुदितम् । मोदितं सा-
। प्रद्योतितः । प्रद्युतितः । प्रमुदितः । प्रमोदितः साधुः । उदुपधा-
म् । विदितम् । भावेत्यादिकिम् । रुचितं कार्षापणम् । सेट् किम् ।
म् । शब्विकरणेभ्य एवेष्यते । नेह गुध्यतेर्गुधितम् । **निष्ठायां सेटि**

---

१ आद्येषु क्षणेषु सर्वस्याः क्रियाया भूतत्वाभावान्निष्ठा न प्राप्नोतीति वचनम् ।
२ आदिकर्मणि क्तस्य कर्तरि विधानार्थं च । अत्र चकाराभावे तक्रकौण्डिन्यन्यायेन
भावकर्मणोर्न स्यात्तदाह । चादिति ।

।६।४।५२। णेर्लोपः। भावितः। भावितवान्। दृढः[1] **स्थूलबलयोः** ।७।२।२०। स्थूले बलवति च निपात्यते। **दधातेर्हिः** ।७।४।४०। तादौ किति। हितम्। **दोदद्घोः** ।७।४।४६। घुसंज्ञस्य दा इत्यस्य दद् तादौ किति। चर्त्वम्। दत्तः। **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** ।३।४।७२। एभ्यः कर्त्तरि क्तः स्याद्भावकर्मणोश्च। गङ्गां प्राप्तः। ग्लानः सः। लक्ष्मीमाश्लिष्टो हरिः। शेषमधिशयितः। **द्यतिस्यतिमास्थामित्तिकिति** ।७।४।४०। एषामित्तादौ किति। वैकुण्ठमधिष्ठितः। शिवमुपासितः। हरिदिनमुपोषितः[2]। राममनुजातः। गरुडमारूढः। विश्वमनुजीर्णः[3]। पक्षेप्राप्ता गङ्गा तेनेत्यादि। **क्तोधिकरणे-च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः** ।३।४।७६। एभ्योधिकरणे क्तः चाद्यथाप्राप्तम्। मुकुन्दस्यासितमिदमिदं[4] यातं रमापतेः। भुक्तमेतदनन्तस्येत्यूचुर्गोप्यो दिदृक्षवः ॥ १ ॥ पक्षे आसेरऽकर्मकत्वात्कर्त्तरि भावे च। आसितो मुकुन्दः। आसितं तेन। (गत्यर्थेभ्यः कर्त्तरि कर्मणि च) रमापतिरिदं यातः। तेनेदं यातम्। भुजेःकर्मणि। अनन्तेनेदं भुक्तम्।

---

१ अत्र 'हो ढः' इति ढत्वे 'ढो ढे लोपः' इत्यनेन लोपे च इष्टरूपे सिद्धेऽपि निपातनमिदं द्रढिमा इत्यत्र दृढशब्दादिमनिचि 'र ऋतो हलादेर्लघोः' इति रभावो न स्यात् ढलोपस्यासिद्धत्वेन लघुत्वाभावात् परिदृढय्य गत इत्यत्र 'ल्यपि लघुपूर्वात्' इति अयादेशोऽपि न स्यात् तस्मात् सिद्धत्वाभावार्थमेवेदं निपातनमावश्यकम्। २ 'वसतिक्षुधोः'–इति इट् 'शासिवसि'–इति षत्वम्। ३ जॄष् वयोहानौ 'ऋत इद्धातोः' इतीत्वम् रपरत्वम्। 'हलि च' इति दीर्घः 'रदाभ्याम्'–इति नत्वम् णत्वं च। ४ आस्यतेऽस्मिन्नित्यासितम् आसनमित्यर्थः यायतेऽस्मिन्निति यातं मार्गः भुज्यते अस्मिन्निति भुक्तम् भोजनमित्यर्थः। एषु त्रिष्वपि 'अधिकरणवाचिनश्च' इति कर्तरि षष्ठी।

वर्त्तमाने इत्यधिकृत्य । **ञीतः क्तः** ।३।२।१८७। क्ष्विण्णः । **मतिबुद्धिपूजार्थेभ्यश्च** ।३।२।१८८। राज्ञां मतः इष्टः बुद्धः विदितः पूजितः । अर्चितः । चकारोऽनुक्तसमुच्चयार्थः । शीलितः रक्षितः क्षान्तः आक्रुष्टो जुष्ट इत्यादि । **नपुंसके भावे क्तः** ।३।२।११४। क्लीबत्वविशिष्टे भावे कालसामान्ये क्तः । जल्पितं । हसितम् । **सुयजोर्ङ्वनिप्**।३।२।१०३। भूते। सुत्वा । यज्वा । **जीर्यतेरतृन्** ।३।२।१०४। जरन् । जरन्तौ । वासरूपन्यायेन निष्ठापि । जीर्णो जीर्णवान् । **छन्दसि लिट्** ।३।२।१०५। **लिटः कानज्वा** ।३।२।१०६। **क्वसुश्च** ३।२।१०७। भूतसामान्ये छन्दसि लिट् । तस्य कानच्क्वसू वास्तः । 'तङानावात्मनेपदम्' । चक्राणः । 'म्वोश्च' । जगन्वान् । कवयस्तु बाहुलकाल्लोकेपि प्रयुजन्ते । "तं तस्थिवासं नगरोपकण्ठे। श्रेयांसि सर्वाण्यधिजग्मुषस्ते"इत्यादि।**वस्वेकाजाद्घसाम्** ।६।२।६७। कृतद्विर्वचनानामेकाचामादन्तानां वसेश्च वसोरिट् स्यान्नान्येषाम् । आदिवान् । आरिवान्। ददिवान् । जक्षिवान्। एषां किम्। बभूवान्। **भाषायां सदवसश्रुवः**।३।२।१०८।सदादिभ्यो भूतसामान्ये भाषायां लिड् वा स्यात् तस्य च नित्यं क्वसुः। 'निषेदुषीमासनबन्धधीरः' । 'अध्यूषुषस्तामभवज्जनस्य' । शुश्रुवान् । **उपेयिवान-**

---

१ अत्र 'षुञ् अभिषवे' इत्यस्यैव ग्रहणम् यद्यपि 'निरनुबन्धकग्रहणे'- इत्यनया परिभाषाया 'षुप्रसैवर्ययोः' इत्यस्यैव ग्रहणं न्याय्यम् तथापि यज इत्युभयपदिना साहचर्यात्षुञ् इत्यस्यैव ग्रहणं युक्तमिति भावः ङ्वनिप् इत्यत्र ङकारस्तु सुनोतेर्गुणप्रतिषेधार्थः यजतेः संप्रसारणाभावार्थश्च क्वनिपि तु 'वच्स्वपि' इत्यादिना संप्रसारणं स्यादिति भावः पकारस्तु 'ह्रस्वस्य पिति, इति तुगर्थः ।

**नाश्वाननूचानश्च** ।३।२।१०९। एते निपात्यन्ते । उपादिणो लिड् वा तस्य क्वसुः । इट् उपेयिवान् । नात्रोपसर्गस्तन्त्रम् । ईयिवान् नञोऽश्नातेः क्वसोरिडभावश्च । अनाश्वान् अनोर्वचेः कर्त्तरि कानच् । वेदस्यानुवचनं कृतवानऽनूचानः । **लटः शतृशानचावप्रथमासमानाधिकरणे**।३।२।१२४। अप्रथमान्तेन सामानाधिकरण्ये लट एतौ वा स्तः । शबादिः । पचन्तं चैत्रं पश्य । **आने मुक्**।३।२।८२।अङ्गस्यातः । पचमानं चैत्रं पश्य ।लडित्यनुवर्त्तमाने पुनर्लड्ग्रहणात्प्रथमासामानाधिकरण्येपि क्वचित् । सन्द्विजः । **ईदासः** २।२।८३। आनस्य 'आदेः परस्य' । आसीनः । **विदेः शतुर्वसुः** ।७।२।३६। वेत्तेः परस्य शतुर्वसुरादेशो वा । विद्वान् विदन् । **तौ सत्** ।३।२।२७। तौ शतृशानचौ सत्संज्ञौ स्तः । **लृटः सद्वा** ।३।३।१४। करिष्यन्तं करिष्यमाणं पश्य । **ताच्छील्यवयोवचनशक्तिषु चानश्** ।३।२।१२८। अग्नौ जुह्वानः । कवचं बिभ्राणः । शत्रुं निघ्नानः । **आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु** ।३।२।३४। क्विपमभिव्याप्य वक्ष्यमामाणास्तच्छीलादिषु कर्तृषु बोध्याः । **तृन्** ।३।२।१३५। कर्त्ता कटान् । **स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच्**।३।२।१५८।आद्यास्त्रयश्चुरादा-

---

१ अत्र 'इट् वलादिलक्षण एव सतु 'नेड्वशि कृति' इति निषिद्धः क्रचादिनियमात् पुनः प्राप्तः सच 'वस्वेकाजाद्घसाम्' इति सूत्रेण कृतद्वित्वानामेकाचाम् आदन्तानां घसेश्च वसोरिट् नान्येषाम् इति नियमेन निषिद्धः अतः सएवानेन पुनर्विधीयते नापूर्वः तेन उपेयुषः इत्यादौ संप्रसारणविषये न प्रवर्तते । २ चानशोलादेशत्वा भावात् आत्मने पदत्वस्याप्यभावः अतः परस्मैपदिभ्योऽपि भवतीति ध्वनयन्नुदाहरति जुह्वान इति ।

वदन्ताः । स्पृहयालुः । (शीङो वाच्यः) । शयालुः । **अलङ्कृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच् ॥३।२।१३६॥** अलङ्करिष्णुः । **ग्लाजिस्थश्च ग्स्नुः ॥३।२।१३९॥** गिदयं नतु कित् । तेन स्थ ईत्वं न । ग्लास्नुः । गित्वान्न गुणः । जिष्णुः । स्थास्नुः । चाद्भुवः । श्र्युकः कितीत्यत्र गकारप्रश्लेषान्नेट् । भूष्णुः । **त्रसिगृधिधृषिक्षिपेः क्नुः ॥३।२।१४०॥** त्रस्नुः। गृध्नुः । धृष्णुः । क्षिप्नुः । **शमित्यष्टाभ्यो घिनुण् ॥३।२।१४१॥** उकार उच्चारणार्थ इति काशिका । अनुबन्ध इति भाष्यम् । तेन शमिनितरा शिमनीतरेत्यत्र उगितश्चेति ह्रस्वविकल्पः । नचैवं शमी शमिनावित्यादौ नुम्प्रसङ्गः झल्ग्रहणमपकृष्य झलन्तानामेव तद्विधानात् । नोदात्तोपदेशस्येति वृद्धिनिषेधः । शमी । तमीत्यादि । **संपृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाऽभ्याहनश्च ॥३।२।१४२॥** घिनुण् स्यात् । संपर्कीत्यादि । **वौ कषलसकत्थस्रंभः ॥३।२।१४३॥** विकाषी । **अपे च लषः ॥३।२।१४४॥** चाद्वौ । अपलाषी । विलासी । **चलनशब्दार्थादकर्मकाद्युच् ॥४।२।४८॥** चलनार्थाच्छब्दार्थाच्च युच् स्यात् । चलनः । चोपनः । कंपनः । शब्दनः । रवणः । अकर्मकात्किम् । पठिता विद्या । अनुदात्तेतः किम् । भविता । हलादेः किम् । एधिता । अकर्मका-

---

१ अत्र 'देवृदेवने इति भ्वादेर्ग्रहणम् । न तु ण्यन्तस्य दीव्यतेस्तस्य लाक्षणिकत्वात् अण्यन्तानां साहचर्याच्च ।

त्किम् । वासिता वस्त्रम् । **निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूञो वुञ्॥३।२।१४६॥** एभ्यो वुञ् । निन्दकः हिंसक इत्यादि । **देविक्रुशोश्चोपसर्गे ॥३।२।१४७॥** आदेवकः । आक्रोशकः । उपसर्गे किम् । देवयिता । क्रोष्टा । **लषपतपदस्थाभूवृषहनकमगमशृभ्य उकञ् ॥३।२।१५४॥** लाषुकः । पातुकः । **जल्पभिक्षकुट्टलुण्ठवृङः षाकन्॥३।२।१५५॥** जल्पाकः॥ **सनाऽऽशंसभिक्ष उः॥३।२।१६८॥** चिकीर्षुः । आशंसुः । भिक्षुः । **स्थेशभासपिसकसो वरच् ॥३।२।१७५॥** स्थावरः । इत्यादि । **यश्च यङः ॥३।२।१७६॥** यातेर्यङन्ताद्वरच् । अतोलोपः । तस्याचः परस्मिन्निति स्थानिवद्भावे प्राप्ते । **न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु ॥१।१।५८॥** पदस्य चरमावयवे द्विर्वचनादौ च कर्त्तव्ये परनिमित्तोजादेशो न स्थानिवत् । इति यलोपं प्रति स्थानिवत्त्वनिषेधाल्लोपोव्योर्वलीति यलोपः । अल्लोपस्य स्थानिवत्त्वमाश्रित्याल्लोपे प्राप्ते । (वरेलुप्तं न स्थानिवत्) । यायावरः । **भ्राजभासधुर्विद्युतोर्जिपृजुग्रावस्तुवः क्विप् ।३।२।१७७॥** विभ्राट् । भाः । धूः[1] । विद्युत् । ऊर्क्[2] । पूः । दृशिग्रहणस्याऽपकर्षणाज्जवतेर्दीर्घः । जूः । ग्रावस्तुत् । ( क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसंप्रसारणं च ) । वक्तीति वाक् । पृच्छतीति प्राट् । आयतं स्तौतीति आयतस्तूः ।

---

१ धुर्वी हिंसायाम् 'राल्लोपः' इति वलोपः 'र्वोरुपधाया'-इति दीर्घः । २ ऊर्ज बलप्राणनयोः 'चोः कुः' इति कुत्वम् रात्सस्येति नियमान्न संयोगान्त लोपः ।

कटं प्रवते कटप्रूः। जूरुकः। श्रयति हरिं श्रीः। (ध्यायतेःसम्प्रसारणं च)। धीः। दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदंशनहः करणे ३।२।१८२। दावादेः ष्ट्रन् करणेऽर्थे। दात्यनेन दात्रम्। नेत्रम्। तिकुयतयसिसुसरकसेषु च ।३।२।८। एषां दशानामिण्न। शास्त्रम्। योत्रम्। योक्त्रम्। स्तोत्रम्। तोत्रम्। सेत्रम्। सेक्त्रम्। मेढ्रम्। पत्रम्। दंष्ट्रा। नद्‌ध्री। हलसूकरयोः पुवः ।३।२।१८३। पूङ्पूञोः। करणे ष्ट्रन्। तच्चेत्करणं हलसूकरयोरवयवः हलस्य सूकरस्य वा पोत्रं मुखमित्यर्थः। अर्तिलू धू सू खन सह चर इत्रः ।३।२।१८। अरित्रम्। लवित्रम्। धवित्रम्। सवित्रम्। खनित्रम्। सहित्रम्। चरित्रम्। पुवः संज्ञायाम् ।३।२।१८५। पवित्रम्।

अथोणादयः। कृवापाजिमिस्वदिसाध्यशूभ्य उण्। करोतीति कारुः। वायुः। पायुर्गुदम्। जायुरौषधम्। मायुःपित्तम्। स्वादुः। साध्नोति परकार्यमिति साधुः। आशु शीघ्रम्। हरिमितयोर्द्रुवः। द्रुगतौ। अस्मात् हरिमितयोरुपपदयोः कुः सचडित्। हरिभिर्द्रूयते हरिद्रुर्वृक्षः। मितं द्रवतीति मितद्रुः। समुद्रः। शते च। शतधाद्रवतीति शतद्रुर्नदीभेदः। अन्दूहन्भूजम्बूकफेलूकर्कन्धूदिधिषूः। एते कूप्रत्ययान्तानिपात्यन्ते। शमेर्ढः। बाहुलकात् इत्संज्ञा ढस्य एयादेश इट् च नभवति। शण्ढः स्यात्पुंसि गोपतौ। करमेरठः। 'कमठः कच्छ-

---

१ ष्ट्रनः षित्वेऽप्यत्र 'षिद्गौरादिभ्यश्च' इत्यनेन नङीप् षितांङीषः अनित्यत्वात् अजादिषु दंष्ट्राशब्दस्य पाठात्।

पे पुंसि भाण्डभेदे नपुंसकम्' इति मेदिनी। **रमेर्वृद्धिः।** रामठं हिङ्गुः **शमेः खः।** शङ्खः। **कणेष्ठः।** कण्ठः। **अमन्ताड्डः** अमिति प्रत्याहारः। दण्डोऽस्त्री लगुडेपि स्यादित्यमरः। 'रण्डा मूषिकपर्ण्यां च विधवायां च योषिति' इतिमेदिनी 'खण्डोऽस्त्री शकलेनेक्षुविकारमणिभेदयोः' इति मेदिनी। मनज्ञाने। 'मण्डः पञ्चाङ्गुले शङ्कुभेदे क्लीबं तु वस्तुनि' इति मेदिनी। **पतिचण्डिभ्यामालञ्** । 'पातालं नागलोके स्याद्विवरे वडवानले' इति मेदिनी। चण्डालो मातङ्गः। प्रज्ञादित्वादणि चाण्डालोपीत्युज्वलदत्तः। तन्न। 'कुलालवरुडकर्मारनिषादचण्डालमित्राऽमित्रेभ्यश्छन्दसि' इति चण्डालशब्दात्स्वार्थे ण्ं विदधता वार्तिकेन तद्भाष्येण च सहविरोधात्। **गन्गम्यद्योः।** गङ्गा। अङ्गः पुरोडाशः। **भृञः किन्नुट्च।** भृञोगन्कित्स्यात्तस्य नुट् च। 'भृङ्गाः षिड्गाऽलिधुम्याटाः' । **शृणातेर्ह्रस्वश्च।** शृङ्गम्। **अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिणीभ्यो मन्।** एभ्यश्चतुर्दशभ्यो मन्। अर्मश्चक्षूरोगः। स्तोमः। सोमः। होमः। सर्मोगमनम्। धर्मः। क्षेमं कुशलम्। क्षोमम्। भाम आदित्यः। यामः। वामः शोभनदुष्टयोः। पद्मम्। यक्ष्मो रोगराजः। नेमः। **अवतेष्टिलोपश्च।** मन्प्रत्ययस्यायं टिलोपो नतु प्रकृतेः। अन्यथा डिदित्येव ब्रूयात्। **ज्वरत्वरस्रिव्यविमवामुपधायाश्च।६।४।२०।** एषामुपधावकारयो रूठ्कौ झलादावनुनासिकादौ च प्रत्यये। अत्र क्किती-ति नानुवर्त्तते। अवतेस्तुनिकृते ओतुरिति दर्शनात्। स्वरादिपाठादव्ययत्वम्। अवतीति ओम्। **ग्रसेराच।** ग्रासः। **अविसिविसिशुषिभ्यः कित्।**

बलम्।

चि।२।३।७४। लुप्तनकारान्नञ उत्तरपदस्याजादेर्नुट्। अनश्वः। नैकधेत्यादौ तु नशब्देन सह सुप्सुपेति समासः। **कुगतिप्रादयः ।२।२।१८।** एते समर्थेन नित्यं समस्यन्ते। कुत्सितः पुरुषः कुपुरुषः। **ऊर्यादिच्विडाचश्च ।१।४।६१।** ऊर्यादयः च्व्यन्ताडाजन्ताश्च क्रियायोगे गतिसंज्ञाः स्युः। ऊरीकृत्य। शुक्लीकृत्य। पटपटाकृत्या। (कारिकाशब्दस्योपसंख्यानम्।) कारिका क्रिया। कारिकाकृत्य। **अनुकरणं चानितिपरम् ।१।४।६२।** खाट्कृत्य। अनितिपरं किम्। खाडितिकृत्वा निरष्ठीवत्। **आदरानादरयोः सदसती ।१।४।६३।** सत्कृत्य। असत्कृत्य। **भूषणेऽलम् ।१।४।६४।** अलंकृत्य। भूषणे किम्। अलंकृत्वौदनं गतः। पर्याप्तमित्यर्थः। अनुकरणमित्यादि त्रिसूत्री स्वभावात्कृञ्विषया। **अन्तरपरिग्रहे ।१।४।६५।** अन्तर्हत्य। मध्ये हत्वेत्यर्थः। अपरिग्रहे किम्। अन्तर्हत्वा गतः। हतं परिगृह्य गत इत्यर्थः। **कणेमनसीश्रद्धाप्रतीघाते ।१।४।६६।** कणे हत्य पयः पिबति। मनो हत्य। कणेशब्दः सप्तमीप्रतिरूपको निपातोऽभिलाषाऽतिशये वर्तते। मनस्शब्दो प्यत्रैव। **पुरोऽव्ययम् ।१।४।६७।** पुरस्कृत्य। **अस्तं च ।१।४।६८।** अस्तमिति मान्तमव्ययं गतिसंज्ञं स्यात्। **अस्तं गत्य ।१।४।६९।** अच्छगत्यर्थ-

---

२ ऊरी, ऊररी, वेताली, धूसी, शकला, संसकला, ध्वंसकला, भ्रंसकला, गुलुगुधा, सजूः, फल, फली, विक्ली, आक्ली, आलोष्टी, केवाली, सेवाली, शेवाली, वर्षाली, मसमसा, मस्मसा, वौषट्, वषट्, श्रौषट्, स्वाहा, स्वधा, पाम्पी, प्रादुस्, श्रत्, आविस् ॥ इत्यूर्यादिः ॥ केचिदन्येऽप्यत्रपठ्यन्ते। तेच यथा। पाम्पाली, संकला, केवासी, वार्षाली, पार्दाली, आलम्बी, आक्ली, तन्थी, ताली, आताली, धूली, अश्मसा, वचला, मस्मसा, मष्मसा, वन्धा, इत्यादि ॥

**वदेषु ।१।४।६९।** अव्ययमित्येव । अच्छगत्य । अच्छोद्य । अभिमुखं गत्वाउक्तवेत्यर्थः । अव्ययं किम् । जलमच्छं गच्छति । **अदोनुपदेशे ।१।४।७०।** अदःकृत्यादः कृतं परं प्रत्युपदेशे प्रत्युदाहरणम् । अदःकृत्वा । अदःकुरु । **तिरोन्तर्द्धौ ।१।४।७१।** तिरोभूय । **विभाषा कृञि ।१।४।७२। तिरसोन्यतरस्याम् ।८।३।४२।** सोवास्यात्कुप्वोः । तिरःकृत्य । तिरस्कृत्य । तिरःकृत्वा। **उपाजेन्वाजे ।१।४।७३।** एतौ कृञि वा गतिसंज्ञौ । उपाजेकृत्य । अन्वाजेकृत्य । उपाजेकृत्वा । अन्वाजेकृत्वा । दुर्बलस्य बलमाधायेत्यर्थः **साक्षात्प्रभृतीनि च ।१।४।७४।** कृञि वा गतिसंज्ञानि स्युः । ( च्व्यर्थइति वक्तव्यम् ) । साक्षात्कृत्य । साक्षात्कृत्वा लवणंकृत्य । लवणंकृत्वा । मान्तत्वं निपातनात् । **अनत्याधानउरसिमनसी ।१।४।७५।** उरसि कृत्य । उरसि कृत्वा । अभ्युपगम्येत्यर्थः । मनसि कृत्य । मनसि कृत्वा । निश्चित्येत्यर्थः । अत्याधानमुपश्लेषस्तत्र न । उरसि कृत्वा पाणिं शेते । **मध्येपदेनिवचनेच ।१।४।७५।** एते कृञि गतिसंज्ञा वा स्युरनत्याधाने। मध्ये कृत्य। मध्ये कृत्वा । पदे कृत्य । पदे कृत्वा । निवचने कृत्य । निवचने कृत्वा । वाचं नियम्येत्यर्थः । **नित्यं हस्ते पाणावुपयमने ।१।४।७७।** कृञि । उपयमनं विवाहः । स्वीकारमात्रमित्यन्ये । हस्ते कृत्य । पाणौ कृत्य । **प्रा-**

---

१ साक्षात्, मिथ्या, चिन्ता, भद्रा, रोचना, आस्था, अमा, श्रद्धा, प्राजर्या प्राजरुहा, वीजया, बीजरुहा, संसर्या, अर्थे, लवणम्, उष्णम्, शीतम्, उदकम्, आर्द्रम्, अग्नौ, वशे, विकसने, विहसने, प्रतपने, प्रादुस, नमस्, आविस्, **आकृतिगणोऽयम् ।।** क्षत्रलवणादीनां पञ्चानां गतिसंज्ञा संनियोगेनामन्तत्वं निपात्यते ।

**ध्वं बन्धने।१।४।७८।** प्राध्वमित्यव्ययम्। प्राध्वं कृत्य। बन्धनेनुकूलं कृत्वेत्यर्थः। प्रार्थनादिनात्वानुकूल्यकरणे प्राध्वं कृत्वा। **जीविकोपनिषदावौपम्ये।१।४।७९।** जीविकामिव कृत्वा जीविकाकृत्य। औपम्येकिम्। जीविकां कृत्वा। प्रादिग्रहणमगत्यर्थम्। सुपुरुषः। (प्रादयोगताद्यर्थे प्रथमया) प्रगत आचार्यः प्राचार्यः। (अत्यादयः क्रान्ताद्यर्थे द्वितीयया)। अतिक्रान्तो मालामिति विग्रहे। **एकविभक्तिचापूर्वनिपाते।१।२।४४।** विग्रहे यन्नियतविभक्तिकन्तदुपसर्जनं नतु तस्य पूर्वनिपातः। **गोस्त्रियोरुपसर्जनस्य।१।३।४८।** उपसर्जनंयो गोशब्दः स्त्रीप्रत्ययान्तं च तदन्तस्य प्रातिपदिकस्य ह्रस्वः। अतिमालः। (अवादयः क्रुष्टाद्यर्थे तृतीयया)। अवक्रुष्टः। कोकिलयाऽवकोकिलः। (पर्यादयो ग्लानाद्यर्थे चतुर्थ्या)। परिग्लानोऽध्ययनाय पर्यध्ययनः। (निरादयः क्रान्ताद्यर्थे पञ्चम्या)। निष्क्रान्तः कौशांब्याः निष्कौशांबिः। **तत्रोपपदं सप्तमीस्थम्।३।१।९२। उपपदमतिङ्।२२।१९।** उपपदं समर्थेन नित्यं समस्यते। अतिङश्च समासः। कुंभं करोतीति कुम्भकारः। अतिङ्किम्। माभवान्भूत्।। माङिलुङीति सप्तमीनिर्देशान्माङुपपदम्। गतिकारकोपपदानां कृद्भिः समासवचनं प्राक् सुबुत्पत्तेः। व्याघ्री। कच्छपी। अश्वक्रीतीत्यादि। **अमैवाऽव्ययेन।२।२।२०।** अमैवतुल्यविधानं यदुपपदं तदेवाव्ययेन सह समस्यते। स्वादुंकारम्। 'स्वादुमिणमुल्' इति णमुल्। नेह। 'कालसमयवलोसुतुमुन्'। कालः समयो वेला वा भोक्तु-

---

१ पूर्वेण सिद्धे नियमोयम्। २ नियमबललभ्योयमेवकारो नतु सूत्रस्थः। यस्मिन्नुपपदे येन वाक्येन अमेव विहितस्तदेवोपपदमव्ययेन समस्यतेनान्यदित्यर्थः।

म्। अमैवेति किम्। अग्रे भोजम्। अग्रे भुक्त्वा। विभाषाग्रे प्रथमपूर्वेष्विति क्त्वाणमुलौ। अमाचान्येन च तुल्यविधानमेतत्[1]। **तृतीयाप्रभृतीन्यन्यतरस्याम् ।२।२।२१।** उपदंशस्तृतीयायामित्यादीन्युपपदान्यमन्तेनाव्ययेन सह वा समस्यन्ते। मूलकेनोपदंशं भुङ्क्ते मूलकोपदंशम्। उपदंशस्तृतीयायामिति णमुल्। **क्त्वा च ।२।२।२२।** तृतीयाप्रभृतीन्युपपदानि क्त्वान्तेन सह वा समस्यन्ते। उच्चैः कृत्वा। **अव्यये यथाभिप्रेताख्याने कृञः क्त्वाणमुलौ ।३।४।५९। तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः ।५।४।८६।** संख्याव्ययादेरङ्गुल्यन्तस्य तत्पुरुषस्य समासान्तोऽच् स्यात्। द्वे अङ्गुली प्रमाणमस्य द्व्यङ्गुलम्। निरङ्गुलम्। **अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः ।५।४।८७।** एभ्यो रात्रेरच् स्यात्। चात्संख्याव्ययादेः। अहर्ग्रहणं द्वन्द्वार्थम्[2]। **रात्राह्नाहाः पुंसि। २।४।२९।** एते पुंस्यवे। अहश्च रात्रिश्चाहोरात्रः। सर्वरात्रः। पूर्वरात्रः। संख्यातरात्रः। (संख्यापूर्वं रात्रं क्लीबम्)। द्विरात्रम्। अतिरात्रः। **राजाहःसखिभ्यष्टच् ।५।४।९१।** एतदन्तात्तत्पुरुषाट्टच्। परमराजः। कृष्णसखः। **अह्नष्टखोरेव ।६।४।१४५।** टिलोपः[3]। उत्तमाहः। **अह्नोऽह्न एतेभ्यः ।५।४।८८।** सर्वादिभ्योऽहन्शब्दस्याह्नादेशः समा-

---

१ उभयत्र विभाषेयम्। अमैवतुल्यविधानस्य प्राप्ते अमा चान्येन च तुल्यविधानस्याप्राप्ते चारम्भात्। २ अहोरात्रिरित्यत्र षष्ठीतत्पुरुषस्यासंभवादिति भावः। ३ 'नस्तद्धिते' इत्येव सिद्धे नियमार्थमिदम्। एवकारस्तु अन्ह एव टखयोरिति विपरीतनियमनिरासार्थः। 'आत्माध्वानौ खे' इति प्रकृतिभावविधानेन तन्निरासे तु प्रतिपत्तिगौरवंस्यादिति भावः।

सान्ते परे । **अह्नोदन्तात्** ।८।४।७। अदन्तपूर्वपदस्थान्निमित्तादह्नो नस्य णः । सर्वाह्णः । **न संख्यादेः समाहारे** ।५।४।८९। अह्नोह्लादेशो न । द्व्यहः । **उत्तमैकाभ्यां च** ।५।४।९०। अह्नोह्लादेशो न । उत्तमशब्दोन्त्यार्थः पुण्यशब्दमाह । (पुण्यसुदिनाभ्यामह्नः क्लीबतेष्टा)। पुण्याहम् । सुदिनाहम् । एकाहः । **अग्राख्यायामुरसः** ।५।४।९३। टच् । अश्वानामुरइव अश्वोरसम् । मुख्योश्व इत्यर्थः । **ग्रामकौटाभ्यां च तक्ष्णः** ।५।४।९४। ग्रामतक्षः । कौटतक्षः । **अतेः शुनः** ।५।४।९३। अतिश्वो वराहः । **उपमानादप्राणिषु** ।५।४।९७। अप्राणिविषयोपमानवाचिनः शुनष्टच् । आकर्षः श्वेव आकर्षश्वः । **उत्तरमृगपूर्वाच्च सक्थ्नः** ।५।४।९८। चादुपमानात् । उत्तरसक्थम् । मृगसक्थम् । पूर्वसक्थम् । फलकमिवसक्थि फलकसक्थम् । **नावोद्विगोः** ।५।४।९९। द्विनावम् । त्रिनावम् । **अर्द्धाच्च** ।५।४।१००। अर्द्धनावम् । **खार्याः प्राचाम्** ।५।४।१०१। द्विगोरर्द्धाच्च खार्याष्टज्वा द्विखारम् । द्विखारि । अर्द्धखारम् । अर्द्धखारी । **द्वित्रिभ्यामञ्जलेः** ।५।४।१०२। द्व्यञ्जलम् । द्व्यञ्जलि । **ब्रह्मणो जानपदाख्यायाम्** ।५।४।१०४। ब्रह्मान्तात्तत्पुरुषाट्टच् । सुराष्ट्रे ब्रह्मा सुराष्ट्रब्रह्मः । **कुमहद्भ्यामन्यतरस्याम्** ।५।४।१०५। कुब्रह्मः । कुब्रह्मा । महाब्रह्मः । महाब्रह्मा । 'प्रकारवचने जातीयर्' । महाप्रकारो महाजातीयः । **द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः** ।६।३।४७। आत्स्यात् । द्वादश । अष्टादश । अबहुव्रीह्यशीत्योः किम् ।

द्विनाः । द्व्यशीतिः । ( प्राक्शताद्वक्तव्यम् ) । नेह । द्विशतम् । **त्रेस्त्रयः ।६।३।४८।** त्रिशब्दस्य त्रयसादेशः स्यात्पूर्वविषये । त्रयोदश । त्रयोविंशतिः । **विभाषाचत्वारिंशत्प्रभृतौ सर्वेषाम् ।६।३।४९।** द्व्यष्टनस्त्रेश्च प्रागुक्तं वा चत्वारिंशदादौ परे । द्विचत्वारिंशत् । द्वाचत्वारिंशत् । अष्टचत्वारिंशत् । अष्टाचत्वारिंशत् । त्रिचत्वारिंशत् । त्रयश्चत्वारिंशत् । एवं पञ्चाशत्षष्टिसप्ततिनवतिषु । **परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः ।२।४।२६।** कुक्कुटमयूर्याविमे । मयूरीकुक्कुटाविमौ । अर्द्धपिप्पली । द्विगुप्राप्तापन्नालं पूर्वगतिसमासेषु न । पञ्चसु कपालेषु संस्कृतः पञ्चकपालः पुरोडाशः । प्राप्तो जीविकां प्राप्तजीविकः । आपन्नजीविकः । अलंकुमारिः । अत एव ज्ञापकात् समासः । निष्कौशांबिः । **पूर्ववदश्ववडवौ।२।४।२७।** द्वित्वमतन्तम् । अश्ववडवौ । अश्ववडवान् । **अपथं नपुंसकम् ।२।४।२९।** तत्पुरुष इत्येव । अन्यत्र तु अपथो देशः । कृतसमासान्तग्रहणान्नेह । अपन्थाः । ( अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः। पञ्चमूलि । आबन्तोवा । पञ्चखट्वम् । पञ्चखट्वी । पात्राद्यन्तस्य न । पञ्चपात्रं त्रिभुवनम् । चतुर्युगम् । **छायाबाहुल्ये ।२।४।२२।** छायान्तस्तत्पुरुषो नपुंसकं स्यात् । पूर्वपदार्थबाहुल्ये । इक्षुणां छाया इक्षुच्छायम् । **सभाराजामनुष्यपूर्वा।२।४।२३।** राजपर्यायपूर्वोऽमनुष्यपूर्वश्च सभान्तस्तत्पुरुषो नपुंसकं स्यात् । इन सभम् ईश्वरसभम् । (अमनुष्यशब्दो रूढ्या रक्षःपिशाचादीनाह )।

१ अत्र द्वन्द्वशब्देन इतरेतरद्वन्द्वो गृह्यते नतु समाहारः तस्य 'स नपुंसकम्' इति हि अपवादः ।

रक्षः सभम् । पिशाचसभम् । **विभाषा सेनासुराच्छायाशालानिशानाम् ।२।४।२५।** एतदन्तस्तत्पुरुषः क्लीबं वा । ब्राह्मणसेनम् । ब्राह्मणसेना । इत्यादि । **अशाला च ।२।४।२४।** संघातार्था या सभा तदन्तस्तत्पुरुषः क्लीबं स्यात् । स्त्रीसभम् । स्त्रीसंघात इत्यर्थः । अशालाकिम् । धर्मसभा । धर्मशालेत्यर्थः । **अर्द्धर्चाः पुंसि च ।२।४।३१।** अर्द्धर्चादयः पुंसि क्लीबे च स्युः । अर्द्धर्चम् । अर्द्धर्चः । एवं ध्वजतीर्थशरीरमण्डपयूषदेहांकुशकलशसूत्रपात्रादयः । सामान्ये नपुंसकम् । मृदु पचति । प्रातः कमनीयम् ॥ इति तत्पुरुषः ॥

---

१ अर्धर्च्च, गोमय, कषाय, कार्षापण, कुतप, कुणप, कपाट, शंख, गूथ-यूथ, ध्वज, कवन्ध, पद्म, गृह, सरक, कंस, दिवस, यूष, अन्धकार, दण्ड, कमण्डलु, मंड, भूत, द्वीप, द्यूत, चक्र, धर्म, कर्म, मोदक, शतमान, यान, नख, नखर, चरण, पुच्छ, दाडिम, हिम, रजत, सक्तु, पिधान, सार, पात्र, घृत, सैंधव, औषध, आढक, चषक, द्रोण, खलीन, पात्रीव, षष्टीक, वार, बाण, प्रोथ, कपित्थ, शुष्क, शाल, शील, शुक्ल, शीधु, कवच, रेणु, ऋण, कपट, शीकर, मुसल, सुवर्ण, वर्ण, पूर्ण, चमस, क्षीर, कर्ष, आकाश, अष्टपद, मङ्गल, निधान, निर्यास, जम्भ, वृत्त, पुस्त, बुस्त, क्ष्वेडित, शृंग, निगड, खल, मधु, मूल, मूलक, स्थूल, श्वालनाव, वप्र, विमान, मुख, प्रग्रीव, शूल, वज्र, कटक, कण्टक, कर्पट, शिखर, कल्क, नाट, मस्तक, वलय, कुसुम, तृण, पङ्क, कुण्डल, किरीट, कुमुद, अर्बुद, अङ्कुश, तिमिर, आश्रम, भूषण, इल्कस, मुकुल, वसन्त, तडाग, पिटक, विटङ्क, विडंग, पिण्याक, माष, कोश, फलक, दिन, दैवत, पिनाक, समर, स्थाणु, अनीक, उपवास, शाक, कर्पास, विशाल, चषाल, खण्ड, दर, विटप, रण, बल, मृणाल, हस्त, आर्द्र, हल, सूत्र, ताण्डव, गाण्डीव, मण्डप, पटह, सौध, योध, पार्श्व, शरीर, देह, फल, जल, पुर, राष्ट्र, बिम्ब, अम्बर, कुट्टिम,

शेषो बहुव्रीहिः।२।२।२३। अधिकारोऽयं प्राग्द्वन्द्वात्।**अनेकमन्यपदार्थे** ।२।२।२४। अनेकं प्रथमान्तमन्यपदार्थे वर्त्तमानं वा समस्यते स बहुव्रीहिः । **सप्तमी विशेषणे बहुव्रीहौ** ।२।३५। सप्तम्यन्तं विशेषणं बहुव्रीहौ पूर्वं स्यात् । **हलदन्तात्सप्तम्याः संज्ञायाम्** ।६।३।९। हलन्तादन्ताच्च सप्तम्या अलुक् । कण्ठे कालः । अतएव ज्ञापकाद्व्यधिकरणपदो बहुव्रीहिः । प्राप्तमुदकं यं स प्राप्तोदको ग्रामः । ऊढरथोऽनड्वान् । उपहृतपशू रुद्रः । उद्धृतौदना स्थाली । पीताम्बरो हरिः। वीरपुरुषो ग्रामः । (प्रादिभ्यो धातुजस्य वाच्यो वाचोत्तरपदलोपः) । प्रपतितपर्णः प्रपर्णः। ( नञोऽस्त्यर्थानाञ्चोत्तरपदलोपः ) । अविद्यमानपुत्रोऽपुत्रः । **स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियाऽपूरणीप्रियादिषु** ।६।३।३४। उक्तपुंस्कात्पर ऊङभावो यत्र तथाभूतस्य

---

मण्डल, कुक्कुट, कुडप, ककुद, खण्डल, तोमर, तोरण, मञ्चक, पञ्चक, पुङ्ख, बाल, छाल, वल्मीक, वर्ष, वस्त्र, वसु, उद्यान, उद्योग, स्नेह, स्तन, स्तेन,स्वर, संगम, निष्क, क्षेम, शूक, छत्र, क्षत्र, पवित्र, यौवन, कलह, पालक, वल्कल, कुञ्ज, विहार, लोहित, विषाण, भवन, अरण्य, पुलिन, हल, दृढ, आसन ऐरावत शूर्प, तीर्थ, लोमश, तमाल, लोह, दण्डक, शपथ, प्रतिसर, दारु, धनुसुमान, वर्चस्क, कूर्च, तण्डक, मठ, सहस्र, ओदन, प्रवाल, शकट, अपराण्ह, नीड, शकल, तण्डुल, मुस्तक, इत्यर्धर्चादिः।।२ अत्र शेषहणं व्यर्थं उन्मत्तगङ्गम् इत्यादौ समासान्तं आकडाराधिकारे पाठात् एकस्या एव संज्ञायाः प्रवृत्ता अव्ययीभावसंज्ञया निरवकाशया बहुव्रीहिसंज्ञाया बाधात्तत्रास्याप्रवृत्तेः । इत्येतदभिप्रेत्य सि० कौ० अस्य प्रयोजनं वृत्तम् 'द्वितीया श्रित–' इत्यादिना यस्य त्रिकस्य विशिष्य समासो नोक्तः स शेषः प्रथमान्तमित्यर्थ इति ।

स्त्रीवाचकशब्दस्य पुंवाचकस्येव रूपं स्यात्। समानाधिकरणे स्त्रीलिङ्गे उत्तरपदे न तु पूरण्यां प्रियादौ च परतः । गोस्त्रियोरिति ह्रस्वः। चित्रगुः । रूपवद्भार्यः । अनूङः किम् । वामोरू भार्यः । पूरण्यां तु । **अप्पूरणीप्रमाण्योः ।५।४।११६।** पूरणार्थप्रत्ययान्तं यत्स्त्रीलिङ्गं तदन्तात्प्रमाण्यन्ताच्च बहुव्रीहेरप् स्यात् । कल्याणी पञ्चमी यासां रात्रीणां ताः कल्याणीपञ्चमारात्रयः । स्त्रीप्रमाणी यस्य स्त्रीप्रमाणः । पुंवद्भावनिषेधोप्प्रत्ययश्च प्रधानपूरण्यामेव । ( रात्री पूरणी वाच्या चेत्युक्तोदाहरणे मुख्या) अन्यत्र तु । **नद्यृतश्च ।५।४।१५३।** नद्युत्तरपदादृदन्तोत्तरपदाच्च बहुव्रीहेः कप् । पुंवद्भावः। **केणः।७।४।१३।** ह्रस्वः । इतिप्राप्ते । **न कपि।७।४।१४।** ह्रस्वः। कल्याणपञ्चमीकः पक्षः। अत्र तिरोहितावयवभेदस्य पक्षस्यान्यपदार्थतया रात्रिरप्रधानम्। बहुकर्तृकः।अप्रियादिषु किम् । कल्याणीप्रियः । प्रिया। मनोज्ञा । कल्याणी । सुभगा । दुर्भगा । भक्तिः । सचिवा । स्वसा । कान्ता । क्षान्ता । समा । चपला । दुहिता । वाला । वामा । अबला । तनया । सामान्ये नपुंसकम्। दृढं भक्तिर्यस्य स दृढभक्तिः । स्त्रीत्वविवक्षायां तु दृढाभक्तिः। **तसिलादिष्वाकृत्वसुचः।६।३।३५।** तसिलादिषु कृत्वसुजन्तेषु स्त्रियाः पुंवत्। परिगणनं कर्तव्यम्। त्रतसौ तरप्तमपौ चरट्जातीयरौ। कल्पप्देशीयरौ । रूपप्पाशपौ। थाल् तिल्थ्यनौ एषु। परेषु स्त्रियाः पुंवत्। बह्वीषु इति बहुत्र । बहुत इत्यादि । त्वतलोर्गुणवचनस्य । शुक्लत्वम् शुक्लता । ( भस्याढेतद्धिते)। हस्तिनीनां समूहो हास्तिकम्। अढेकिम्।

रौहिणेयः। ( कुक्कुट्यादीनामण्डादिषु )। कुक्कुटाण्डम् मृगपदम्। मृगक्षीरम्। काकशावः। **क्यङ् मानिनोश्च** ।६।३।३६। पुंवत्। एनीवाचरति एतायते। श्येनीवाचरति श्येतायते। दर्शनीयां स्त्रियं मन्यते दर्शनीयमानिनी। **न कोपधायाः** ।६।३।३७। स्त्रियाः। पुंवत्। पाचिकाभार्यः। रसिकाभार्यः। मद्रिकायते। मद्रिकामानिनी। कोपधप्रतिषेधे तद्धितवुग्रहणम्। नेह। पाकभार्यः। **संज्ञापूरण्योश्च** ।६।३।३८। न पुंवत्। दत्ताभार्यः। पञ्चमीभार्यः। **वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे** ।६।३।३९। वृद्धिशब्देन विहिता या वृद्धिस्तद्धेतुर्यस्तद्धितोऽरक्तविकारार्थस्तदन्तात्स्त्री न पुंवत्। स्रौघ्नी भार्यः। रक्ते तु काषायकन्थः। विकारे तु हैममुद्रिकः। **स्वाङ्गाच्चेतः** ।६।३।४०। स्वाङ्गाद्य ईकारस्तदन्तात्स्त्री न पुंवत्। सुकेशीभार्यः। स्वाङ्गात्किम्। पटुभार्यः। ईतः किम्। अकेशभार्यः। ( अमानिनीति वक्तव्यम् ) सुकेशमानिनी। **जातेश्च** ।६।३।४१। न पुंवत्। ब्राह्मणीभार्यः। शूद्राभार्यः। **संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये** ।२।२।२५। संख्ययार्थया संख्ययाऽव्ययादयः समस्यन्ते स बहुव्रीहिः। **बहुव्रीहौ संख्येयेडजबहुगणात्** ।५।४।७३। संख्येये योबहुव्रीहिस्तस्माड्डच् समासान्तः। दशानां समीपे ये सन्ति ते उपदशाः। अबहुगणात् किम्। उपबहवः। उपगणाः। **तिविंशतेर्डिति** ।६।४।१४

---

१ कुक्कुटी, मृगी, काकी, अण्ड, पद, शाव, अङ्कुस, भ्रुकुटी, इतिकुक्कुट्यादिरण्डादिश्च ॥

२। विंशतेर्भस्य तेर्लोपो डिति। आसन्नविंशाः विंशतेरासन्ना इत्यर्थः। अदूरत्रिंशाः। अधिकचत्वारिंशाः। द्वौ वा त्रयो वा द्वित्राः। **दिङ्नामान्यन्तराले ।२।२।२६।** दिशोनामान्यन्तराले वाच्ये प्राग्वत्। दक्षिणस्याः पूर्वस्याश्च दिशोर्यदन्तरालं दक्षिणपूर्वा। **तत्र तेनेदमिति सरूपे ।२।२।२७।** सप्तम्यन्तेग्रहणविषये सरूपोपपदे तृतीयान्ते च प्रहरणविषये इदं युद्धं प्रवृत्तमित्यर्थे समस्येते कर्मव्यतिहारे। **इच् कर्मव्यतिहारे ।५।४।१२७। अन्येषामपि दृश्यते ।६।३।१३७।** दीर्घः। केशेषु केशेषु गृहीत्वा इदं युद्धं प्रवृत्तं केशाकेशि। दण्डैश्च दण्डैश्च प्रहृत्येदं युद्धं प्रवृत्तं दण्डादण्डि। मुष्टीमुष्टि। **तेन सहेति तुल्ययोगे।२।२।२८।** तुल्ययोगेवर्त्तमानं सहेत्यन्तं तृतीयांतेन प्राग्वत्। **वोपसर्जनस्य।६।३।८२।** बहुव्रीहेरवयवस्य सहस्य सः स्याद्वा। पुत्रेण सह सपुत्रः सहपुत्रोवा गतः। **प्रकृत्याशिषि ।६।३।८३।** सहशब्दः। स्वस्तिराज्ञे सहपुत्राय सहामात्याय। (अगोवत्सहलेष्विति वक्तव्यम्) सवत्साय सहलाय। **बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच् ।५।४।११३।** स्वाङ्गवाचि सक्थ्यक्ष्यन्ताद्बहुव्रीहेः षच्। दीर्घसक्थः। जलजाक्षी। स्वाङ्गात्किम्। दीर्घसक्थिशकटम्। स्थूलाक्षा वेणुयष्टिः। अक्ष्णोदर्शनादिति वक्ष्यमाणोच्। **द्वित्रिभ्यां ष मूर्ध्नः ।५।४।११५।** आभ्यां मूर्ध्नः षः स्यात् बहुव्रीहौ।

---

१ अत्र प्रहरणविषयेत्यादिविषयविशेष इतिशब्दाल्लभ्यते सहि लौकिकीं विवक्षां दर्शयति लोके केशाकेशीत्यादिप्रयोगे यावानर्थः प्रतीयते तावत्यर्थे बहुव्रीहिर्भवतीत्यर्थः।

द्विमूर्द्धः। त्रिमूर्द्धः। **अन्तर्बहिर्भ्यांच लोम्नः** ।५।४।११७। अपूस्यात्। अन्तर्लोमः। बहिर्लोमः। **पादस्य लोपोऽहस्त्यादिभ्यः** ।५।४।१२८। हस्त्यादिवर्जितादुपमानात्परस्य पादस्य लोपः। व्याघ्रस्येव पादौ यस्य व्याघ्रपात्। अहस्त्यादिभ्यः किम्। हस्तिन इव पादौ यस्य हस्तिपादः। कुसूलपादः। **संख्या सुपूर्वस्य** ।५।४।१४०। पादशब्दस्य लोपः द्विपात् सुपाद्। **उद्विभ्यां काकुदस्य** ।५।४।१४८।लोपः। उत्काकुत्। विकाकुत्। **पूर्णाद्विभाषा** ।५।४।१४९। पूर्णकाकुत्। पूर्णकाकुदः। **सुहृद्दुर्हृदौ मित्रामित्रयोः** ।५।४।१५०। सुहृन्मित्रम्। दुर्हृदमित्रः। ( नेतुर्नक्षत्रे अप् वक्तव्यः )। मृगो नेता यासां रात्रीणां ताः मृगनेत्रा रात्रयः। **अजूनासिकायाः संज्ञायां नसंचास्थूलात्** ।५।४।११८। नासिकान्ताद्बहुव्रीहेरच् नासिकाशब्दश्च नसंप्राप्नोति नंतु स्थूलपूर्वात्। **पूर्वपदात्संज्ञायामगः** ।७।४।३। पूर्वपदस्थान्निमित्तात्परस्य नस्य णो न तु गकारव्यवधाने। द्रुरिव नासिका अस्य द्रुणसः। ( खुरखराभ्यां वा नस् )। खुरणाः। खरणाः। पक्षेअजपीष्यते। खुरणसः खरणसः। **उपसर्गाच्च** ।५।४।११९। उन्नसः। ( वेर्ग्रोवक्तव्यः )। विगता नासिकाऽस्य विग्रः। ख्यश्च। विख्यः। **नञ्दुःसुभ्यो हलिसक्थ्योरन्यतरस्याम्** ।५।४।१२१। अहलः। अहलिः।

---

१ हस्तिन्, कुशल, अश्व, कशिक, कुरुत, कटोल, कटोलक, गण्डोल, गण्डोलक, कण्डोल, कण्डोलक, अज, कपोल, जाल, गण्ड, महेला, दासी, गणिका, कुसूल, इति हस्त्यादिः ॥

असक्थः । असक्थिः । एवं दुःसुभ्यां शक्तयोरितिपाठान्तरम् । अशक्तः । अशक्तिः । **नित्यमसिच् प्रजामेधयोः** ।५।४।१२२। नञ्दुःसुभ्य एव । अप्रजाः । अमेधाः । दुर्मेधाः । सुमेधाः । **धर्मादनिच् केवलात्** ।५।४।१२४। केवलपूर्वपदाद्यो धर्मशब्दस्तदन्ताद्बहुव्रीहेरनिच् । कल्याणधर्मा केवलात् किम् । परमस्वोधर्मो यस्येति त्रिपदे बहुव्रीहौ माभूत् । परमस्वधर्मः । 'इच्कर्मव्यतिहारे' केशाकेशि । मुशलामुशलि । **प्रसंभ्यां जानुनोर्ज्ञुः** ।५।४।१२९। प्रज्ञुः संज्ञुः । **ऊर्ध्वाद्विभाषा** ।५।४।१३१। ऊर्ध्वज्ञुः । ऊर्ध्वजानुः । **ऊधसोनङ्** ।५।४।१३१। **कुण्डोघ्नी** । **धनुषश्च** ।५।४।१३२। धनुरन्ताद्बहुव्रीहेरनङादेशः । शार्ङ्गधन्वा । **वासंज्ञायाम्** ।५।४।१३३। शतधन्वा । शतधनुः । **जायायानिङ्** ।५।४।१३४। जायान्तस्य बहुव्रीहेर्निङादेशः । **लोपोव्योर्वलि** ।६।१।६६। युवतिर्जायाऽस्य युवजानिः । **गन्धस्येदुत्पूतिसुसुरभिभ्यः**।५।४।१३५।उद्गन्धिः । पूतिगन्धिः। सुगन्धिः। **उपमानाच्च** ५।४।१३७। पद्मस्येव गन्धोऽस्य पद्मगन्धिः। **वयसि दन्तस्य दतृ** ।५।४।१४३।संख्यासुपूर्वस्येत्येव । द्विदन् चतुर्दन् । **अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च**।५।४।१४५।एभ्योदन्तस्य दतृ वा । कुड्मलाग्रदन्तः । कुड्मलाग्रदन् । **उरःप्रभृतिभ्यः कप्**[१] ।५।४।१५१। व्यूढोरस्कः । प्रियसर्पिष्कः । अर्थान्नञः । अनर्थकम् । नञः किम् । अपार्थम् । **इनः स्त्रियाम्**।५।४।१५२। इन्नन्ताद्बहुव्रीहेः कप् । बहुदण्डिका नगरी ।

---

१ उरस्, सर्पिस्, उपानह्, पुमान्, अनड्वान्, पयः, नौः, लक्ष्मीः, दधि, मधु, शालि, अर्थान्नञः । इत्युरःप्रभृतयः॥

अनिनस्मन् ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति । बहुवाग्मिका । **शेषाद्विभाषा।५।४।१५४।** अनुक्तसमासान्ताद्बहुव्रीहेः कब्वा । महायशाः । महायशस्कः । अनुक्तेत्यादि किम्।व्याघ्रपाद् । **आपोन्यतरस्याम् ।७।४।१५।** कपि ह्रस्वः । बहुमालाकः । बहुमालकः । बहुमालः । **न संज्ञायाम्।५।४।१५५।** शेषादिति प्राप्तः । कब् न । विश्वेदेवा अस्य विश्वदेवः । **ईयसश्च।५।४।१५६।** ईयसन्तोत्तरपदान्न कप् । बहवःश्रेयांसोस्य बहुश्रेयान् । गोस्त्रियोरिति ह्रस्वे प्राप्ते । ईयसोबहुर्णिहेर्न ) । बहुश्रेयसी । बहुव्रीहेः किम् । अतिश्रेयसी । **वन्दिते भ्रातुः ।५।३।१५७।** पूजार्थभ्रात्रन्तान्न कप् । प्रशस्तोभ्राताऽस्य प्रशस्तभ्राता । सुभ्राता । वन्दिते किम् । मूर्खभ्रातृकः । नद्यृतश्चेति कप् । ( सर्वनामसंख्ये ययोर्बहुव्रीहौ पूर्वनिपातः ) सर्वश्वेतः । द्विशुक्लः । (संख्याया अल्पीयस्याः) । द्वित्राः । ( द्वन्द्वेपि ) द्वादश । ( वाप्रियस्य) गुडप्रियः । प्रियगुडः ( गड्वादेःपरासप्तमी ) गडुकण्ठः । क्वचिन्न । वहेगडुः । **निष्ठा ।२।२।३६।** निष्ठान्तं बहुव्रीहौ पूर्वं स्यात् । कृतकृत्यः । ( जातिकालसुखादिभ्यः परा निष्ठा वाच्या ) । सारङ्गजग्धी । मासजाता। । सुखजाता । **वाहिताग्न्यादिषु ।२।२।३७।** आहिताग्निः । अग्न्याहितः । आकृतिगणोयम् । **इतिबहुव्रीहिः ॥**

---

१ आहिताग्निः, जातपुत्रः, जातदन्तः, जातश्मश्रुः, तैलपीतः, घृतपीतः, ऊढभार्यः, गतार्थः, **आकृतिगणोऽयम्** । तेनगडुकण्ठ, अस्युद्यत, दण्डपाणि, इत्यादिज्ञेयम् । **इत्याहिताग्न्यादिः** ।।

**चार्थे द्वन्द्वः।२।२।२९।**अनेकं सुबन्तं चार्थे वर्तमानं वा समस्यते स द्वन्द्वः। समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः। तत्रेश्वरं गुरुं च भजस्वेति परस्परनिरपेक्षस्यनेकस्यैकस्मिन्नन्वयः। समुच्चयः भिक्षामट गां चानयेति। अन्यतरस्यानुषङ्गिकत्वेनान्वयोऽन्वाचयः। अनयोरसामर्थ्यात् समासो न। धवखदिरौ छिन्धीति। मिलितानामन्वय इतरेतरयोगः। संज्ञापरिभाषमिति समूहः समाहारः। **राजदन्तादिषु परम् ।२।२।३१।**एषु पूर्वप्रयोगार्हं परं स्यात्। दन्तानां राजा राजदन्तः धर्म्मादिष्वनियमः। अर्थधर्मौ। धर्मार्थौ। दम्पतीजम्पती जायापती। जायाशब्दस्य दम्भावो जंभावश्च वा निपात्यते। आकृतिगणोयम् **।द्वन्द्वे घि ।२।२।३२।**पूर्वं स्यात्। हरिहरौ। **अजाद्यदन्तम् ।२।२।३३।** ईशकृष्णौ। **अल्पाच्तरम् ।२।२।३४।** शिवकेशवौ। ( ऋतुनक्षत्राणां समाक्षराणामानुपूर्व्येण।) हेमन्तशिशिरवसन्ताः। कृत्तिकारोहिण्यौ। समाक्षराणां किम्। ग्रीष्मवसन्तौ। ( लघ्वक्षरंपूर्वम् )। कुशकाशम्।

---

२ राजदन्तः, अग्रेवणम्, लिप्तवासितम्, नग्नमुषितम्, सिक्तसंमृष्टम्, मृष्टलुञ्चितम्, अवक्लिन्नपक्वम्, अर्पितोप्तम्, उप्तगाढम्, उलूखलमुसलम्, तण्डुलकिण्वम्, दृषदुपलम्, आरग्वायनबन्धकी, चित्ररथबाल्हीकम्, अवन्त्यश्मकम्, शूद्रार्यम्, स्नातकराजानौ, विष्वक्सेनार्जुनौ, अक्षिभ्रुवम्, दारगवम्, धर्मादिषूभयम्, । अर्थधर्मौ, धर्मार्थौ, अर्थशब्दौ, शब्दार्थौ, अर्थकामौ, कामार्थौ, वैकारिमतम्, गोजवाजम्, गोपालधानीपुलासम्, पुलासककरण्डम्, स्थूलपुलासम्, स्थलपुलासम्, उशीरबीजम्, सिञ्जास्थम्, चित्रास्वाती, भार्यापती, दम्पती, जम्पती, जयापती पुत्रपती, पुत्रपशू, केशश्मश्रू, शिरोबीजम्, शिरोजानु, सर्पिर्मधुनी, मधुसर्पिषी, आद्यन्तौ, अनादी, गुणवृद्धी, वृद्धिगुणौ, **आकृतिगणोऽयं राजदन्तादिः ।।**

(अभ्यर्हितं च)। तापसपर्वतौ। (वर्णानामानुपूर्व्येण)। ब्राह्मणक्षत्रियविट्शूद्राः। (भ्रातुर्ज्यायसः)। युधिष्ठिरार्जुनौ। **द्वन्द्वश्च प्राणितूर्यसेनांगानाम् ।२।४।२।** एषां द्वन्द्व एकवत्। पाणिपादम्। मार्दङ्गिकवैणविकम्। रथिकाश्वारोहम्। **अध्ययनतोविप्रकृष्टाख्यानाम् ।२।४।५।** अध्ययनेन प्रत्यासन्ना आख्या येषां तेषां द्वन्द्व एकवत्। पदकक्रमकम्। **जातिरप्राणिनाम् ।२।४।६।** प्राणिवर्जजातिवाचिनां द्वन्द्व एकवत्। धानाशष्कुलि। प्राणिनां तु विट्शूद्राः। **विशिष्टलिङ्गो नदीदेशोऽग्रामाः ।२।४।७।** ग्रामवर्जनदीदेशवाचिनां भिन्नलिङ्गानां द्वन्द्व एकवत्। उध्यश्च इरावतीच उध्येरावति। गङ्गाशोणम्। कुरवश्च कुरुक्षेत्रञ्च कुरुकुरुक्षेत्रम्। **क्षुद्रजन्तवः ।२।४।८।** एषां द्वन्द्व एकवत्। यूकालिक्षम्। आनकुलात्क्षुद्रजन्तवः। **येषां च विरोधः शाश्वतिकः ।२।४।९।** प्राग्वत्। अहिनकुलम्। गोव्याघ्रम्। काकोलूकमित्यादौ परत्वाद्विभाषा वृक्षेति प्राप्तं चकारेण बाध्यते। **शूद्राणामनिरवसितानाम् ।२।४।१०।** अबहिष्कृतानां शूद्राणां द्वन्द्वःप्राग्वत्। तक्षायस्कारम्। पात्राद्बहिष्कृतानां तु चण्डालमृतपाः। **गवाश्वप्रभृतीनि च। २।४।११।** यथोच्चारितानि।

---

१ क्षुद्रजन्तुरनस्थिःस्यादथवा क्षुद्रएव यः। शतं वा प्रसृतौ येषां केचिदानकुलावधि। २ गवाश्वम्, गवाविकम्, गवैडकम् अजाविकम्, अजैडकम्, कुब्जवामनम्, कुब्जकिरातम्, पुत्रपौत्रम्, श्वचाण्डालम्, स्त्रीकुमारम्, दासीमाणवकम् शाटीपटीकम्, शाटीप्रच्छदं, शाटीपट्टिकम्, उष्ट्रखरम्, उष्ट्रशशम्, मूत्रशकृत्, मूत्रपुरीषम्, यकृन्मेदः। मांसशोणितम्, दर्भशरम्, दर्भपूतीकम्, अर्जुनशिरीषम्, अर्जुनपुरुषम्, तृणोलपम्, दासीदासम्, कुटीकुटम्, भागवतीभागवतम्, एतेगवाश्वप्रभृतयः

साधूनि । दासीदासमित्यादि। **विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम् ।२।४।१२।** वृक्षादीनां सप्तानां द्वन्द्वोऽश्ववडवेत्यादि द्वन्द्वत्रयश्च प्राग्वद्वा। वृक्षादौ विशेषाणामेव ग्रहणम्। प्लक्षन्यग्रोधम् । प्लक्षन्यग्रोधाः । रुरुपृषतम् । रुरुपृषताः । कुशकाशम् । कुशकाशाः । व्रीहियवम् । व्रीहियवाः । दधिघृतम् । दधिघृते । गोमहिषम् । गोमहिषाः । शुकबकम् । शुकबकाः । अश्ववडवम् । अश्ववडवौ । पूर्वापरम् । पूर्वापरे । अधरोत्तरम् । अधरोत्तरे। ( फलसेनावनस्पतिमृगशकुनिक्षुद्रजन्तुधान्यतृणानां बहुप्रकृतिरेवद्वन्द्वएकवदिति वाच्यम् ) । बदराणि चामलकानि च बदरामलकम्। नेह । बदरामलके । रथिकाश्वारोहावित्यादि। **न दधिपयआदीनि ।२।४।१४।** न एकवत्स्युः । दधिपयसी । इध्माबर्हिषी । निपातानाद्दीर्घः । ऋक्सामे । वाङ्मनसे । **आनङ् ऋतो द्वन्द्वे ।६।३। २५।** विद्यायोनिसंबन्धवाचिनां ऋदन्तानां द्वन्द्वे आनङ् स्यादुत्तरपदे । होतापोतारौ । मातापितरौ । पुत्रे इत्यनुवृत्तेः । पितापुत्रौ । **देवताद्वन्द्वे च ।६।३।६३।** इहोत्तरपदे पूर्वपदस्यानङ् । मित्रावरुणौ । ( वायोः प्रयोगे प्रतिषेधः ) । अग्निवायू वाय्वग्नी । **ईदग्नेः सोमवरुणयोः । ६।३।२७।** देवताद्वन्द्व इत्येव । **अग्नेःस्तुत्स्तोमसोमाः ।८।३।८२।**

---

१ दधिपयसी, सर्पिर्मधुनी, मधुसर्पिषी, ब्रह्मप्रजापती, शिववैश्रवणौ, स्कन्दविशाखौ, परिव्राजककौशिकौ, प्रवर्ग्योपसदौ, शुक्लकृष्णौ, इध्माबर्हिषी दीक्षातपसी, अध्ययनतपसी, उलूखलमुसले, आद्यवसाने, श्रद्धामेधे, ऋक्सामे, वाङ्मनसे, इति दधिपयआदयः ॥

अग्नेः परेषोमेषां सस्य षः समासे । अग्निष्टुत् । अग्निष्टोमः । अग्नीषोमौ । अग्नीवरुणौ । **इद् वृद्धौ** ।६।३।२८। वृद्धिमत्युत्तरपदे अग्नेरिदादेशो देवताद्वन्द्वे । अग्नीमरुतौ देवते अस्य आग्नीमारुतं कर्म । अग्नीवरुणौ देवते अस्य आग्नीवारुणम् । देवताद्वन्द्वे । चेत्युभयपदवृद्धिः । ( विष्णौ न ) । आग्नावैष्णवम् । **दिवो द्यावा** ।६।३।२९। देवताद्वन्द्वे उत्तरपदे । द्यावाभूमी । **मातरपितरावुदीचाम्** ।६।३।३२ उदीचां किम् मातापितरौ। **द्वन्द्वाच्चुदषहान्तात्समाहारे** ।५।४।१०६। चवर्गान्तादषहान्ताच्च द्वन्द्वाट्टच् समाहारे । वाक्त्वचम् । त्वक्स्रजम् । शमीदृषदम् । वाक्त्विषम् । छत्रोपानहम् । समाहारे किम् । प्रावृट्शरदौ । **इतिद्वन्द्वसमासः** ॥

**अथैकशेषः** ॥ ( विरूपाणामपि समानार्थानाम् ) । वक्रदण्डश्च कुटिलदण्डश्च वक्रदण्डौ । कुटिलदण्डौ । **वृद्धोयूनातल्लक्षणश्चेदेव विशेषः** ।१।२।६५। यूनासहोक्तौ गोत्रं शिष्यते गोत्रयुवप्रत्ययमात्रकृतं श्चेत्तयोः कृत्स्नं वैरूप्यं स्यात् । गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ । वृद्धः किम् । गर्गगार्ग्यायणौ । यूना किम् । गर्गगार्ग्यौ । कृत्स्नं किम् । गार्ग्यवात्स्यायनौ । **स्त्रीपुंवच्च** ।१।२।६६। यूनासहोक्तौ वृद्धा स्त्री शिष्यते तदर्थश्च पुंवत् । गार्गी च गार्ग्यायणौच गर्गाः । **पुमान्स्त्रिया**।

---

१ 'अपत्यमन्तर्हितं वृद्धम्' इति पूर्वाचार्यैः परिभाषितस्य पाणिन्युक्तगोत्रापरपर्यायस्येह ग्रहणं कृत्रिमेण यूना साहचर्यात्तदाह । गोत्रं शिष्यत इति । युवसंज्ञा हि 'जीवति तु वंश्ये'–इत्यनेन पित्रादौ जीवति चतुर्थाद्यपत्यस्य विहिता कृत्रिमैव ।

१।२।६७। सहोक्तौ शिष्यते तल्लक्षण एव विशेषश्चेत् । हंसी च हंसश्च हंसौ । **भ्रातृपुत्रौ स्वसृदुहितृभ्याम्** ।१।२।६८। भ्राताच स्वसा च भ्रातरौ । पुत्रश्च दुहिता च पुत्रौ । **नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्** ।१।२।६९। अक्लीबेन सहोक्तौ क्लीबं शिष्यते तच्च वा एकवत् स्यात्तल्लक्षण एव विशेषश्चेत् । शुक्लः पटः । शुक्ला शाटी। शुक्लं वस्त्रम् । तदिदं शुक्लम् । तानीमानि शुक्लानि । **पितामात्रा ।** १।२।७०। मात्रासहोक्तौ पिता वा शिष्यते । माता च पिता च पितरौ । मातापितरौ । **श्वशुरः श्वश्र्वा** ।१।२।७०। सहोक्तौ वा शिष्यते । श्वशुरौ । श्वश्रूश्वशुरौ । **त्यदादीनि सर्वैर्नित्यम्** ।१।२। ७२।सर्वैः सहोक्तौ त्यदादीनि शिष्यन्ते । स च देवदत्तश्च तौ । त्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यते । स च यश्च यौ। पूर्वशेषोपि दृश्यत इति भाष्यम् । स च यश्च तौ ( त्यदादितः शेषे पुंनपुंसकतो लिङ्गवचनानि ) । सा च देवदत्तश्च तौ । तच्च देवदत्ता च यज्ञदत्तश्च तानि । **ग्राम्यपशुसंघेष्वतरुणेषु स्त्री** ।१।२।७३। एषु सह विवक्षायां स्त्री शिष्यते । गाव इमाः । ग्राम्येति किम् । रुरव इमे। पशुग्रहणं किम् ब्राह्मणाः । संघेषु किम् । एतौ गावौ । अतरुणेषु किम् । वत्सा इमे ( अनेकशफेष्विति वाच्यम् ) अश्वा इमे । **इत्येकशेषः ॥**

**ऋक्पूरब्धूः पथामानक्षे** ।५।४।७५। ऋगाद्यन्तस्य समासस्य अप्रत्ययोन्ताऽवयवः अक्षे या धूस्तदन्तस्य[१] न । अर्द्धर्चः । अनृचबह्वृ

---

१ सूत्रेसम्बधिनोऽधिकरणत्वविवक्षया सप्तमी तेनाक्षसंबंधिनी याधूस्तदन्तस्य नेत्यर्थः ।

चावध्येतर्येव नेह । अनृक्साम् । वहृक्सूक्तम् । विष्णुपुरम् । विमलापं सरः। **द्व्यन्तरुपसर्गेभ्योऽपईत** ।६।३।९७। द्वीपम् । अन्तरीपम् । प्रतीपम् । समीपम् । अवर्णान्ताद्वा । प्रेपम् । प्रापम् । **ऊदनोर्देशे** ।६।३। ९८। अनूपो देशः । राजधुरा । अक्षे तु अक्षधूः । दृढधूरक्षः । सखिपथः । रम्यपथो देशः । **अच्प्रत्यन्ववपूर्वात्सामलोम्नः** ।५।४।७५। प्रतिसामम् । अनुसामम् । अवसाम् । प्रतिलोमम् । अनुलोमम् । अवलोमम् ( कृष्णोदक्पाण्डुसंख्यापूर्वाया भूमेरजिष्यते । ) कृष्णभूमः । उदक्भूमः । पाण्डुभूमः । द्विभूमः । त्रिभूमः प्रासादः । (संख्याया नदीगोदावरीभ्याञ्च )। पञ्चनदम् । सप्तगोदावरम् । अजिति योगविभागादन्यत्रापि पद्मनाभः।**अक्ष्णोऽदर्शनात्**।५।४।७६।अचक्षुः पर्यायादक्ष्णोऽचूस्यात् । गवामक्षीव गवाक्षः । **अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तंदिवरात्रिन्दिवाहर्दिवसरजसनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः** ।५।४।७७। एते पञ्चविंशतिरजन्ता निपात्यन्ते । आद्यास्त्रयो बहुव्रीहयः । अविद्यमानानि चत्वार्य्यस्य अचतुरः । अचतुरः । विगतानि चत्वार्य्यस्य विचतुरः । सुचतुरः । ( त्र्युपाभ्यां चतुरोऽजिष्यते ) त्रिचतुराः । चतुर्णां समीपे उपचतुराः । तत एकादश द्वन्द्वाः । स्त्रीपुंसौ । धेन्वनडुहम्।ऋक्सामे।वाङ्मनसी ।अक्षिणीच भ्रुवौ च अक्षिभ्रुवम्। दाराश्च । दारगवम्। ऊरूच अष्ठीवन्तौ च उर्वष्ठीवम् निपाव-

---

२ यद्यपि पुरशब्देन समासेप्येतत्सिध्यति तथापि विष्णुपूः इत्यनिष्टवारणाय सूत्रे पूर्ग्रहणमिति भावः ।

तनाट्टिलोपः। पदष्ठीवम् निपातनात्पादशब्दस्य पद्भावः। नक्तंच दिवाच नक्तन्दिवम्। रात्रौ च दिवा च रात्रिन्दिवम्। (रात्रेर्मान्तत्वन्निपात्यते)। अहनि च दिवा च अहर्द्दिवम्। वीप्सायां द्वन्द्वो निपात्यते। अहनि अहनीत्यर्थः। रजसमिति साकल्येऽव्ययीभावः। बहुव्रीहौ तु सरजः पङ्कजम्। निश्चितं श्रेयो निःश्रेयसम्। तत्पुरुषएव। नेह। निःश्रेयान्पुरुषः। पुरुषस्यायुः पुरुषायुषम् ततो द्विगू द्व्यायुषं त्र्यायुषम्। ततोद्वन्द्वः। ऋग्यजुषम्। ततस्त्रयः कर्म्मधारायाः। जातोक्षः। महोक्षः। वृद्धोक्षः। शुनःसमीपं उपशुनम्। टिलोपाभावः। सम्प्रसारणं च निपात्यते गोष्ठे श्वा गोष्ठश्वः। **ब्रह्महस्तिभ्यां वर्चसः। ५।४ ७८।** अच् ब्रह्मवर्चसम्। हस्तिवर्च्चसम्। (पल्यराजभ्यांच)। पल्यवर्चसम्। राजवर्चसम्। **अवसमन्धेभ्यस्तमसः।५।४। ७९।** अवतमसम्। संतमसम्। अन्धतमसम्। **अन्ववतप्ताद्रहसः।५।४।८१।** अनुरहसम्। अवरहसम्। तप्तरहसम्। **प्रतेरुरसः सप्तमीस्थात् ।५।४।८२।** उरसीति प्रत्युरसम्। **अनुगवमायामे।५। ४।८३।** एतन्निपात्यते दीर्घत्वे। अनुगवं यानम् यस्य चायामइति समासः। **उपसर्गादध्वनः।५।४।८५।** प्रगतोध्वानं प्राध्वो रथः। **नपूजनात्।५।४।६९।** पूजनार्थात्परेभ्यः समासान्ता न स्युः। सुराजा। अतिराजा। स्वतिभ्यामेव। नेह परमराजः। **किमः[१]क्षेपे।५।४।७०।** कुत्सितो राजा किंराजा। किंसखा। किंगौः। **नञस्तत्पुरुषात्।५।४**

१ क्षेपग्रहणमिह शक्यमकर्तुम्। लक्षणप्रतिपदोक्तपरिभाषया 'किंक्षेपे' इति विहितसमासस्यैवेह ग्रहणात्।

।७१।अराजा। तत्पुरुषात्किम्। अधुरं शकटम्। **पथोविभाषा।५।४।७२।** अपथम्। अपन्थाः। तत्पुरुषादित्येव अपथोदेशः। **इतिसमासान्ताः॥**

**अलुगुत्तर पदे।६।३।१।** इत्यधिकृत्य। **ओजःसहोम्भस्तमसस्तृतीयायाः।६।३।२।** ओजसाकृतमित्यादि। ( अञ्जसउपसंख्यानम्। ) अञ्जसा कृतम्। **आत्मनश्च ।६।३।६।** तृतीयाया अलुक्। ( पूरणेइतिवक्तव्यम् ) पूरणप्रत्ययान्ते उत्तरपदे इत्यर्थः। आत्मना पञ्चमः। **वैयाकरणाख्यायां चतुर्थ्याः।६।३।७।** आत्मन इत्येवआत्मने पदम्। आत्मनेभाषा। परस्य च। परस्मैपदम्। परस्मैभाषा। हलदन्तादिति ङेरलुक्। त्वचिसारः। **गवियुधिभ्यां स्थिरः।८।३।९५।** सस्य षः। गविष्ठिरः। युधिष्ठिरः। अरण्ये तिलकाः। अत्र संज्ञायामिति सप्तमीसमासः। ( हृद्युभ्यां च। ) हृदिस्पृक्। दिविस्पृक्। **मध्याद्गुरौ।६।३।११।** मध्येगुरुः। 'अन्ताच्च' अन्तेगुरुः। **अमूर्द्धमस्तकात्स्वांगादकामे।६।३।१२।** कण्ठे कालः। उरसि लोमा। अमूर्द्धमस्तकात्किम्। ऊर्ध्द्वशिखः। अकामे किम्। मुखे कामोस्य मुखकामः। **तत्पुरुषे कृतिबहुलम्।६।३।१४।** स्तंबेरमः। कर्णेजपः। **शयवासवासिष्वकालात्।६।३।१८।** वालुक् खेशयः। खशयः। ग्रामे वासः ग्रामवासः। ग्रामेवासी। ग्रामवासी। **षष्ठ्या आक्रोशे।६।३।२१।** चोरस्य कुलम्। आक्रोशे किम्। ब्राह्मणकुलम्। ( वाग्दिक्-

---

१ व्याकरणे भवा वैय्याकरणी 'अणगयनादिभ्य' इत्यण् साचासावाख्या चेति कर्मधारयः।

पश्यद्भ्योयुक्तिदण्डहरेषु )। वाचो युक्तिः। दिशो दण्डः। पश्यतोहरः। आमुष्यायणामुष्यपुत्रिकाऽमुष्यकुट्टिकेति च। ( देवानांप्रिय इति मूर्खे )। अन्यत्र देवप्रियः। ( शेफपुच्छलाङ्गूले ) शुनः शुनःशेफः। शुनःपुच्छः। शुनो लाङ्गूलः। ( दिवश्चदासे ) दिवोदासः। **ऋतोविद्यायोनिसंबन्धेभ्यः ।६।३।२३।** होतुरन्तेवासी। **विभाषास्वसृपत्योः ।६।३।२४।** ऋदन्तात्षष्ठ्या वा लुक्। **मातुःपितुर्भ्यामन्यतरस्याम् ।८।३।८५।** स्वसुःसस्य षःसमासे। मातुःष्वसा। मातुःस्वसा। पितुःष्वसा। पितुःस्वसा। लुक्पक्षे तु। **मातृपितृभ्यां स्वसा ।८।३।८४।** स्वसुःसस्य षः समासे। मातृष्वसा। पितृष्वसा। असमासे तु। मातुः स्वसा। पितुःस्वसा। **इत्यलुक्समासः।**

**घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योनेकाचो ह्रस्वः।६।३।४३।** भाषितपुंस्काद्यो ङीत्तदन्तस्यानेकाचोह्रस्वः स्यात् घरूपकल्पप्रत्यये चेलडादिषु चोत्तरपदेषु। ब्राह्मणितरा। ब्राह्मणितमा। ब्राह्मणिरूपा। ब्राह्मणिकल्पा। ब्राह्मणिचेली। ब्राह्मणिब्रुवा। ब्राह्मणिगोत्रेत्यादि। ब्रुवः पचाद्यचिवच्यादेशगुणयोरभावोनिपात्यते। ङ्यःकिम्। दत्तातरा। भाषितपुंस्कात्किम्। आमलकीतरा। कुवलीतरा। **नद्याः शेषस्यान्यतरस्याम् ।६।३।४०।** अङ्यन्तनद्याङ्यन्तैकाचश्च घादिषु ह्रस्वो वा। ब्रह्मबन्धुतरा। ब्रह्मबन्धूतरा। स्त्रीतरा। स्त्रितरा। ( कृन्नद्या न.) लक्ष्मीतरा। **उगितश्च ।६।३।४५।** उगितः परा या नदी तद-

---

१ ब्रह्मज्ञानारहितत्वात्संसा रिणोमूर्खास्तेतु यागादिकर्माण्य नुतिष्टन्तः पुरोडाशादिप्रदानद्वारा देवानामत्यन्तं प्रीतिं जनयन्तीत्यर्थः।

न्तस्य घादिषु ह्रस्वो वा स्यात्। विदुषितरा। ह्रस्वाभावपक्षे पुंवत्। विद्वत्तरा। **पादस्यपदाज्यातिगोपहतेषु** ।६।३।५२। एषूत्तरपदेषु पादस्य पद इत्यदन्तादेशः स्यात्। पादाभ्यां अजतीति पदाजिः। पदातिः। 'अज्यतिभ्यां पादेच' इतीण् प्रत्ययः। पदगः पदोपहतः। **पद्यत्यतदर्थे** ।६।३।५३। पादस्य पत्स्यादऽतदर्थे यति। पादौ विध्यन्ति पद्याः शर्कराः। विध्यत्यधनुषेति यत्। अतदर्थे किम्। पादार्थमुदकं पाद्यम्। पादार्घाभ्यां इति यत्। **उदकस्योदःसंज्ञायाम्** ।६।३।५७। उत्तरपदे। उदमेघः। (उत्तरपदस्य चेति वक्तव्यम्)। क्षीरोदः। **पेषंवासवाहनधिषु च** ।६।३।५८। उदपेषं पिनष्टि। उदवासः। उदवाहनः। उदधिर्घटः। **एकहलादौ पूरयितव्येन्यतरस्याम्** ।६।३।५९। उदकुम्भः। उदककुम्भः। एकेति किम्। उदकस्थाली। पूरयितव्येति किम्। उदकपर्वतः। **मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु च** ।६।३।६०। उदमन्थः। उदकमन्थः। उदौदनः। उदकौदनः। **इकोह्रस्वोऽङ्यो गालवस्य** ।६।३।६३। इगन्तस्याङ्यन्तस्य ह्रस्वो वा उत्तरपदे। ग्रामणिपुत्रः। ग्रामणीपुत्रः। इकःकिम्। रमापतिः। अङ्यःकिम्। गौरीपतिः। **ष्यङःसंप्रसारणं पुत्रपत्योस्तत्पुरुषे** ।६।१।१३। ष्यङन्तस्य पूर्वपदस्य संप्रसारणं स्यात् पुत्रपत्योः परतः। **संप्रसारणस्य** ।६।३।१३९। दीर्घः स्यादुत्तरपदे। ...न्धयायाः पुत्रः कौमुदगन्धीपुत्रः। कौमुदगन्धीपतिः ... अहि, ...तव्वक्तव्यम्) ...मासारः। एषोऽस्य-...कारः॥ (प्रतिवेशादीनां वि-

१ उदकं धीयतेऽस्मिन्निति विग्रहः। 'कर्म...कारः। बहुलग्रहणस्यैवायं प्रपंचः।

**मालानां चितपूलभारिषु** ।६।३।३५। इष्टकादीनां तदन्तानां च चितादिषु ह्रस्वः स्यात् । इष्टकचितम् । पक्केष्टकचितम् । इषीकतूलम् । मुञ्जेषीकतूलम् । मालभारी । उत्पलमालभारी । **ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु** ।६।३।८५। समानस्य सः । सज्योतिः । **चरणे ब्रह्मचारिणि** ।६।३।८६। ब्रह्मचारिण्युत्तरपदे समानस्य सश्चरणे समानत्वेन गम्यमाने। चरणः शाखा। ब्रह्मवेदः। तदध्ययनार्थं व्रतमपि ब्रह्म । तच्चरतीति ब्रह्मचारी । स ब्रह्मचारी इत्यादि । **तीर्थे ये** ।६।३।८७। यादौप्रत्यये विवक्षिते समानस्य सः । सतीर्थ्यः एकगुरुकः । समानतीर्थेवासीति यत्प्रत्ययः । **विभाषोदरे** । ६।३।८८। सोदर्यः । समानोदर्यः । **दृग्दृशवतुषु** ।६।३।८९। सदृक् । सदृशः । दृक्षे च । सदृक्षः । **इदङ्किमोरीश्की** ।६।३।९०। दृग्दृशवतुषु । ईदृक् । ईदृशः । कीदृक् । कीदृशः । दृक्षे च । ईदृक्षः । कीदृक्षः । **अषष्ठ्यतृतीयास्थस्यान्यस्यदुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु** ।६।३।९४। अन्यशब्दस्य दुगागमः स्यादाशीरादिषु परेषु । अन्यदाशीः । अन्यदाशा । अन्यदास्था अन्यदास्थितः । अन्यदुत्सुकः । अन्यदूतिः । अन्यद्रागः । अषष्ठीत्यादिकिम् । अन्यस्यान्येन वाऽऽशीः अन्याशीः।( करके छे च )। नायं निषेधः । अन्यस्य वा । कोऽन्यत्कारकः । अन्यस्यायमन्यदीयः । **अर्थे विभाषा** ।६।३। न .) लक्ष्मीतरदर्थः । अन्यार्थः । **कोः कत्तत्पुरुषेऽचि** ।६।३।१०१। [कु]त्सितोऽश्वः कदश्वः । कदन्नम् । तत्पुरुषे [किम्?] ... त्रयः । **रथवदयोश्च** ।६।३।१०२।

---

१ ब्रह्मज्ञानारहितत्वात्संसा... हारादिप्रदानद्वारा देवानामत्यन्तं प्रीतो...

कद्रथः। कद्वदः। **तृणे च जातौ**।६।३।१०३। कत्तृणम्। **कापथ्य-क्षयोः**।६।३।१०४।कापथम्। काक्षः। **ईषदर्थे** ।६।३।१०५।ईषज्जलम् काजलम्। **विभाषापुरुषे**।६।३।१०६। कुपुरुषः। कापुरुषः। **कवंचोष्णे** ।६।३।१०७।उष्णशब्दे उत्तरपदे कवं का च वास्यात्। कोष्णम्। कवोष्णम्। कदुष्णम्। **पृषोदरादीनियथोपदिष्टम्** ।६।३।१०९। पृषोदरप्रकाराणि[1] शिष्टैर्यथोच्चारितानि तथैव साधूनि। पृषत उदरं पृषोदरम्। तलोपः। वारिवाहको बलाहकः। पूर्वपदस्य वः उत्तरपदादेश्च लत्वम्। 'भवेद्वर्णागमाद्धंसः सिंहो वर्णविपर्ययात्। गूढोत्मा वर्णविकृतेर्वर्णनाशात्पृषोदरम्'। **मतौ बह्वचोऽनजिरादीनाम्**[2] ।६।३।११९। दीर्घः स्यात्। अमरावती। अनजिरादीनां किम्। अजिरवती। बह्वचः किम्। व्रीहिमती। संज्ञायामित्येव। नेह। वलयवती। **शरादीनां**[3] **च** ।६।३।१२०। शरावती। **उपसर्गस्य घञ्यऽमनुष्ये**[4] **बहुलम्** ।६।३।१२२। परीपाकः। परिपाकः। अमनुष्ये किम्। निषादः। **नरेसंज्ञायाम्** ।६।३।१२९। विश्वानरः। **मित्रेचर्षौ**।६।३।

१ अत्रादिशब्दो हि न प्रभृतिवचनस्तथासति उपदिष्टपदानर्थक्यात् किंतु सादृश्यवचनस्तदाह। पृषोदरप्रकाराणीति। पृषोदर, पृषोत्थान, बलाहक, जीमूत, श्मशान, उलूखल, पिशाच, बृसी, मयूर, इतिपृषोदरादिः॥ २ अजिर, खदिर, पुलिन, हंस, कारण्डव, चक्रवाक, इत्यजिरादिः॥ ३ शर, वंश, धूम, अहि, कपि, मणि, मुनि, शुचि, हनु, इतिशरादिः॥ ४ (अमनुष्यादिष्विति वक्तव्यम्) प्रसवः। प्रसारः। प्रहरः। (सादकारयोः कृत्रिमे) एषोऽस्य प्रासादः। एषोऽस्य प्राकारः। कृत्रिम इति किमर्थम्। एषोऽस्य प्रसादः प्रकारः॥ (प्रतिवेशादीनां विभाषा) प्रतिवेशः। प्रतीवेशः। प्रतिकारः। प्रतीकारः। बहुलग्रहणस्यैवायं प्रपंचः।

१३०। विश्वामित्रः। शुनोदन्तदंष्ट्राकर्णकुन्दवराहपुच्छपदेषु। श्वादन्तः। **प्रनिरन्तः शरेक्षुप्लक्षाम्रकार्ष्यखदिरपीयूक्षाभ्योऽसंज्ञायामपि** ।८।४।२। एभ्यः परस्य वनस्य नस्य णत्वम्। प्रवणम्। **विभाषौषधिवनस्पतिभ्यः** ।८।४।६। दूर्वावणम्। दूर्वावनम्। शिरीषवणम्। शिरीषवनम्। द्व्यचत्र्यज्भ्यामेव। नेह। देवदारुवनम्। (इरिकादिभ्यो न)। इरिकावनम्। मिरिकावनम्। **वाहनमाहितात्** ।८।४।८। आरोप्य यदुह्यते तद्वाचिस्थान्निमित्ताद्वाहनस्य नस्य णत्वम्। इक्षुवाहणम्। आहितात्किम्। इन्द्रवाहनम्। **पानं देशे** ।८।४।९। पूर्वपदस्थान्निमित्तात्परस्य पानस्य नस्य णः। क्षीरंपानं येषां ते क्षीरपाणाः। उशीनराः। सुरापाणाः। प्राच्याः। **वाभावकरणयोः** ।८।४।१०। क्षीरपानम्। क्षीरपाणम्। **प्रातिपदिकान्तनुम्विभक्तिषु च** ।८।४।११। पूर्वपदस्थान्निमित्तात्परस्य एषु स्थितस्य नस्य णो वा। माषवापिणौ। व्रीहिवापेण। माषवापेण। पक्षेमाषवापिनावित्यादि। **कुमति च** ।८।४।१३। कवर्गवत्युत्तरपदे प्राग्वत्। हरिकामिणौ। हरिकामाणि। हरिकामेण। **पदव्यवायेऽपि** ।८।४।३८। णत्वं न माषकुम्भवापेन। (अतद्धित इति वक्तव्यम्)। आर्द्रगोमयेण। शुष्कगोमयेण। **पारस्करप्रभृतीनि च संज्ञायाम्** ।६।१।१५७। एतानि ससुट्कानि निपात्य-

---

१ अभियुक्तोक्तिरियम्। नतुवार्तिकम्। २ इरिका, मिरिका, तिमिरा, इतीरिकादिराकृतिगणः। ३ पारस्करः। कारस्करो वृक्षः। रथस्यानदी। किष्कु, प्रमाणम्। किष्किन्धागुहा। (तद्बृहतोः करपत्योः चुट्तलोपश्च) (प्रात्तुम्पतौ गवि कर्तरि) (प्रायस्य चित्तिचित्तयोः) इतिपारस्करादिराकृतिगणः॥

न्ते । पारस्कारः । किष्किन्धा । ( तद्बृहतोः करपत्योश्चोरदेवतयोः सु- ट् तलोपश्च ) । तात्पूर्वं चर्त्वेन दकारोपि बोध्यः। तद्बृहतोर्दकारतकारौ लुप्येते करपत्योस्तु सुट् । चोरदेवतयोरिति समुदायोपाधिः । तस्करः बृहस्पतिः । ( प्रायस्य चित्तिचित्तयोः) । प्रायश्चित्तिः । प्रायश्चित्तम् वनस्पतिरित्यादि । आकृतिगणोयम् । इति **समासाश्रयविधयः** ।

---

**॥श्रीगणेशाय नमः ॥**

**समर्थानां प्रथमाद्वा** ।४।१।८२। इदं पदत्रयमधिक्रियते । प्राग्दि- श इति यावत् । **प्राग्दीव्यतोऽण्** ।४।१।८३। तेन दीव्यतीत्यतः प्रा- गणधिक्रियते । **अश्वपत्यादिभ्यश्च** ।४।१।८४। एभ्योऽण् स्यात्प्रा- ग्दीव्यतीयेष्वर्थेषु । अश्वपतेरपत्यादि आश्वपतम् । गाणपतम् **दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः** ।४।१।८५। प्राग्दीव्यतीयेष्व- र्थेषु । दितेरपत्यादि दैत्यः । अदितेरादित्यस्य वा आदित्यः । ( यणो मयो द्वे वाच्ये । ) मय इति पञ्चमी यण इति षष्ठीति पक्षे यस्य द्वि- त्वम् । **हलोयमां यमि लोपः**।८।४।६४। वास्यात् । इत्यसतिलोपे द्वि-

---

१ प्रायस्य चित्तिचित्तयोः सुडस्कारो वेति भाष्यम् । २ अनेन प्रत्येकं स्वरित त्वप्रतिज्ञा सूचिता तत्प्रयोजनं तु कस्यचिन्निवृत्तावपि अपरस्यानिवृत्तस्तथाच 'प्राग्दिश' इतिसूत्रे समर्थानां प्रथमादिति निवृत्तम् वेति त्वनुवर्तत एवेति कौमुदी ग्रन्थः संगच्छते । ३ अश्वपति, स्थानपति, ज्ञानपति,यज्ञपति, बन्धुपति, शतपति धनपति, गणपति, राष्ट्रपति, कुलपति, गृहपति, पशुपति, धान्यपति, धर्मपति धन्वपति, सभापति, प्राणपति, क्षेत्रपति, इत्यश्वपत्यादिः ।

त्वे च सति त्रितयंरूपम् । असतिलोपेद्वित्वलोपयोर्वाद्वयम् । द्वित्वाभावे लोपे च सतिएकयम् । प्राजापत्यः । ( देवाद्यञञौ ) । दैव्यम् । दैवम् । ( वहिषष्टिलोपो यञ्च ) । बाह्यः । ( ईकक्च ) **किति च** ।७। २।११८। किति तद्धितेऽचामादेरचो वृद्धिः । वाहीकः । ( गोरजादिप्रसंगे यत् )। गोरपत्यादिगव्यम्। **उत्सादिभ्योऽञ्** ।४।१।८६।औत्सः। **इत्यपत्यादिविकारान्तार्थाः प्रत्ययाः ॥**

**स्त्रीपुंसाभ्यां नञ्स्नञौभवनात्** ।४।१ ८७। धान्यानां भवन इत्यतः प्रागर्थेष्वाभ्यामेतौ स्तः । स्त्रैणः । पौंस्नः । **तस्यापत्यम्** ।४।१। ९२। षष्ठ्यन्तात्कृतसन्धेः समर्थादपत्येऽर्थे उक्ता वक्ष्यमाणाश्च प्रत्यया वा स्युः । **ओर्गुणः** ।६।४।१४६। उवर्णान्तस्य भस्य गुणस्तद्धिते। ओरोदिति वक्तव्ये गुणोक्तिः संज्ञापूर्वको विधिरनित्य इति ज्ञापयितुम्। तेन स्वायम्भुवमित्यादि सिद्धम्। उपगोरपत्यमौपगवः । आश्वपतः । दैत्यः । औत्सः । स्त्रैणः । पौंस्नः । **अपत्यं पौत्रप्रभृतिगोत्रम्** ।४।१। १६२। अपत्यत्वेन विवक्षितं पौत्रादि गोत्रसंज्ञं स्यात् । **एकोगोत्रे** ।४। १।९३। गोत्रे एक एव प्रत्ययः स्यात् । उपगोर्गोत्रापत्यमौपगवः ।

---

१ उत्स, उदपान, विकिर, विनद, महानद, महानस, महाप्राण, तरुण, तलुन, वष्कयासे, धेनु, पृथ्वी, पङ्क्ति, जगती, त्रिष्टुप्, अनुष्टुप्, जनपद, भरत, उशीनर, ग्रीष्म, पीलु, कुण, उदस्थान, देशे, पृषदंश, भल्लकीय, रथन्तर, मध्यन्दिन, बृहत्, महत्, सत्वत्, कुरु, पञ्चाल, इन्द्रवसान, उष्णिह, ककुभ, सुवर्ण, देव, ग्रीष्माच्छंदसि । इत्युत्सादिः ॥

**गर्गादिभ्यो यञ्** ।४।१।१०५। गोत्रापत्ये । गर्गस्य गोत्रापत्यं गार्ग्यः । वात्स्यः । **यञञोश्च** ।२।४।६४। गोत्रे यद्यञन्तमञन्तं च तदवयवयोरेतयोर्लुक् तत्कृते बहुत्वे न तु स्त्रियाम् । गर्गाः । वत्साः । **गोत्रेऽलुगचि** ।४।१।८९। अजादौ प्राग्दीव्यतीये विवक्षिते गोत्रप्रत्ययस्यालुक्स्यात् । गर्गाणां छात्राः वक्ष्यमाणो वृद्धाच्छः । **आपत्यस्य च तद्धितेनाति** ६ । १ । ५१ । हलः परस्यापत्ययस्य लोपस्तद्धिते नत्वाकारे । गार्गीयाः । अनातिकिम् । गार्ग्यायणः । प्राग्दीव्यतीये किम् । गर्गेभ्यो हितं गर्गीयम् । अचि किम् । गर्गेभ्य आगतं गर्गरूप्यम् । **जीवति तु वंश्ये युवा** ।४।१।१६३। वंश्ये पित्रादौ जीवति पौत्रादेर्यदपत्यं चतुर्थादि तद्युवसंज्ञमेव स्यान्नतु गोत्रसंज्ञम् । **गोत्राद्यून्यस्त्रियाम्** ।४।१।९५। यून्यपत्ये विवक्षिते

---

२ गर्ग, वत्स, वाताजे, संस्कृति, अज, व्याघ्रपात्, विदभृत्, प्राचीनयोग, अगस्ति, पुलस्ति, चमस, रेभ, अग्निवेश्य, शङ्ख, शठ, शक, एक,धूम, अवट्, मनस्, धनंजय, वृक्ष, विश्वास, जरमाण, लोहित, सशित, बभ्रु, वल्गु, मण्डु,गण्डु, शङ्कु, लिङ्गु, गुहलु, मन्तु, मङ्क्षु, अलिगु, मनु,, जिगीषु, मनु, तन्तु, मनायी, सूनु, कथक, कत्थक, ऋक्ष, तृक्ष, तनु, तरुक्ष, तलुक्ष, तण्ड,वतण्ड, कपि, कत, कुरुकत, अनडुह, कण्व, शकल, गोकक्ष, अगस्त्य, कुण्डिनी, यज्ञवल्क, पर्णवल्क, अभयजात, विरोहित, वृषण, रहगण, शण्डिल, चणक, चुलुक, मुद्गल, मुसल, जमदग्नि, पराशर, जतूकर्ण, महित, मन्त्रित, अश्मरथ, शर्कराक्ष, पूतिमाष, स्थूर, अररका, एरका, पिङ्गल, कृष्ण, गोलन्द, उलूक, तितिक्ष,भिषज्, भिष्णत्, भडित, भण्डित, दल्भ, चैकित, चिकित्सित, देवहू, इन्द्रहू, एकलू, पिप्पलु, बृहदग्नि, सुलाभिन्, उक्थ, कुटिगु, इतिगर्गादिः ॥

गोत्रप्रत्ययान्तादेव प्रत्ययः स्यात्स्त्रियां तु न युवसंज्ञा । **यञिञोश्च ।४।१।१०१।** गोत्रे यौ यञिञौ तदन्तात्फक् । **आयनेयीनीयियः फढखच्छघां प्रत्ययादीनाम् ।७।१।२।** प्रत्ययादेः फस्य आयन् ढस्य एय् खस्य ईन् छस्य ईय् घस्य इय् स्युः । गर्गस्य युवापत्यं गार्ग्यायणः । **अत इञ् ।४।१।९५।** अपत्येर्थे । दाक्षिः । **बाह्वादिभ्यश्च ।४।१।९६।** बाहविः । औडुलोमिः औडुलोमि । (लोम्नोपत्येषु बहुष्वकारोवक्तव्यः ) । बाह्वादेरपवादः । उडुलोमाः । आकृतिगणोयम् । **अनृष्यानन्तर्ये विदादिभ्योञ् ।४।१।११२।** येत्वत्रानृषयस्तेभ्योऽपत्येऽन्यत्र तु गोत्रे । विदस्यगोत्रं बैदः । बैदौ । बिदाः । पुत्रस्याऽपत्यं

---

१ बाहु, उपबाहु, उपवाकु निवाकु, शिवाकु, वटाकु, उपविन्दु, वृषली, वृकला, चूडा, बलाका, मूषिका, कुशला, छगली, धुवका, ध्रुवका, सुमित्रा, दुर्मित्रा, पुष्करसद्, अनुहारु, देवशर्मन्, अग्निशर्मन्, भद्रशर्मन्, सुशर्मन्, कुनामन्, सुनामन्, पञ्चन्, सप्तन्, अष्टन्, अमितौजस, सुलोपश्च, सुधावन्, उदञ्चु, मात्र, शिरस्, शराविन्, मरीचिन्, क्षेमवृद्धिन्, शृङ्खलतोदिन्, खरनादिन्, नगरमर्दिन्, प्राकारमर्दिन्, लोमन्, लोमन्, अजीगर्त, कृष्ण, युधिष्ठिर, अर्जुन, साम्ब, गद, प्रद्युम्न, उदङ्क, उदक, संज्ञायाम्, सम्भूयोऽम्भसो, सलोपश्च, आकृतिगणोऽयम् ।। तेन सात्यकिः, जाङ्घिः, ऐन्द्रशर्मिः, आजधेनविः, इति बाह्वादिः।। २ विद, उर्व, कश्यप, कुशिक, भरद्वाज, उपमन्यु, किलात, किंदर्भ, विश्वानर, ऋष्टिषेण, ऋतभाग, हर्यश्व, प्रियक, आपस्तंब, कूचवार, शरद्वत, शुनक, धेनु, गोपवन, शिग्रु, बिंदु, भाजक, भाजन, अश्वावतान, श्यामक, श्यामांक, श्यावलि, श्यापर्ण, हरित, किंदास, वह्यस्क, अर्क, लूष, वध्योग, विष्णुवृद्ध, प्रतिबोध, रथीतर, रथन्तर, गविष्टिर, निषाद, शबर, अरुस, मण्ड, सृपाकु, मृदु, पुनर्भू, पुत्र, दुहितृ, ननान्द, परस्त्री, परशु च, इति विदादिः ।।

पौत्रः। पौत्रौ। यञञोश्चेति सूत्रे प्रवराध्यायप्रसिद्धं गोत्रं तेनेह न। पौत्राः एवं दौहित्रादयः। **शिवादिभ्योऽण्** ।४।१।११२। अपत्ये। शैवः। गाङ्गः। **ऋष्यन्धकवृष्णिकुरुभ्यश्च** ।४।१।११४। ऋषिभ्यः। वासिष्ठः वैश्वामित्रः। अन्धकेभ्यः श्वाफल्कः। वृष्णिभ्यः वासुदेवः। कुरुभ्यः नाकुलः। साहदेवः। **मातुरुत्संख्यासंभद्रपूर्वायाः** ।४।१।११५। संख्यादिपूर्वस्य मातृशब्दस्य उदादेशः स्यादण् प्रत्ययश्च। द्वैमातुरः। षाण्मातुरः। भाद्रमातुरः। **स्त्रीभ्यो ढक्** ।४।१।१२०। स्त्रीप्रत्ययान्तेभ्यो ढक्। वैनतेयः। **कन्यायाः कनीनच** ।४।१।११६। चादण्। कानीनो व्यासः। कर्णश्च। **राजश्वशुराद्यत्** ।४।१।१३७। (राज्ञोजातावेव)। **ये चाभावकर्मणोः** ।६।४।१६८। यादौ तद्धिते अन्प्रकृत्यास्यान्न तु भावकर्मणोः। राजन्यः। जातावेवेति किम्। **अन्** ।६।४।१६७। प्रकृत्याऽणिपरे। राजनः। श्वशुर्य्यः। **क्षत्राद्घः**।

---

१ शिव, प्रोष्ठि, प्रोष्ठिक, चण्ड, जम्भ, भूरि, दण्ड, कुठार. ककुभ, भ्रम, अनभिम्लान, कोहित, सुख, सन्धि, मुनि, ककु–त्स्थ, कहोड, कोहड, कहूषय, कहय, रोधक, पिञ्जल, खञ्जन, वतण्ड, तृण, कर्ण, क्षीर, ह्रद, जलह्रद, परिल, पिष्ट, हैहय, गोपिका, कपालिका, जटिलिका, बाधिरिका, मञ्जिष्ठा, वृष्णिक, खञ्जार, खञ्जाल, रेख, लेख, रिख, आलेखन, विश्रवण, रवण, वर्तनाक्ष, ग्रीवाक्ष, पिटक, ऋक्षाक, नभाक, ऊर्णनाभ, जरत्कारु, पुरोहितिका, सुरोहिका, आर्यश्वेत, सुपिष्ट, मसुर, कर्ण, मयूरकर्ण, खडूरक, तक्षण, ऋष्टिषेण, गङ्गा, विपाश, यस्क, लह्य, द्रुह्य, अय, स्थूण, तृणकर्ण, पर्ण, भलन्दन, विरूपाक्ष, भूमि, इला, सपत्नी, द्व्यचोनद्या, त्रिवेणी, त्रिवणश्चा इति शिवादिः॥

।४।१।१३८। क्षत्रियः । जातावित्येव । क्षात्रिरन्यः । **रेवत्यादिभ्य ष्ठक्** ।४।१।१४६। **ठस्येकः** ।७।३।५०। अङ्गात्परस्य ठस्येकादेशः। रैवतिकः । **गोत्रे कुञ्जादिभ्यश्च्फञ्** ।४।१।९८। **व्रातच्फञोरस्त्रियाम्** ।५।३।११३। व्रातवाचिभ्यश्च्फञन्तेभ्यश्च स्वार्थे ञ्यप्रत्ययः स्यात्। कौञ्जायन्यः कौञ्जायन्यौ । बहुत्वे लुग्वक्ष्यते । ब्राध्नायन्यः । **नडादिभ्यः फक्** ।४।१।९८। गोत्र इत्यवे । नाडायनः। चारायणः । अनन्तरो नाडिः । **अश्वादिभ्यः फञ्** ।४।१।११०। गोत्रे । आश्वायनः।

---

१ रेवती, अश्वपाली, मणिपाली, द्वारपाली, वृकवञ्चिन्, वृकबन्धु, वृकग्राह, कर्णग्राह, ककुदाक्ष, चामरग्राह, कुक्कुटाक्ष, इति रेवत्यादिः ॥ २ कुञ्ज, ब्रध्न, शङ्ख, भस्मन्, गण, लोमन्, शठ, शाक, शुण्डा, शुभ, विपाश, स्कन्द, स्कम्भ इति कुञ्जादिः ॥ ३ नड, चर, बक, मुञ्ज, इतिक, इतिश, उपक, एक, लमक, शलङ्कु, शलङ्कंच, सप्तल, वाजप्य, तिक, अग्निशर्मन्, वृषगणे, प्राण, नर, सायक, दास, मित्र, द्वीप, पिङ्गर, पिङ्गल, किंकरु, किङ्कल, काश्यप, कातर, कातल, काश्य, काव्य, अज अमुष्य, कृष्णरणौ, ब्राह्मणवासिष्ठे, अमित्र, लिगु, चित्र, कुमार, क्रोष्टु, क्रोष्टंच, लोह, दुर्ग, स्तम्भ, शिंशपा, अग्रत्रण, शर्कर, सुमनस्, सुमत, मिमत, ऋच, जलन्धर, अध्वर, युगन्धर, हंसक, दण्डिन्, हस्तिन्, पिण्ड, पञ्चाल, चमसिन्, सुकृत्य, स्थिरक, ब्राह्मण, चटक, बदर, अश्वल, खरप, लङ्क, इन्ध, अस्त्र, कामुक, ब्रह्मदत्त, उदुम्बर, शोण, अलोह, दण्ड, इति नडादिः ॥ ४ अश्व, अश्मन्, शङ्ख, शूद्रक, विद, पुट, रोहिण, खर्जूर, पिञ्जूल, भडिल, भण्डिल, भडित, भण्डित, प्रहृत, रामोद, ग्रीवाकाश, काण, गोलाङ्क, अर्क स्वन, वन, पाद, चक्र, कुल, पूल, अविष्ठा, वीक्ष, पवीन्द्र, पवित्र, गोमिन्, श्याम, धूर, धूम्र, वाग्मिन्, विश्वानर, कुट, शपात्रेये, जन, जड, खड ग्रीष्म, अर्ह, कित, विशय, विशाल, गिरि, चपल, चुप दास, वैल्य, प्राच्य, आनडुह्य, पुंसिजाते, अर्जुन, सुमनस्, दुर्मनस्, मन, क्षान्त, ध्वान, आत्रेयभारद्वाजे,

**इतश्चानिञः ।४।१।१२२।** इकारान्ताद्‌द्व्यचोऽपत्ये ढक् न त्विञन्तात् । दौलेयः । नैधेयः । आत्रेयः । आत्रेयौ । **अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च ।२।४।६५।** एभ्यो गोत्रप्रत्ययस्य लुक् स्यात् तत्कृतबहुत्वे नतु स्त्रियाम् । अत्रयः । भृगवः । कुत्साः । वसिष्ठाः । गोतमाः । अङ्गिरसः । **शुभ्रादिभ्यश्च ।४।१।१२३।** शौभ्रेयः । **कल्याण्यादीनामिनङ् ।४।१।१२६।** एषामिनङ् स्यात् ढक् च । काल्याणिनेयः । बान्धकिनेयः । **कुलटाया वा ।४।१।१२७।** इनङ्मात्रं विकल्पते ढक् तु नित्यः । पूर्वेणैव । कौलटेयः । कौलटिनेयः । सतीभिक्षुक्यत्र कुलटा । **चटकाया ऐरक् ।४।१।१२८।** (चटकादितिवाच्यम्)। प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति सिद्ध्यति । चटकस्य चटकाया वा अपत्यं चाटकैरः । ( स्त्रियामपत्ये लुग् वक्तव्यः ) ।

---

भारद्वाजात्रेये, उरस, आतव, कितव, शिव, खदिर, इत्यश्वादिः ॥ १ शुभ्र, विष्ट, पुर, ब्रह्मकृत, शतद्वार, शलाथल, शकालाभ्र, लेखाभ्र, विकास, रोहिणी, रुक्मिणी, धर्मिणी, दिश, शालूक, अजबस्ति, शकन्धि, विमातृ, विधवा, शुख, विश्र, देवतर, शकुनी, शुक्र, उग्र, शबल, बन्धकी, सुकण्डु, विश्व, अतिथि, गोदन्त, कुशाम्ब, सकण्डु, शान्ता, हर, यवण्डु, रिक, सुनामन्, लक्षणश्यामयोर्वासिष्ठे, गोधा, कृकलास, अणीव, प्रवाहण, भरत, भरम, वृकण्डु, कर्पूर, इतर, अन्यतर, आलीढ, सुदत्त, सुदक्ष, सुवक्षस्, मुशाकन्, कद्रु, तुदव, अशाय, कुमारिका, कुठारिका, किशोरिका, अम्बिका, जिह्वाशिन्, परिधि, वायुदत्त, शकल, शलाथा, स्वश्वर, कुबेरिका, अशोका, गन्धपिङ्गला, खण्डोन्मत्ता, अनुदृष्टिन्, जरतिन्, बलीवर्दिन्, विम्र, बीज, जीव, श्वन्, अश्मन्, अश्व, इति शुभ्रादिराकृतिगणः ॥ २ कल्याणी, सुभगा, बन्धकी, अनुदृष्टि, अनुसृति, अर्हती बली, वली, ज्येष्ठा, मध्यमा, परस्त्री, इति कल्याण्यादिः ॥

तयोरेव स्त्र्यपत्यं चटका । **गोधाया ढ्रक्** ।४।१।१२९। गौधेरः । शुभ्रादित्वाड्ढक् । गौधेयः । **क्षुद्राभ्यो वा** ।४।१।१३१। अङ्गहीनाः शीलहीनाश्च क्षुद्रास्ताभ्यो ढ्रक् वा । पक्षे ढक् । काणेरः । काणेयः । दासेरः । दासेयः । **पितृष्वसुश्छण्** ।४।१।१३२। अणोपवादः । पैतृष्वस्रीयः । **ढकि लोपः** ।४।१।१३३। पितृष्वसुर्यदुक्तं तदस्यापि स्यात् । मातृष्वस्रीयः । मातृष्वसेयः । **कुलात्खः** ।४।१।१३९। कुलीनः । तदन्तादपि । उत्तरसूत्रे अपूर्वपदादिति लिङ्गात् । आढ्यकुलीनः । **अपूर्वपदादन्यतरस्यां यड्ढकञौ** ।४।१।१४१। कुलादित्येव । पक्षे खः । महाकुलः । महाकुलीनः । **दुष्कुलाड्ढक्** ।४।१।१४२। वा । पक्षे खः । दौष्कुलेयः । दुष्कुलीनः । **स्वसुश्छः** ।४।१।१४३। स्वस्रीयः । **भ्रातुर्व्यच्च** ।४।१।१४४। चाच्छः । भ्रातृव्यः । भ्रात्रीयः । **मनोर्जातावञ्यतौ षुक् च** ।४।१।१६१। समुदायार्थो जातिः । मानुषः। मनुष्यः। (तक्ष्णोऽणुपसंख्यानम्)। **षपूर्वहन्धृतराज्ञामणि** ।६।४।१३५। एषामणि तद्धितेऽनोकारलोपः । ताक्ष्णः । **तिकादिभ्यः फिञ्** ।४।१।१५४। तैकायनिः । **वृद्धिर्यस्याचामादिस्तद्वृद्धम्** ।१।१।७३। यस्य समुदायस्याचांमध्ये आदिवृद्धिस्तद्वृद्धसंज्ञं

---

१ तिक, कितव, संज्ञा, बाला, शिखा, उरस्, शाठ्य, सैन्धव, यमुन, रूप्य, ग्राम्य, नील, अमित्र, गोकक्ष, कुरु, देवरथ, तैतिल, औरस, कौरव्य, भौरिकि, भौलिकि, मौलिकि, चौपत, चैटयत, शीकयत, क्षैतयत, ध्वानवत्, चन्द्रमस्, शुभ, गङ्गा, वरेण्य, सुयामन्, आरब्ध, वाह्यक, खल्प, वृष, लोमक, उदन्य, यज्ञ, इति तिकादिः ॥

स्यात् । **उदीचां वृद्धादगोत्रात् ।४।१।१५७।** आम्रगुप्तायनिः । प्राचां तु आम्रगुप्तिः । **प्राचामवृद्धात्फिन्बहुलम् ।४।१।१६०।** ग्लुचुकायनिः । **जनपदशब्दात्क्षत्रियादञ् ।४।१।१६८।** जनपदक्षत्रियोर्वाचकादञ् अपत्ये । पाञ्चालः । क्षत्रियसमानशब्दाज्जनपदात् तस्य राजन्यपत्यवत् । पञ्चालानां राजा पाञ्चालः । ( पूरोरण् ) । पौरवः । **द्व्यञ्मगधकलिङ्गसूरमसादण् ।४।१।१७०।** द्व्यच् । आङ्गः । वाङ्गः । मागधः । (पाण्डोर्ड्यण्)। पाण्ड्यः । **वृद्धेत्कोशलाजादाञ्ञ्यङ् ।४।१।१७१।** वृद्धात् । आम्बष्ठ्यः । इत् आवन्त्यः । कौशल्यः । अजादस्यापत्यं आजाद्यः । **कुरुनादिभ्योण्यः ४।१।१७२।** कौरव्यः । नैषध्यः । **तेतद्राजाः ।४।१।१७४।** अञादयस्तद्राजसंज्ञाः स्युः । **तद्राजस्य बहुषु तेनैवास्त्रियाम् ।२।४।६२।** बहुष्वर्थेषु तद्राजस्य लुक् तत्कृते बहुत्वे नतु स्त्रियाम् । पञ्चाला इत्यादि । **कम्बोजाल्लुक् ।३।३।६७५।** तद्राजस्य । कम्बोजः । कम्बोजौ । ( कम्बोजादिभ्यइतिवक्तव्यम् ) । चोलः । शकः । केरलः । यवनः । **अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे ।४।१।७८।** त्र्यादीनामन्त्यमुत्तमं तस्य समीपमुपोत्तमम् । गोत्रेयावणिञौ विहितौ अनार्षौ तदन्तयोर्गुरूपोत्तमयोः प्रातिपदिकयोः स्त्रियां ष्यङादेशः। 'यङश्चाप्' । कुमुदगन्धेर्गोत्रापत्यं स्त्री कौमुदगन्ध्या । वाराह्या । अनार्षयोः किम् वासिष्ठी । गुरूपोत्तमयोः किम् । औपगवी । गोत्रे किम् । अहिच्छत्रे जाता आहिच्छत्री ॥ **इत्यपत्याधिकारः ॥**

---

१ कम्बोज, चोल, केरल, शाक, यवन, इति कम्बोजादिः ॥

**तेन रक्तं रागात्।४।२।१।** कषायेण रक्तं वस्त्रं काषाम् माञ्जिष्ठम्। रागात्किम्। देवदत्तेन रक्तं वस्त्रम्। **लाक्षारोचनाट्ठक् ।४।२।२।** लाक्षिकः। रौचनिकः। ( शकलकर्दमाभ्यामुपसंख्यानम् ) । शाकलिकः। कार्दमिकः। (नील्या अन्)। नील्या रक्तं वस्त्रं नीलम्। (पीतात्कन् )। पीतकम्। (हरिद्रामहारजताभ्यामञ्)। हारिद्रम्। महारजतम्। **नक्षत्रेण युक्तःकालः ।४।२।१३। तिष्यपुष्ययोर्नक्षत्राणि यलोपः ।४।२।३।** पुष्येण युक्तं पौषमहः । **लुबविशेषे।४।२।१४।** पूर्वेण विहितस्य लुप्। षष्टिदण्डात्मकस्य कालस्यावान्तरविशेषश्चेन्न गम्यते। अद्य पुष्यः। **दृष्टं साम ।४।२।१७।** तेनेत्येव। वसिष्ठेन दृष्टं वासिष्ठं साम। **वामदेवाड्ड्यड्ड्यौ ।४।२।१९।** वामदेवेन दृष्टं वामदेव्यम् । **परिवृतोरथः ।४।२।१०।** वस्त्रेण परिवृतो वास्त्रो रथः। **तत्रोद्धृतममत्रेभ्यः ।४।२।१४।** शरावे उतद्धृः शारावओदनः । **संस्कृतं भक्षाः ।४।२।१६।** सप्तम्यन्तादण् स्यात्संस्कृतेऽर्थे यत्संस्कृतं भक्षाश्चेत्ते स्युः। भ्राष्ट्रेषु संस्कृता भ्राष्ट्राः। भक्षाः। **शूलोखाद्यत् ।४।२।७१।** अणोऽपवादः। शुले संस्कृतं शूल्यं मांसम्। उख्यम्। **दध्नष्ठक् ।४।२।११८।** दधि संस्कृतं दाधिकम्। **सास्मिन्पौर्णमासीति ।४।२।२२।** इतिशब्दात्संज्ञायामिति लभ्यते। पौषी पौर्णमासी अस्मिन्पौषो मासः। **साऽस्यदेवता।४।२।२४।**इन्द्रो देवताऽस्यैन्द्रं हविः। पाशुपतम्। बार्हस्पत्यम् । त्यज्यमानद्रव्यं उद्देश्य-

१ अत्रैव, सूत्रे निपातनाद्देवशब्दात्समूहार्थे तल्।

विशेषो देवता मन्त्रस्तुत्या च। ऐन्द्रो मन्त्रः। **कस्येत्** ।४।२।२५। कशब्दस्य इकारादेशः स्यात्प्रत्ययसंनियोगेन। यस्येति लोपात्परत्वादादिवृद्धिः। को ब्रह्मा देवताऽस्य कायं हविः। श्रीर्देवताऽस्य श्रायम्। **शुक्राद्घन्** ।४।२।२६। शुक्रियम्। **सोमाट्ट्यण्** ।४।२।३०। सौम्यम्। **वाय्वृतुपित्रुषसो यत्** ।४।२।३१। वायव्यम्। ऋतव्यम्। **रीङृतः**[1] ।७।४।२७। अकृद्यकारेऽसार्वधातुकयकारे च्वौ च परे ऋदन्ताङ्गस्य रीङादेशः। 'यस्येतिच'। पित्र्यम्। उषस्यम्। **द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छच** ।४।२।३२। चाद्यत्। द्यावापृथिवीयम्। द्यवापृथिव्यम्। शुनासीरीयम्। शुनासीर्यम्। **महाराजप्रोष्ठपदाट्ठञ्** ।४।२।३५। माहाराजिकम्। प्रौष्ठपदिकम्। **देवताद्वन्द्वे च** ।७।३।२१। अत्र पूर्वोत्तरपदयोराद्यचो वृद्धिर्ञिति णिति किति च। आग्निमारुतम्। **नेन्द्रस्य परस्य** ।७।३।२२। सौमेन्द्रः। परस्य किम्। ऐन्द्राग्नः। **दीर्घाच्च वरुणस्य** ।७।३।२३। न वृद्धिः। ऐन्द्रावरुणम्। दीर्घात्किम्। आग्निवारुणीमनड्वाहीमालभेत। **पितृव्यमातुलमातामहपितामहाः** ।४।२।३६। एते निपात्यन्ते। पितुर्भ्राता पितृव्यः। मातुर्भ्राता मातुलः। मातुः पिता मातामहः। पितुः पिता पितामहः। **तस्य समूहः** ।४।२।३७। काकानां समूहः काकम्। बकानां समूहः बाकम्। **भिक्षादिभ्योऽण्**[2] ।४।२।३८। भैक्षम्। गार्भिणीनां

१ अत्र 'अङ्गवृत्तेपुनर्वृत्तावविधिः' इति परिभाषया ह्रस्वरिङ्विधाने रिङ्प्रवृत्युत्तरं दीर्घो नस्यात्तदर्थं दीर्घग्रहणम्। २ भिक्षा, गर्भिणी, क्षेत्र, करीष, अङ्गार, चर्मिन्, धर्मिन्, सहस्र, युवति, पदाति, पद्धति, अथर्वन्, दक्षिणा, भरत, विषय, श्रोत्र, इति भिक्षादिः॥

समूहो गार्भिणम् । इह भस्याढ इति पुंवद्भावे कृते । **इनण्यनपत्ये।६।१६४।** अनपत्यार्थेऽणि इन्प्रकृत्या तेन नस्तद्धिते इति टिलोपो न । युवतीनां समूहो यौवनम् । **गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद्वुञ् ।४।२।३९।** ग्लुचुकायनीनां समूहो ग्लौचुकायनकम् । औक्षकमित्यादि । आपत्यस्यचेति यलोपे प्राप्ते । ( प्रकृत्या अके राजन्यमनुष्ययुवानः ) । राजन्यकम् । मानुष्यकम् । ( वृद्धाच्चेति वक्तव्यम् ) । वार्द्धकम् । **केदाराद्यञ्च ।४।२।४०।** चाद् वुञ् । कैदार्यम् कैदारकम् । ( गणिकाया यञ् वक्तव्यम् ) । गाणिकम् । **ठञ्कवचिनश्च ।४।२।४१।** चात्केदारादपि । कवचिनां समूहः कावचिकम् । कैदारिकम् । **ग्रामजनबन्धुभ्यस्तल् ।४।२।४३।** ग्रामता । जनता । बन्धुता । तलन्तं स्त्रियाम् । ( गजसहायाभ्यां चेति वक्तव्यम् ) । गजता । सहायता । ( अन्हः खःक्रतौ ) अहीनः क्रतुः । **अचित्तहस्तिधेनोष्ठक् ।४।२।४७। इसुसुक्तान्तात्कः ।७।३।५१।** इस्उस्उक् त एतदन्तात्परस्य ठस्य कः । साक्तुकम् हास्तिकम् । धैनुकम् । **केशाश्वाभ्यां यञ्छावन्यतरस्याम् ।४।२।४८।** पक्षे ठगणौ । कैश्यम् । कैशिकम् । अश्वीयम् । आश्वम् । **पाशादिभ्यो यः ।४।२।४९।** पाशा । तृण्या । धूम्या । वन्या । वात्या । **खलगोरथात् ।४।२।५०।** खल्या । गव्या । रथ्या । **इनित्रकट्यचश्च ।४।२।५१।** खलादिभ्यः

---

१ पाश, तृण, धूम, वात, अङ्गार, पाटल, पोत, गल, पिटक, पिटाक, शकट, हल, नट, वन, इतिपाशादिः ॥

क्रमात्स्युः। खलिनि। गोत्रा। रथकट्या। ( खलादिभ्य इनिर्वक्तव्यः ) डाकिनि। कुटुम्बिनी। आकृतिगणोऽयम्। **तदस्यां प्रहरणमिति क्रीडायां णः ।४।२।५७।** दण्डप्रहरणमस्यां क्रीडायां दाण्डा। मौष्टा। घञः **सास्यां क्रियेति ञः ।४।२।७०।** घञन्तात् क्रियावाचिनः प्रथमान्तादस्यामित्यर्थे स्त्रीलिङ्गे ञप्रत्ययः। **श्येनतिलस्य पाते ञे ।६।३।७१।** अनयोर्मुम् स्यात् ञप्रत्यये परे पातशब्दे उत्तरपदे। श्यैनम्पाता मृगया। तैलंपाता स्वधा। श्येनतिलस्यकिम्। दण्डपातोऽस्यां दाण्डपाता तिथिः। **तदधीते तद्वेद।४।२।५९। न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्।७।३।३।** पदान्ताभ्यां यकारवकाराभ्यां परस्याचो न वृद्धिः किंतु ताभ्यां पूर्वौ क्रमादैचावागमौ स्तः। व्याकरणमधीते वेत्ति वा वैय्याकरणः। **क्रमादिभ्यो वुन् ।४।२।६१।** क्रमकः। पदकः। शिक्षकः। मीमांसकः। **क्रतूक्थादिसूत्रन्ताठ्ठक् ।४।२।६०।** क्रतुविशेषवाचिनामेव ग्रहणम्। तेभ्यो मुख्यार्थेभ्यो वेदितरि तत्प्रतिपादकग्रन्थपरेभ्यस्त्वध्येतरि। आग्निष्टोमिकः। वाजपेयिकः। उक्थं सामविशेषः। तल्लक्षणपरो ग्रन्थविशेषो लक्षणयोक्थम्। तदधीते वेद वा औक्थिकः। ( मुख्यार्थात्तूक्थशब्दात् ठगणौ नेष्येते )। नैय्यायिकः। वार्त्तिकः। लौकायतिकः। (सूत्रान्तात्तु अकल्पादेरेवेष्यते )। सांग्रहसूत्रिकः। अकल्पादेः किम्। काल्पसूत्रः। ( विद्याल-

---

१ खल, डाक, कुटुम्ब, इति खलादिराकृतिगणः।। तेनशाकिनीत्यपि सिद्धम्।
२ उक्थ, लोकायत, न्याय, न्यास, पुनरुक्त, निरुक्त, निमित्त, द्विपद, ज्योतिष, अनुपद, अनुकल्प, यज्ञ, धर्म, चर्चा, क्रमेतर, संहिता, पदक्रम, संघट, वृत्ति-

क्षणकल्पान्ताच्चेतिवक्तव्यम्) । वायसविद्यिकः । गौलक्षणिकः । पाराशरकल्पिकः । ( अङ्गक्षत्रधर्म्मात्त्रिपूर्वाद्विद्यान्तान्नेति वक्तव्यम् । ) आङ्गविद्यः । क्षात्रविद्यः । धार्म्मविद्यः । त्रिविद्या तामधीते वेत्ति वा त्रैविद्यः । **तदस्मिन्नस्तीति देशे तन्नाम्नि ।४।२।६७।** उदुम्बराः सन्त्यस्मिन्देशे औदुम्बरो देशः । **तेननिर्वृत्तम्।४।२।६८।** कुशाम्बेन निर्वृत्ता कौशाम्बी-नगरी। **तस्य निवासः।४।२।६९।**शिबीनां निवासो देशः शैबः। **अदूरभवश्च।४।२।७०।** विदिशाया अदूरभवं वैदिशम् । **वुञ्छण्कठजिलसेऽनिरढञ्ण्यञ्फक्फिञिञ्ञ्यकक्ठकोऽरीहणकृशाश्वर्श्यकुमु-**

---

परिपद, संग्रह, गुण, गण, आयुर्वेद, इत्युक्थादिः । १ अरीहण, द्रुघण, द्रुहण, भगल, उलन्द, किरण, सांपरायण, क्रौष्ट्रायण, औष्ट्रायण, त्रैगर्तायण, मैत्रायण, भस्त्रायण, वैमतायन, गौमतायन, सौमतायन, सौसायन धौमतायन, ऐन्द्रायण, कौन्द्रायण, खाडायन, शाण्डिल्यायण, रायस्पोष, विपथ, विपाश, उद्दण्ड, उदञ्चन, खाण्डवीरण, वीरण, काशकृत्स्न, जाम्बवत्, शिंशपा, रैवत, बिल्व, सुयज्ञ, शिरीष, बधिर, जम्बु, खदिर, सुशर्मन्, भलत, भलंदन, खण्डु, कलन, यज्ञदत्त, इत्यरीहणादिः ।। २ कृशाश्व, अरिष्ट, अरिश्म, वेश्मन्, विशाल, लोमश, रोमश, रोमक, शबल, कुटवर्चल, सुवर्चल, सुकर, सूकर, प्रतर, सदृश, पुराग, पुरग, मुख, धूम, अजिन, विनत, अवनत, विकुट्यास, पराशर, अरुस, अयस, मौद्गल्य, सूकर, इति कृशाश्वादिः ।। ३ ऋश्य, न्यग्रोध, शर निलीन, निवास, निवात, विधान, निबद्ध, विबद्ध, परिगूढ, उपगूढ, असनि, सित, मत, वेश्मन्, उत्तराश्मन्, स्थूल, बाड, खदिर, शर्करा, अनडुह, अरडु, परिवंश, वेणु, वीरण, खण्ड, दण्ड, परिवृत्त, कर्दम, अंश, इत्यृश्यादिः ।। ४ कुमुद, शर्करा, न्यग्रोध, इक्कट, संकट, कङ्कर, गर्त, बीज, परिवाप, निर्यास, शकट, कच, मधु, शिरीष, अश्व, अश्वत्थ, बल्व, यवास, कूप, विकङ्कत, दशग्राम, इतिकुमुदादिः ।।

काशतृणप्रेक्षाश्मसखिसंकाशवलपक्षकर्णसुतंगमप्रगदिन्वराहकु-

१ काश, पाश, अश्वत्थ, पलाश, पीयूक्षा, चरण, वास, नड, वज, कर्दम, च्छूल, कङ्कर, गुहा बिसतृण, कपूर, बर्बर, मधुर, ग्रह, कपित्थ, जतु, सीपाल, इति काशादिः ॥२ तृण, नड, मूल, वन, पर्ण, वराण, बिल, फूल, फल, अर्जुन, अर्ण, वर्ण, बल, चरण, बुस, इतितृणादिः ॥३ प्रेक्षा, हलका, बन्धुका, ध्रुवका, क्षिका, न्यग्रोध, इक्कट, कङ्कट, सङ्कट, कट, कूप, बुक, पुक, पुट, मह, परिवाप, वास, ध्रुवका, गर्त, कूपक, हिरण्य, इति प्रेक्षादिः ॥ ४ अश्मन्, यूथ, ऊष, न, नव, दर्भ, वृन्द, गुद, खण्ड, नग, शिखा, कीट, पाम, कन्द, कान्द, कुल, इ, गुड, कुण्डल, पीत, गुह, इत्यश्मादिः ॥ ५ सखि, अग्निदत्त, वायुदत्त, खिदत्त, गोपिल, भल्ल, पाल, चक्र, चक्रवाक, छगल, अशोक, करवीर, वासव, र, वज्र, कुसीरक, सीहर, सरक, सरस, सरम, समर, समल, सुरस, सेह, तमा- कवल, सप्तल, इति सख्यादिः ॥ ६ संकाश, कपिल, काश्मीर, समीर, शूर- न, सरक, शूर, सुपथिन्, पन्थच, यूथ, अंश, अङ्ग, नासा, पलित, आनुना- अश्मन्, कूट, मलिन, दश, कुम्भ, शीर्ष, वितर, समल, सीर, पञ्जर, मन्थ, , रोमन् , पुलिन, सुपरि, कटिप, सकर्णक, वृष्टि, तीर्थ, अगस्ति, विकर, ना- का, इति संकाशादिः ॥ ७ बल, चुल, वल, दल, वट, लकुल, उरल, पुल, , उल, डुल, वन, कुल, इति बलादिः ॥ ८ पक्ष, तुच्छ, तुष, तुण्ड, अ- , कम्बलिका, बलिक, चित्र, अस्ति, पृथः, पन्थच, कुम्भ, सीरक, सरक, सक- सरस, समल, अतिश्वन्, रोमन्, लोमन, हस्तिन्, मकर, लोमक, शीर्ष, निवा- पाक, सिंहक, अंकुश, सुवर्णक, हंसक, हिंसक, कुत्स, बिल, खिल, यमल, ह- हला, सकर्णक, इति पक्षादिः ॥ ९ कर्ण, वसिष्ठ, अर्क, अर्कलूष, द्रुपद- नडुल, पाञ्चजन्य, स्फिज्, कुम्भी, कुन्ती, जित्वन, जीवन्त, कुपिश, आण्डी जव, जैत्र, आनक, इति कर्णादिः ॥ १० सुतङ्गम, मुनिचित्त, विप्रचित्त, पुत्र, स्वन, श्वेत, खण्डिक, शुक, विग्र, बीजवापिन, अर्जुन, श्वन्, अजिर, , खण्डित, कर्ण, विग्रह, इति सुतङ्गमादिः ॥ ११ प्रगदिन्, मगदिन्, मददिन् ल, खण्डित, गदित, चूडार, मडार, मन्दार, कोविदार, इति प्रगद्यादिः ॥ वराह, पलाश, शिरीष, पिनद्ध, बलाह, स्थूल, विदग्ध, विजग्ध, विभग्न, नि- बाहु, खदिर, शर्करा, इतिवराहादिः ॥

मुद्रादिभ्यः ।४।३।२०। सप्तदशभ्यः सप्तदश क्रमात्स्युश्चातुरर्थ्याम् । अरीहणादिभ्यो वुञ् । अरीहणेन निर्वृत्तमारीहणकम् । कृशाश्वादिभ्यश्छण् । कार्शाश्वीयः । ऋश्यादिभ्यः कः । ऋश्यकम् । कुमुदादिभ्यष्ठच् । कुमुदिकम् ॥ काशादिभ्य इलः काशिलः । तृणादिभ्यः सः । तृणसम् । प्रेक्षादिभ्य इनिः । प्रेक्षी । अश्मादिभ्यो रः । अश्मरः । सख्यादिभ्यो ढञ् । साखेयम् । संकाशादिभ्यो ण्यः । सांकाश्यम् । बलादिभ्यो यः । बल्यम् । पक्षादिभ्यः फक् । पाक्षायणः । पथः पन्थच । पान्थायनः । कर्णादिभ्यः फिञ् । कार्णायनिः । सुतंगमादिभ्य इञ् । सौतंगमिः । प्रगदिनादिभ्यो ञ्यः । प्रागद्यः । वराहादिभ्यः कक् । वाराहकः । कुमुदादिभ्यष्ठक् । कौमुदिकः । जनपदे लुप् ।४।२।८१। जनपदे वाच्ये चातुरर्थिकस्य लुप् । लुपि युक्तवद्व्यक्तिवचने ।१।२।५१। लुपि सति प्रकृतिवल्लिङ्गवचने स्तः । पञ्चालानां निवासो जनपदः पञ्चालाः । कुरवः । अङ्गाः । कलिङ्गाः । वरणादिभ्यश्च ।४।२।८२। अजनपदार्थ आरंभः । वरणानामदूरभवन्नगरं वरणाः । शर्कराया वा ।४।२।८३। अस्माच्चातुरर्थिकस्य लुप्स्यात् । ठक्छौ च ।४।२।८४। शर्करायाः एतौ स्तः । कुमुदादौ वराहादौ च

१. कुमुद, गोमथ, रथकार, दशग्राम, अश्वत्थ, शाल्मलि, शिरीष, मुनि, स्थल, कुण्डल, कूट, मधुकर्ण, घास, कुन्द, शुचि, कर्ण, इति कुमुदादिः ॥
२. वरणा, शृंगी, शाल्मलि, मुण्डी, समाण्डी, पर्णी, ताम्रपर्णी, गोद, आलिङ्ग्यायनि, जानपदी, जम्बू, पुष्कर, चम्पा, पम्पा, वल्गु, उज्जयिनी, गया, मथुरा, तक्षशिला, उरसा, गोमती, वलभी, इति वरणादिः ॥

पाठसामर्थ्यात्पक्षे ठच्कौ। वाग्रहणसामर्थ्यात्पक्षे औत्सर्गिकोऽण्। तस्य लुग्विकल्पः। षड्रूपाणि। शर्करा। शार्करिकम्। शार्करम्। शर्करीयम्। शर्करिकम्। शार्करकम्। **नद्यां मतुप् ।४।२।८५।** चातुरर्थिकः। इक्षुमती। **कुमुदनडवेतसेभ्योऽड्मतुप् ।८।२९। झयः ।८।२।१०।** मतोर्मस्य वः। कुमुद्वान्। नड्वान्। **मादुपधायाश्च मतोर्वोऽयवादिभ्यः ।८।२।१०।** मवार्णावर्णान्तान्मवर्णाऽवर्णोपधायाश्च यवादिवर्जितात्परस्य मतोर्मस्य वः। वेतस्वान्। **नडशादाड्ड्वलच् ।४।२।८८।** नड्वलः। शाद्वलः। **शिखाया वलच् ।४।२।८९।** शिखावलः। **उत्करादिभ्यश्छः ।४।२।९०।** उत्करीयम्। **नडादीनां कुक्च ४।२।९५।** नडकीयम्। कुञ्चाह्रस्वत्वं च। कुञ्चकीयः। (तक्षन्नलोपश्च।) तक्षकीयः। **इतिचातुरर्थिकाः॥ ४ ॥**

**शेषे ।४।२।९२।** अपत्यादिचतुर्थ्यन्तादन्योर्थः शेषस्तत्राणादयः स्युः। चक्षुषा गृह्यते चाक्षुषं रूपम्। श्रावणः शब्दः। औपनिषदः पुरुषः। दृषदि पिष्टा दार्षदाः सक्तवः। उलूखले क्षुण्ण औलूखलो यावकः। अश्वैरुह्यते आश्वो रथः। चतुर्भिरुह्यते चातुरं शकटम्। चतुर्दश्यां दृश्यते चातुर्दशं रक्षः। तस्य विकार इत्यतः प्राक् शेषाधिकारः। **राष्ट्रावारपाराद्घखौ च ।४।२।९३।** आभ्यां घखौ स्तः।

---

१. यव, दल्मि, ऊर्मि, भूमि कृमि, कुञ्च, वशा, द्राक्षा, ध्राक्षा, ध्रजि, ध्वजि, ध्वजि, निजि, सञ्जि, हरित्, ककुद्, मरुत्, गरुत्, इक्षु, द्रु, मधु, **आकृतिगणोऽयम्** ॥

राष्ट्रेजातादि राष्ट्रियः । अवारपारीणः । ( अवारपाराद्विगृहीतादपि विपरीताच्चेति वक्तव्यम् ) । अवारीणः । पारावारीणः । इह प्रकृतिविशेषात् घादयष्ट्युटच्युलन्ताः प्रत्यया उच्यन्ते । तेषां जातादयोऽर्थविशेषाः समर्थविभक्तयश्च वक्ष्यन्ते । **ग्रामाद्यखञौ** ।४।२।९४। ग्राम्यः । ग्रामीणः । **नद्यादिभ्यो ढक्** ।४।२।९७। नादेयम् । माहेयम् । वाराणसेयम् । **दक्षिणापश्चात्पुरसस्त्यक्** ।४।२।९८। दाक्षिणात्यः । पाश्चात्यः । पौरस्त्यः । **द्युप्रागपागुदक्प्रतीचो यत्** ।४।२।१०१। दिव्यम् । प्राच्यम् । अपाच्यम् । उदीच्यम् । प्रतीच्यम् । **अव्ययात्त्यप्** ।४।२।१०४। ( अमेहक्वतसित्रेभ्य एव ) । अमात्यः । इहत्यः । क्वत्यः । ततस्त्यः । तत्रत्यः । ( त्यब्नेर्ध्रुव इति वाच्यम् ) । नित्यः । निसोगते । **ह्रस्वात्तादौ तद्धिते**।८।३।१०१। ह्रस्वादिणः सस्य षस्तादौ तद्धिते । निर्गतो वर्णाश्रमेभ्यो निष्टयश्चाण्डालादिः। (अरण्याण्णः)। आरण्याः सुमनसः । दूरादेत्यः । ( उत्तरादाहञ् ) । औत्तराहः । **ऐषमोह्यःश्वसोऽन्यतरस्याम्** ।४।२।१०५। एभ्यस्त्यब्वा । पक्षे वक्ष्यमाणौ ट्युट्युलौ । ऐषमस्त्यम् । ऐषमस्तनम् । ह्यस्त्यम् । ह्यस्तनम् । श्वस्त्यम् । श्वस्तनम् । पक्षे शौवस्तिकं वक्ष्यते । **वृद्धाच्छः** ।४।२।११४। शालीयः । **त्यदादीनि च**१।१।७४। वृद्धसंज्ञानि स्युः । तदी-

---

१ नदी, मही, वाराणसी, श्रावस्ती, कौशाम्बी, वनकौशाम्बी, काशपरी, काशफरी, खादिरी, पूर्वनगरी, पाठा, माया, शाल्वा, दार्वा, वडवापा, वृषे, इति नद्यादिः ॥

२ त्यदादिः सर्वाद्यन्तर्गणः ॥

यः। वा नामधेयस्य वृद्धसंज्ञा। देवदत्तीयः। दैवदत्तः। भावत्कः। (सिति च)। तद्धिते पूर्वं पदं स्यात्। जश्त्वम्। भवदीयः। वृद्धादित्यनुवृत्तेः शत्रन्तादणेव। भावतः। **काश्यादिभ्यष्ठञ्ञिठौ** ।४।२।११६। इकार उच्चारणार्थः। काशिकी। काशिका। वैदिकी। वैदिका। (आपदादिपूर्वपदात्कालान्तात्)। आपदादिराकृतिगणः। आपत्कालिकी। आपत्कालिका। **धन्वयोपधाद्वुञ्** ।४।२।१२१। धन्वविशेषवाचिनो यकारोपधाच्च देशवाचिनो वृद्धाद्वुञ् स्यात्। ऐरावतं धन्वः। ऐरावतकः। सांकाश्यकाम्पिल्पशब्दौ वुञ्छणादिसूत्रेण ण्यान्तौ। सांकाश्यकः। कांपिल्यकः। **नगरात्कुत्सनप्रावीण्ययोः** ४। २।१२८। कुत्सिते प्राविण्ये च नगरशब्दाद्वुञ् स्यात्। नागरकश्चौरः शिल्पी वा। एतयोः किम्। नागराः। ब्राह्मणाः। **अरण्यान् मनुष्ये** ।४।२।१२९। वुञ् स्यात् औपसंख्यानिकणस्यापवादः। (पथ्यध्यायन्यायविहारमनुष्यहस्तिष्विति वाच्यम्)। आरण्यकः पन्थाः। अध्यायो न्यायो विहारो मनुष्यो हस्ती वा। **गर्त्तोत्तरपदाच्छः** ।४।

---

१ काशि, वेदि, चेदि, सांयाति, संवाह, अच्युत, मोदमान, शकुलाद, हस्तिकर्षु, कुनाम, हिरण्य, करण, गोवासन, भारङ्गी, अरिंदम, अरित्र, देवदत्त, दशग्राम, शौवावतान, युवराज, उपराज, देवराज, मोदन, सिन्धुमित्र, दासमित्र, सुधामित्र, सोममित्र, छागमित्र, मधुमित्र, इति काश्यादिः॥

२।१३०। देशइत्येव । वृकगर्त्तीयम् । **गहादिभ्यश्च** ।४।२।१३८। गहीयः । **युष्मदस्मदोरन्यतरस्यां खञ् च** ।४।३।१। चाच्छः । पक्षेऽण् । युवयोर्युष्माकं वायं युष्मदीयः । अस्मदीयः । **तस्मिन्नणि च युष्माकास्माकौ** ।४।३।२। युष्मदस्मदोरेतावादेशौ स्तः । खञि अणि च । यौष्माकीणः । आस्माकीनः । यौष्माकः । आस्माकः । **तवकममकावेकवचने**।४।३।३। एकार्थवाचिनो र्युष्मदोस्तवकममकौस्तः खञि अणि च । तावकीनः । तावकः । मामकीनः। मामकः। छे तु । **प्रत्ययोत्तरपदयोश्च** ।७।२।९८। मपर्यन्तयोरेकार्थवाचिनोस्त्वमौस्तः प्रत्यये उत्तरपदे च । त्वदीयः । मदीयः । त्वत्पुत्रः । **मध्यान्मः** ।४।३।८। मध्यमः । **असांप्रतिके** ।४।३।९। मध्यशब्दादप्रत्ययः सांप्रतिकेर्थे । उत्कर्षापकर्षहीनो मध्यो वैय्याकरणः । मध्यं दारु । नातिह्रस्वं नातिदीर्घमित्यर्थः । **द्वीपादनुसमुद्रं यञ्** ।४।३।१०। समुद्रसमीपे यो द्वीपस्तद्विषयापशब्दाद्यञ् स्यात् । द्वैप्यम् । द्वैप्या । **कालात् ठञ्** ।४।३।११। मासिकम् । सांवत्सरिकम । ( अव्ययानां भमात्रे टिलो-

---

३ गह, अन्तःस्थ, सम, विषम, मध्य, मध्यंदिन, चरणे, उत्तम, अङ्ग, वङ्ग, मगध, पूर्वपक्ष, अपरपक्ष, अधमशाख, उत्तमशाख, एकशाख, समानशाख, एकग्राम, समानग्राम, एकवृक्ष, एकपलाश, इष्वग्र, इष्वनीक, अवस्यन्दन, कामप्रस्थ, खाडायन, काठेरणि, लावेरणि, सौमित्रि, शैशिरि, आसुत, दैवशर्मि, श्रौति, आर्हिंसि, आमित्रि, व्याडि, वैजि, आध्यश्वि, आनृशंसि, शौङ्गि, अग्निशर्मि, भौजि, वाराटकि, वाल्मीकि, क्षेमवृद्धि, आश्वत्थि, औगाहमानि, ऐकबिन्दवी, दन्ताग्र, हंस, तन्त्वग्र, उत्तर, अनन्तर, मुखपार्श्वतसोर्लोपः । जनपरयोःकुक्च, देवस्यच, इति गहादिराकृतिगणः ॥

पः ) । सायंप्रातिकः । पौनःपुनिकः । कथंतर्हि 'शार्वरस्यतमसोनिसिद्धये' इति कालिदासः । 'अनुदितौषसरागः' इति भारविः । समानकालीनं प्राक्कालीनमित्यादि च अपभ्रंशा एव इति प्रामाणिकाः । तत्रजात इति यावत्कालाधिकारः । **श्राद्धे शरदः** ।४।३।१२। ठञ्स्यात् । ऋत्वणोपवादः । शरदिभवं शारदिकं श्राद्धम् । **विभाषा रोगातपयोः** ।४।३।१३। शारदिकः । शारदो वा रोग आतपो वा । **निशाप्रदोषाभ्यां च** ।४।३।१४। ठञ् वा । नैशिकम् । नैशम् । प्रादोषिकम् । प्रादोषम् । **श्वसस्तुट् च** ।४।३।१५। श्वसष्ठञ् वा तुट्च । **द्वारादीनां च** ।७।३।४। एषां न वृद्धिरैजागमश्च । शौवस्तिकम् । **सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्** ।४।३।१६। सन्धिवेलायां भवं सान्धिवेलम् । ग्रैष्मम् । सन्धिवेला सन्ध्या अमावास्या त्रयोदशी । चतुर्दशी । पौर्णमासी । प्रतिपत् । **प्रावृष एण्यः** ।४।३।१७। प्रावृषेण्यः । **वर्षाभ्यष्ठक्** ।४।३।१८। वर्षासु साधु वार्षिको वासः । **सर्वत्राण् च तलोपश्च** ।४।३।२२। हेमन्तादण् तलोपश्च वेदलोकयोः । चकारात्पक्षेऽऋत्वण् । हेमन्ते भवं हैमन्तम् वसनम् । **सायंचिरम्प्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट्च** ।४।३।२३। सायमित्यादिभ्यश्चतुर्भ्यं अव्ययेभ्यश्च कालवाचिभ्यष्ट्युट्युलौ स्तस्तयोस्तुट् च । सायंभवं सायंतनम् । चिरंतनम् । प्राह्णप्रगयोरेदन्तत्वं निपात्यते । प्राह्णेतनम् । प्रगेतनम् । दोषात-

१ द्वार, स्वर, व्यल्कश, स्वस्ति, स्फ्यकृत, स्वादु, मृदु, श्वस्, श्वन्, स्व, इति द्वारादिः ॥ २ सन्धिवेला, सन्ध्या, अमावास्या, त्रयोदशी, चतुर्दशी, पौर्णमासी, प्रतिपत्, इति सन्धिवेलादिः ॥

नम् । दिवातनम् । ( चिरपरुत्परारिभ्यस्त्नो वक्तव्यः । चिरत्नम् । परुत्नम् । परारित्नम् । अग्रादिपश्चाड्डिमच् । अग्रिमम् । पश्चिमम् । अन्ताच्च । अन्तिमम् । **विभाषा पूर्वाह्णापराह्णाभ्याम्** ।४।३।२४। आभ्यां ट्युट्युलौ वा स्तस्तयोस्तुट् च । पक्षे ठञ् । पूर्वाह्णेतनम् । पौर्वाह्णिकम् । अपराह्णेतनम् । आपराह्णिकम् । **तत्रजातः** ।४।३।२५। सप्तमी समर्थाज्जातइत्यर्थेऽणादयो घादयश्च स्युः । स्रुघ्ने जातः स्रौघ्नः । औत्सः । राष्ट्रियः । अवारपारीण इत्यादि । **प्रावृषष्ठप्** ।४।३।२६। एण्यस्याऽपवादः । प्रावृषिकः । **प्रायभवः** ।४।३।३९। तत्रेत्येव । स्रुघ्ने प्रायेण बाहुल्येन भवति स्रौघ्नः । **सम्भूते** ।४।३।४१। स्रुघ्नेसम्भवति स्रौघ्नः । **कोशाड्ढञ्** ।४।३।४२। कौशेयं वस्त्रम् । **तत्र भवः** ।४।३।५३। स्रुघ्नेभवः स्रौघ्नः । औत्सः । राष्ट्रियः । **दिगादिभ्यो**[1] **यत्** ।४।३।५४। दिश्यम् । वर्ग्यम् । **शरीरावयवाच्च**।४।३।५५। दन्त्यम् । कण्ठ्यम् । **दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ्** ।४।३।५६। दार्तेयम् । कलशिर्घटः । तत्रभवं कालशेयम् । **ग्रीवाभ्योण्च**।४।३।५७।चाड्ढञ् । ग्रैवेयं ग्रैवम् । **गम्भीराञ्ञ्यः**।४।३।५८।गम्भीरेभवं गांभीर्यम्। **अव्ययीभावाच्च**।४।४।५९। परिमुखे भवं पारिमुख्यम् । ( [3]परिमुखादिभ्य-

---

१. दिश, वर्ग, पूग, गण, पक्ष, धाय्य, मित्र, मेधा, अन्तर, पथिन्, रहस्, अलीक, उखा, साक्षिन्, देश, आदि, अन्त, मुख, जघन, मेघ, यूथ, उदकात्संज्ञायाम्, न्याय, वंश वेश, काल, आकाश, इति दिगादिः ॥ २ ( पञ्चजनादुपसंख्यानम् ) पाञ्चजन्यः । ३. परिमुख, परिहनु, पर्योष्ठ, पर्युलूखल, परिसीर, उपसीर, उपस्थूण, उपकलाप, अनुपथ, अनुपद, अनुगङ्ग, अनुतिल, अनुसीत, अनुसाय, अनुसीर, अनुमाष, अनुयव, अनुयूप, अनुवंश, प्रतिशाख, इति परिमुखादिः ॥

एवेष्यते) । नेह । औपकूलः। **अन्तः पूर्वपदाट्ठञ्** ।४।३।६०।अव्ययी भावादित्येव । वेश्मनि इति अन्तर्वेश्मं तत्रभवन्तर्वेश्मिकम् । आन्तर्गणिकम् । अध्यात्मादेष्ठञिष्यते । अध्यात्मे भवं आध्यात्मिकम् । **अनुशतिकादीनां च** ।७।३।२०। एषामुभयपदवृद्धिर्ञिति णिति किति च। आधिदैविकम् । आधिभौतिकम् । ऐहलौकिकम् । आकृतिगणोयम् । **जिव्हामूलाङ्गुलेश्छः** ।४।३।६२। जिव्हामूलीयम् । अङ्गुलीयम् । **वर्गान्ताच्च** ।४।६।६३। कवर्गीयम् । **तत आगतः** ।४।३।७४। स्रुघ्नादागतः स्रौघ्नः । **ठगायस्थानेभ्यः** ।४।३।७५। शुल्कशालिकः । **विद्यायोनिसंवन्धेभ्यो वुञ्** ।४।३।७७। औपाध्यायकः पैतामहकः । **ऋतष्ठञ्** ।४।३।७८। वुञोपवादः । हौतृकम् । मातृकम् । भ्रातृकम् । **पितुर्यच्च**।४।३।७९।चाट्ठञ् रीङ्तः यस्येति लोपः । पित्र्यम् । पैतृकम्। **गोत्रादङ्कवत्** ।४।३।८०। बिदेभ्य आगतं वैदम् । गार्गम् । दाक्षम्, औपगवकम् । **हेतुमनुष्येभ्योन्यतरस्यां रूप्यः** ४३८१ समादागतं समरूप्यम् । पक्षे गहादित्वाच्छः । समीयम् । देवदत्तीयम् । देवदत्तरूप्यम् । **मयट् च** ।४।३।८२। सममयम् । **प्रभवति** ।४।३।८३। हि-

---

१ अध्यात्म, अधिदेव, अधिभूत, इहलोक, इत्यध्यात्मादिराकृतिगणः ।। २ अनुशतिक, अनुहोड, अनुसंवरण, अनुसंवत्सर, अङ्गारवेणु, असिहत्य, अस्यहेति, वध्योग, पुष्करसद्, अनुहरत्, कुरुकत, कुरुपञ्चाल, उदकशुद्ध, इहलोक, परलोक, सर्वलोक, सर्वपुरुष, सर्वभूमि, प्रयोग, परस्त्री, राजपुरुषत्ष्यभि, सूत्रनड, आकृतिगणोऽयम्, तेन अधिगम, अधिभूत अधिदेव, चतुर्विद्या, इत्यादि इत्यनुशतिकादिः ।।

मवतः प्रभवति हैमवती गङ्गा। विदूराञ्ञ्यः ।४।३।८४। विदूरात्प्रभवति वैदूर्यो मणिः। दन्तमध्योयं शाद्वलवत्। नतु नड्वलवन्मूर्द्धन्यमध्यः। नन्वर्थासङ्गतिः। बालवायाद्धि असौ प्रभवति विदूरे तु संस्क्रियते। सत्यम्। अतएव समाहितं भाष्ये बालवायो विदूरं चेति। बालवायशब्दः प्रत्ययं लभते विदूरादेशंच। सूत्रे पठितेनादेशेनानुरूपस्थानि। आक्षिप्येते। तद्गच्छति पथि दूतयोः।४।३।८५। स्रुघ्नङ्गच्छति स्रौघ्नः। पन्था दूतो वा। अभिनिष्क्रामतिद्वारम् ।४।३।८६। स्रुघ्नमभिगच्छति स्रौघ्नं कान्यकुब्जद्वारम्। अधिकृत्य कृते ग्रन्थे ।४।३।८७। शारीरकमधिकृत्य कृतो ग्रन्थः शारीरकीयः। शारीरकं भाष्यमिति त्वभेदोपचारात्। सोऽस्यनिवासः ।४।३।८९। स्रुघ्नोनिवासोस्य स्रौघ्नः। तेन प्रोक्तम् ।४।३।१०१। पाणिनिना प्रोक्तं पाणिनीयम्। पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः ।४।३।११०। णिनिः स्यात्। पाराशर्येण प्रोक्तं भिक्षुसूत्रमधीयते पाराशरीणः। भिक्षवः। शैलालिनो नटाः। कर्मन्दकृशाश्वादिनिः ।४।३।१११। कर्मन्देन प्रोक्तम्भिक्षुसूत्रमधीयते कर्मन्दिनो भिक्षवः। कृशाश्विनोनटाः। उपज्ञाते ।४।३।११५। पाणिनिना उपज्ञातं पाणिनीयम्। तस्येदम् ।४४१।२०। उपगोरिदमौपगमम्। ( समिधामाधानेषण्यण्। ) सामिधेन्यो मन्त्रः। रथाद्यत् ।४।४।१२१। रथ्यञ्चक्रम्। पत्रपूर्वादञ् ।४।४१।२२४। अश्वरथस्येदं आश्वरथम्। हलसीराट्ठक् ।४।३।१२४। हालिकम्। सैरिकम्। गोत्रचरणाद्वुञ् ।४।३।१२६।

औपगवकम्। ( चरणाद्धर्माम्नाययोरितिवक्तव्यम् । ) काठकम्। सङ्घाङ्कलक्षणेष्वञ्यञिञामण् ।४।३।१२७। घोषग्रहणमपि कर्त्तव्यम्। अञ्। बैदः संघोऽङ्को घोषो वा। बैदं लक्षणं। यञ्। गार्गः। गार्गम्। इञ्। दाक्षः। दाक्षम्। परंपरासंबन्धोऽङ्कः। साक्षात्तु लक्षणम्॥ इति शैषिकाः॥ ।४।

**तस्य विकारः** ।४।३।१३४। (अश्मनो विकारे टिलोपो वक्तव्यः) । अश्मनो विकार आश्मः। भास्मनः। मार्त्तिकः। **अवयवे च प्राण्योषधिवृक्षेभ्यः** ।४।३।१३५। चाद्विकारे। मयूरस्य विकारोऽवयवो वा-मायूरः। मौर्वम् काण्डं भस्म वा। पैप्पलम्। **त्रपुजतुनोः षुक्** ।४।३।१३८। आभ्यामण् एतयोः षुक् च। त्रापुषम्। जातुषम्। **ओरञ्** ।४।३।१३९। दैवदारवम्। **अनुदात्तादेश्च** ।४।३।१४०। अञ्। कापित्थम्। **पलाशादिभ्यो[१] वा** ।४।३।१४१। अञ्। पालाशम्। खादिरम्। **शम्याष्लञ्** ।४।३।१४२। शामीलम्। **मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः** ।४।३।१४४। प्रकृतिमात्रान्मयड्वा स्याद्विकारावयवयोः। अश्ममयम्। आश्मनम्। अभक्षेत्यादि किम्। मौद्गः। सूपः। कार्पासमाच्छादनम्। **नित्यं वृद्धशरा[२]दिभ्यः** ।४।३।१४४। आम्रमयम्। शरमयम्। एकाचो नित्यम्। वाङ्मयम्। **गोश्च पुरीषे** ।४।३।१४५। गोमयम्। **एण्या ढञ्** ।४।३।१५९। ऐणेयम्। एणस्य तु ऐणम्।

---

१ पलाश, खदिर, शिंशपा, स्यन्दन, पुलाक, करीर, शिरीष, यवास, विकङ्कत, इति पलाशादिः॥ २ शर, दर्भ, मृत्, कुटी, तूण, सोम, बल्वज, इति शरादिः॥

गोपयसोर्यत् ।४।३।१६०। गव्यम् । पयस्यम् । फले लुक् ।४।३। १६३। विकारावयवप्रत्ययस्य । लुक् तद्धितलुकि ।६।५।७। उपसर्जनस्त्रीप्रत्ययस्य । आमलक्याः फलम् आमलकम् । प्लक्षादिभ्योऽण् ।४।३।१६४। विधानसामर्थ्यान्न लुक्। प्लाक्षम्। न्यग्रोधस्य च केवलस्य ।७।३।५। अस्य न वृद्धिरैजागमश्च । नैयग्रोधम् । जंब्वावा ४।३।१६५। अणूफले । जाम्बवम् । पक्षे ओरञ् । तस्य लुक् । लुप् च ।४।३।१६६। जंब्वाःफलप्रत्ययस्य लुब्वास्यात् । लुपि युक्तवत् । जम्बूः । ( फलपाकशुषामुपसंख्यानम् ) । व्रीहयः । मुद्गाः (पुष्पमूलेषु वहुलम्) । मल्लिकायाः पुष्पं मल्लिका । जात्याःपुष्पं जाती । विदार्य्याः मूलंविदारी । वहुलग्रहणान्नेह । पाटलानि पुष्पाणि । सा-ल्वानि मूलानि । वाहुलकात्क्वचिल्लुक् । अशोकम् । करवीरम् । हरीतक्यादिभ्यश्च ।४।३।१६६। फलप्रत्ययस्य लुप् । हरीतक्यादीनां लिङ्गमेव प्रकृतिवत् । हरीतक्याः फलानि हरीतक्यः । इतिप्राग्दीव्यतीयाः ॥

प्राग्वहतेष्ठक् ।४।४।१। तद्वहतीत्यतः प्राग् ठगधिक्रियते । तदाहेति ( माशब्दादिभ्यउपसंख्यानम् ) । माशब्दः कारोति य आह

१. प्लक्ष, न्यग्रोध इङ्गुदी, अश्वत्थ, शिग्रु, रुरु, कक्षतु, बृहती, इतिप्लक्षादिः ॥ २ हरीतकी, कोशातकी, नखरञ्जनी, शष्कण्डी, दाडी, दोडी, श्वेतपाकी, अर्जुनपाकी, द्राक्षा, काला, ध्वांक्षा, गर्भीका, कण्टकारिका, पिप्पली, चिञ्चा, शेफालिका, इति हरितक्यादिः ॥ ३ माशब्द, नित्यशब्द, कार्यशब्द, इति माशब्दादिः ॥

स माशब्दिकः। ( अहौ प्रभूतादिभ्यः ) । प्रभूतमाह प्राभूतिकः । पार्याप्तिकः। ( पृच्छतौ सुस्नातादिभ्यः )। सुस्नातं पृच्छति सौस्नातिकः। सौखशायनिकः। अनुशतिकादिः । ( गच्छतौ परदारादिभ्यः )। पारदारिकः। गौरुतल्पिकः। **तेन दीव्यति खनति जयति जितम्** ।४।४।२। अक्षैर्दीव्यति नखनति जयति जितं वा आक्षिकः **संस्कृतम्** ।४।४।३। दध्ना संस्कृतं दाधिकम्। मारिचिकम् । **तरति**। ४।४।५। उडुपेन तरति । औडुपिकः । **गोपुच्छाट्ठञ्** ।४।४।६। गौपुच्छिकः। **नौद्व्यचष्ठन्** ।४।४।७। नाविकः। घटिकः । **चरति**। ४।४।८। हस्तिना चरति हास्तिकः। दध्ना चरति दाधिकः । शकटेन चरति शाकटिकः। **पर्पादिभ्यःष्ठन्** ।४।४।१०। पर्पेण चरति पर्पिकः। येन पीठेन पंगवश्चरन्ति स पर्पः। आश्विकः। रथिकः। **श्वगणाट्ठञ्च** ।४।४।११। चात्ष्ठन्। **श्वादेरिञि** ।७।३।८। ऐच् न। श्वाभस्त्रिः (इकारादावितिवाच्यम् )। श्वगणेन चरति श्वागणिकः । श्वगणिकः। **वेतनादिभ्यो जीवति** ।४।४।१२। वेतनेन जीवति वैतनिकः। धानुष्कः। **हरत्युत्सङ्गादिभ्यः** ।४।४।१५। उ-

---

१ प्रभूत, पर्याप्त, इति प्रभूतादिः ।। २ सुस्नात, सुखरात्रि, सुखशयन, इति सुस्नातादिः। ३ परदार, गुरुतल्प, इति परदारादिः ।। एते चत्वारोऽप्याकृतिगणाः ।। ४ पर्प, अश्व, अश्वत्थ, रथ, जाल, व्याल, न्यास, पादा, पञ्च, इति पर्पादिः ।। ५ वेतन, वाहन, अर्धवाहन, धनुष्, दण्ड, जाल, वेश, उपवेश, प्रेषण, उपवस्ति, सुख, शय्या, शक्ति उपनिषत्, उपदेश, स्फिच्, पाद, उपस्थ, उपस्थान, उपहस्त, इति वेतनादिः।

त्संगेन हरति औत्संगिकः । **भस्त्रादिभ्यष्ठन् ।४।४।१६।** भस्त्रया हरति भस्त्रिकः । षित्वाद्भस्त्रिकी । **विभाषा विवधात्।४।४।१७।** ष्ठन् पक्षे ठक् । विवधेन हरति विवधिकः । एकदेशविकृतत्वाद्वीवधादपि । वैवधिकः । विवधवीवधशब्दौ उभयतोबद्धशिक्ये स्कन्ध बाह्ये काष्ठे वर्त्तेते । **निर्वृत्तेक्षद्यूतादिभ्यः ।४।४।१९।** अक्षद्यूतेन निर्वृत्तं आक्षद्यूतिकं वैरम् । **संसृष्टे ।४।४।२।** दध्ना संसृष्टं दाधिकम् । **लवणाल्लुक् ४।४।२४।** लवणेन संसृष्टो लवणः सूपः । **मुद्गादण् ।४।४।२५।** मौद्गओदनः । **उञ्छति ।४।४।३२।** बदराण्युञ्छति बादरिकः । **रक्षति ।४।३३।** समाजं रक्षति सामाजिकः । **शब्ददर्दुरं करोति ।४।४।३४।** शब्दं करोति शाब्दिकः । दार्दुरिकः । **पक्षिमत्स्यमृगान् हन्ति। ।४।४।३५।** स्वरूपस्य पर्यायाणां विशेषाणां च ग्रहणम् । मत्स्यपर्यायेषु मीनस्यैव । पक्षिणो हन्ति पाक्षिकः शाकुनिकः । मायूरिकः । मात्सिकः । मैनिकः । शाकुलिकः । मार्गिकः । हारिणिकः । सारङ्गिकः । **धर्मं चरति ।४।४।४१।** धार्मिकः । ( अधर्माच्चेतिवक्तव्यम् ) । आधर्मिकः । **तदस्य पण्यम् ४।४।५१।** अपूपाः पण्यमस्य आपूपिकः । **लवणाट्ठञ् ।४।४।५३।** लावणिकः । **शिल्पम् ४।४।५५।** मृदङ्गवादनं शिल्पमस्य मार्दङ्गिकः । **प्रहरणम् ४।४। ५७।** असिः प्रहरणमस्य आसिकः । धानुष्कः । **शक्तियष्ट्योरीक**

---

१. भस्त्रा, भरट, भरण, शीर्षभार, अंसभार, अंसेभार, इति भस्त्रादिः ॥
२. अक्षद्यूत, जानुप्रहृत, जङ्घाप्रहृत, जङ्घाप्रहत, पादस्वेदन, कण्टकमर्दन, गतागत, गतागत, यातोपयात, अनुगत, इत्यक्षद्यूतादिः ॥

क् ।४।४।५९। शाक्तीकः । याष्टीकः । **अस्ति नास्ति दिष्टं मतिः ।** ४।४।६०। अस्ति परलोक इत्येवं मतिर्यस्य स आस्तिकः । नास्तीति मतिर्यस्य स नास्तिकः । दिष्टमिति मतिर्यस्य दैष्टिकः । **शीलम्** ।४।४।६१।अपूपभक्षणं शीलं यस्यस आपूपिकः । **छत्रादिभ्योणः** ४।४।६२। गुरोर्दोषाणामावरणं छत्रं तच्छीलमस्येति छात्रः । **तत्रनियुक्तः** ।४।४।६९। आकारे नियुक्तः आकरिकः । **निकटे वसति** ।४।४।७३। नैकटिको भिक्षुः । **इति ठगधिकारः ॥**

**प्राग्घिताद्यत्** ।४।४।७५। तस्मैहितमित्यतःप्राग्यदधिक्रियते । **तद्वहति रथयुगप्रासङ्गम्** ।४।४।७६। रथं वहति रथ्यः । युग्यः । प्रासङ्ग्यः । **धुरो यड्ढकौ** ।४।४।७७। धुर्यः । धौरेयः । **हलसीराट्ठक्** ।४।४।८१। हलं वहति हालिकः । सैरिकः । **विध्यत्यधनुषा**। ४।४।८३। द्वितीयान्ताद्विध्यतीत्यर्थे यत्नचेत्तत्र धनुष्करणम् । पादौ विध्यन्ति पद्याः । शर्कराः । **नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसंमितेषु** ४।४।९१। नावातार्यं नाव्यं जलम् । वयसा तुल्यो वयस्यः । धर्मेण प्राप्यं धर्म्यम् । विषेण वध्यो विष्यः । मूलेन । आनाम्यं मूल्यम् । मूलेन समो मूल्यः । सीतया संमितं सीत्यं क्षेत्रम् । तुलया संमितं तुल्यम् । **तत्र साधुः**।४।४।

१ छत्र, शिक्षा, प्ररोह, स्था, बुभुक्षा, चुरा, तितिक्षा, उपस्थान, कृषि, कर्मन्, विश्वधा, तपस, सत्य, अनृत, विशिखा, विशिका, भक्षा, उदस्थान, पुरोडा, विक्षा, चुक्षा, मन्द्र, इति छत्रादिः ॥

९८। सामसु साधुः सामन्यः। अध्यः। कर्मण्यः। शरण्यः। **सभाया यः** ।४।४।१०५। सभ्यः। इतियतोवधिः।

**प्राक्क्रीताच्छः** ।५।१।१। तेन क्रीतमित्यतः प्राग् छोधिक्रीयते। **उगवादिभ्योयत्** ।५।१।२। प्राक्क्रीतादित्येव। उवर्णान्ताद्गवादिभ्यश्च यत् स्याच्छस्यापवादः। (नाभि नभं च)। नभ्योक्षः। नभ्यमञ्जनम्। रथनाभावेवेदम्। (शुनः संप्रसारणं वा चदीर्घत्वम्)। शुन्यम्। शून्यम्। (ऊधसोनङ्च)। ऊधन्यः। **कम्बलाच्च संज्ञायाम्** ।५।१।३। यत्। कंबल्यम्। ऊर्णापलशतम्। संज्ञायां किम्। कंबलीया ऊर्णा। **विभाषाहविरपूपादिभ्यः** ।५।१।४। आमिक्ष्यं दधि। आमिक्षीयम्। पुरोडाश्यास्तण्डुलाः। पुरोडाशीयाः। अपूप्यम्। अपूपीयम्। **तस्मै हितम्** ।५।१।५। वत्सेभ्यो हितो वत्सीयो गोधुक्। शङ्कव्यं दारु। गव्यम्। हविष्यम्। **शरीरावयवाद्यत्** ।५।१।६। दन्त्यम्। कण्ठ्यम्। नस्यम्। **अजाविभ्यां थ्यन्** ।५।१।८। अजथ्यायूथिः। अविथ्या। **आत्मन्विश्वजनभोगोत्तरपदात्खः** ।५।१।९। आत्मा

---

१ गो, हविस्, अक्षर, विष, बर्हिस्, अष्टका, स्वदा, युग, मेधा, स्रुच्, नाभिनभंच, शुनःसंप्रसारणं वाच दीर्घत्वतत्संनियोगेनचान्तोदात्तत्वम्, ऊधसोऽनङ्च, कूप, खद, दर, खर, असुर, अध्वन्, क्षर, वेद, बीज, दीप्त, इति गवादिः ॥

२ अपूप, तण्डुल, अभ्यूष, अभ्योष, अवोष, अभ्येष, पृथुक, ओदन, सूप, पूप, किण्व, प्रदीप, मुसल, कटक, कर्णवेष्टक, इर्गल, अर्गल, अन्नविकारेभ्यश्च, यूप, स्थूणा, दीप, अश्व, पत्र, इत्यपूपादिः ॥

ध्वानौ खे ।६।४।१६९। प्रकृत्या स्तः । आत्मने हितम् । आत्मनीनम् । विश्वजनीनम् । कर्मधारयादृवेष्यते । अन्यत्र विश्वजनीयम् । पञ्चजनादुपसंख्यानम् । पञ्चजनीनम् । 'कुमति च' इति णः। मातृभोगीणः । ( आचार्यादणत्वं च ) । आचार्यभोगीनः ॥ इति छयतोः पूर्णोऽवधिः ।

**प्राग्वतेष्ठञ्** ।५।१।१८। तेन तुल्यमित्यतः प्राक् ठञधिक्रियते। **आर्हादगोपुच्छसंख्यापरिमाणाट्ठक्** ।५।१।१९। तदर्हतीत्येतदभिव्याप्य ठञधिकारमध्ये ठञोऽपवादष्ठगधिक्रियते गोपुच्छादीन्वर्जयित्वा । **असमासेनिष्कादिभ्यः** ।५।१।२०। आर्हादित्येतत्तेन क्रीतमिति यावदनुवर्त्तते । निष्कादिभ्योऽसमासे ठगार्हीयेष्वर्थेषु । निष्केण क्रीतमितिनैष्किकम् । समासे तु ठञ् । **परिमाणान्तस्यासंज्ञाशाणयोः** ।७।३।१७। उत्तरपदवृद्धिर्ञिदादौ । परमनैष्किकम् । **शताच्चठन्यतावशते** ।५।१।२१। शत्यं शतिकम् । अशतेकिम् । **संख्याया अतिशदन्तायाः कन्** ।५।१।२२। आर्हीयेर्थे । शतं परिमाणमस्य शतकः संघः। बहुकः । त्यन्तायास्तु साप्ततिकः । शदन्तायाः । चात्वरिंशत्कः । **वतोरिड्वा** ।५।१।२३। तत्वन्तात्कन् इड् वा । तावत्कः । तावतिकः । **कंसाट्टिठन्** ।५।१।२५। कंसिकः । अर्द्धाच्च । अर्द्धिकः । **अध्यर्द्धपूर्वद्विगोर्लुगसंज्ञायाम्** ।५।१।२८। अध्यर्द्धपूर्वाद्द्विगोश्च परस्यार्हीयस्य लुक् । अध्यर्द्धकम । संज्ञायां तु । पाञ्चकपा-

१ निष्क, पण पाद, माष, वाड, द्रोण, षष्टि, इति निष्कादिः ॥

त्तिकम् । **तेन क्रीतम्** ।५।१।३७। ठञ् । गोपुच्छेन क्रीतं गौपुच्छिकम् । साप्ततिकं । ठक् । नैष्किकम् । **तस्येश्वरः** ।५।१।४२। सर्वभूमिपृथिवीभ्यामणञौ स्तः । अनुशतिकादीनां चेति वृद्धिः सर्वभूमेरीश्वरः **सार्वभौमः** । पार्थिवः । **तदस्य परिमाणम्** ।५।१।५७। प्रस्थः परिमाणमस्य प्रास्थिको राशिः । स्तोमेडविधिः । पञ्चदशमन्त्राः परिमाणमस्य पञ्चदशः । सप्तदशः । सोमयागेषु छन्दोगैः क्रियमाणा पृष्ठ्यादिसंज्ञिका स्तुतिः स्तोमः । **पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पंचाशत्षष्टिसप्तत्यशीतिनवतिशतम्** ।५।१।५९। एते रूढिशब्दा निपात्यन्ते । **तदर्हति** ।५।१।६३। श्वेतच्छत्रमर्हति श्वेतच्छत्रिकः । **दण्डादिभ्योयत्** ।५।१।६६। एभ्यो यत् । दण्डमर्हति दण्ड्यः । अर्घ्यः । वध्यः । **तेननिर्वृत्तम्** ।५।१।७९। अन्हानिर्वृत्तमाह्निकम् ॥ **इति ठञ्ठकोरवधिः** ॥

**तेन तुल्यं क्रियाचेद्वतिः**।५।१।११५। ब्राह्मणेन तुल्यं ब्राह्मणवत् । अधीते । क्रियाचेत् किम् । गुणतुल्ये माभूत् । पुत्रेण तुल्यः स्थूलः । **तत्र तस्येव** ५।१।११६। मथुरायामिव मथुरावत्स्रुघ्ने प्राकारः । चैत्रस्येव चैत्रवत् मैत्रस्य गावः । **तस्य भावस्त्वतलौ** ।५।२।११९। प्रकृतिजन्यबोधे प्रकारोभावः । गोर्भावः गोत्वम् । गोता । त्वान्तं क्लीबम् । तलन्तं स्त्रियाम् । **आ च त्वात्** ।५।१।१२०। ब्राह्मणस्त्व इत्यतः प्राक् त्वतलावधिक्रियेते । अपवादैः सह समा-

१. दण्ड, मुसल, मधुपर्क, कशा, अर्घ, मेघ, मधा, सुवर्ण, उदक, वध, युग, गुहा, भाग, इभ, भङ्ग, इति दण्डादिः ॥

वेशार्थमिदम् । चकारोनञ्स्नञ्भ्यामपि समावेशार्थः । स्त्रियाभावः स्त्रैणम् । स्त्रीत्वम् । स्त्रीता । पौंस्नम् । पुंस्त्वम् । पुंस्ता । **पृथ्वादिभ्य[1] इमनिज्वा ।५।१।१२२।** वा वचनमणादिसमावेशार्थम् । **रऋतोह-लादेर्लघोः ।६।४।१६०।** इष्टेमेयस्सु । **टेः ।६।४।१५५।** लोप इष्टेमेयस्सु । पृथुमृदुभृशकृशदृढपरिवृढानामेव रत्वम् । पृथोर्भावः । प्रथिमा । पार्थवम् । म्रदिमा मार्दवम् । **वर्णदृढादिभ्यः[2] ष्यञ् ।५।१।१२३।** चादिमनिच् । शौक्ल्यम् । शुक्लिमा । दार्ढ्यम् । द्रढिमा । **गुणवचनब्राह्मणादिभ्यः[3] कर्मणि च ।५।१।१२४।** चाद्भावे । जडस्यभावः कर्म वा जाड्यम् । ब्राह्मण्यम् । आकृतिगणोयम् । ( चतुर्वर्णादीनां[4] स्वार्थे उपसङ्ख्यानम्) । चातुर्वर्ण्यम् । चातुराश्रम्यम् । त्रै-

---

१ पृथु, मृदु, महत्, पटु, तनु, लघु, बहु, साधु, आशु, उरु, गुरु, बहुल, खण्ड, दण्ड, चण्ड, अकिंचन, बाल, वत्स, होड, पाक, मन्द, स्वादु, ह्रस्व, दीर्घ, प्रिय, वृष, ऋतु, क्षिप्र, क्षुद्र, अणु, इति **पृथ्वादिः** ॥ २ दृढ, वृढ, परिवृढ, भृश, कृश,,वक्र,वक्र, शुक्र, चक्र, आम्र, कृष्ट,लवण, ताम्र,शीत,उष्ण,जड, बधिर,पण्डित, मधुर, मूर्ख, मूक, स्थिर, वेर्यात लातमतिर्मन,शारदानाम्।समोमतिमनसोः, जवन, **इति दृढादिः** ॥ ३ ब्राह्मण, वाडव, माणव, अर्हतोनुम्च, चोर, धूर्त, आराधय, विराधय, अपराधय, उपराधय, एकभाव, द्विभाव, त्रिभाव, अन्यभाव, अक्षत्रज्ञ, संवादिन् संवेषिन्, संभाषिन्, शीर्षघातिन्, विघातिन्, समस्थ, विषमस्थ, परमस्थ, अनीश्वर, कुशल, चपल, निपुण, पिशुन, कुतूहल, क्षेत्रज्ञ, निश्च, बालिश, आलस, दुःपुरुष, कापुरुष, राजन्, गणपति, अधिपति, गडुल, दायाद, विशस्ति, विषम विपात, निपात, सर्ववेदादिभ्यः स्वार्थे, चतुर्वेदस्योभयपदवृद्धिश्च, शौटीर, **ब्राह्मणादिराकृतिगणः** । तेन औचित्यमित्यादि सिद्धम् ॥ ४ चतुर्वर्ण, चतुराश्रम, सर्वविद्य, त्रिलोक, त्रिस्वर, षड्गुण, सेना, अनन्तर संनिधि, समीप, उपमा, सुख, तदर्थ, इतिह, मणिक, **इति चतुर्वर्णादिः** ॥

वर्ग्यम् । षाड्गुण्यम् । सैन्यम् । सान्निध्यम् । औपम्यम् । त्रैलोक्यमित्यादि । **स्तेनाद्यन्नलोपश्च** ।५।१।१२५। नेति सङ्घातग्रहणम् । स्तेनस्य भावः कर्म वा स्तेयम् । **सख्युर्यः** ।५।१।१२६। सख्यम् । **कपिज्ञात्योर्ढक्** ।५।१।१२७। कापेयम् । ज्ञातेयम् । **पत्यन्तपुरोहितादिभ्यो यक्** ।५।१।१२८। सैनापत्यम् । पौरोहित्यम् । ( **राजाऽसमासे**) । राजन् शब्दोऽसमासे यकं लभत इत्यर्थः। राज्ञो भावः कर्म वा राज्यम् । समासे तु ब्राह्मणादित्वात् ष्यञ् । अधिराज्यम् । **प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ्** ।५।१।१२९।प्राणभृज्जातिः।आश्वम् । वयोवचनम् । कौमारम् । औद्गात्रम् । औन्नेत्रम् । सौष्ठवम् । **हायनान्तयुवादिभ्योऽण्** ।५।१।१३०। द्वैहायनम् त्रैहायनम् । यौ-

---

१ पुरोहित, राजा, से, ग्रामिक, पिण्डिक, सुहित, बाल, मन्द, खण्डिक दण्डिक, वर्मिक, कार्मिक, धर्मिक, शिलिक, सूतिक, मूलिक, तिलक, अञ्जलिक, अञ्जनिक, ऋषिक, पुत्रिक, अविक, छत्रिक, पर्षिक, पथिक, चर्मिक प्रतिक, सारथि, आस्तिक, सूचिक, संरक्ष, सूचक, नास्तिक, अजानिक, शाक्वर, नागर, चूडिक, इति पुरोहितादिः ॥ २ उद्गातृ, उन्नेतृ, प्रतिहर्तृ, प्रशास्तृ, होतृ, पोतृ, पो, हर्तृ, रथगणक, पत्तिगणक, सुष्ठु, दुष्ठु, अध्वर्यु, वधु, सुभग, मन्त्र, इत्युद्गात्रादिः ॥ ७ युवन्, स्थविर, होतृ यजमान, पुरुषोऽसे, भ्रातृ, कुतुक, श्रवण, कटुक, कमण्डलु, कुस्त्री, सुस्त्री, दुस्त्री, सुहृदय, दुर्हृदय, सुहृद्, दुर्हृत्, सुभ्रातृ, दुर्भ्रातृ, वृषल, परिव्राजक, सब्रह्मचारिन्, अनृशंस, हृदयासे, कुशल, चपल, निपुण, पिशुन, कुतूहल, क्षेत्रज्ञ, श्रोत्रियस्ययलोपश्च, इतियुवादिः ॥

त्रनम् । स्थविरम् । ( श्रोत्रियस्य यलोपश्च ) । श्रौत्रम् । कुशलनिपुणचपलपिशुनकुतूहलक्षेत्रज्ञाः युवादिषु ब्राह्मणादिषु च पठ्यन्ते । कौशल्यम् । कौशलमित्यादि । **इगन्ताच्च लघुपूर्वात्** ।५।१।१३१। शुचेर्भावः कर्म वा शौचम् । मौनम् । **योपधाद्गुरूपोत्तमाद्वुञ्** ।५।१।१३२। रामणीयकम् । आभिधानीयकम् । ( सहायाद्वा ) साहाय्यम् । साहायकम् । **द्वन्द्वमनोज्ञादिभ्यश्च** ।५।२।१३२। शैष्योपाध्यायिका । मनोज्ञकम् ॥ इति नञ्स्नञोरवधिः ॥

**धान्यानां भवने क्षेत्रे खञ्** ।५।२।१। मुद्गानां भवनं क्षेत्रं मौद्गीनम् । **व्रीहिशाल्योर्ढक्** ।५।२।२। व्रैहेयम् । शालेयम् । **यवयवकषष्टिकाद्यत्** ।५।२।३। यव्यम् । यवक्यम् । षष्टिक्यम् । **विभाषा तिलमाषोमाभंगाणुभ्यः** ।५।२।४।यत् । पक्षे खञ् । तिल्यम् । तैलीनम् । माष्यम् । माषीणम् । उम्यम् । औमीनम् । भङ्ग्यम् । भाङ्गीनम् ।अणव्यम् । आणवीनम् । **तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति** ।५।२।७। सर्वादेः पथ्याद्यन्तात् द्वितीयान्तात्खः । सर्वपथान्व्याप्नोति सर्वपथीनः । सर्वाङ्गीणः । सर्वकर्मीणः । सर्वपत्रीणः । सर्वपात्रीणः । **हैयङ्गवीनं संज्ञायाम्** ।५।२।२३। नवनीते निपातोयम् । **तस्य पाकमूलेपील्वा**

---

१ मनोज्ञ, प्रियरूप, अभिरूप, मेधाविन, आढ्य, कुलपुत्र, छांदस्, छात्र, श्रोत्रिय, चोर, धूर्त, विश्वदेव, युवन्, कुपुत्र, ग्रामकुलाल, ग्रामषण्ड, ग्रामकुमार, सुकुमार, बहुल, अवरपुत्र, अमुष्यपुत्र, अमुष्यकुल, सारपत्र शतपुत्र इतिमनोज्ञादिः॥ २पीलु, कर्कन्धु, शमी, करीर, कुवलय, बदर, अश्वत्थ, खदिर, इति पील्वादिः ॥

**द्विकर्णादिभ्यः कुणप्जाहचौ** ।५।२।२४। पीलूनां पाकः पीलुकुणः । कर्णस्यमूलं कर्णजाहम् । **पक्षात्तिः**।५।२।२५। मूले इत्यनुवर्त्तते । पक्षस्य मूलं पक्षतिः । **तेनवित्तश्चुञ्चुप्चणपौ** ।५।२।२६। यकारः प्रत्यययोरादौ लुप्तनिर्दिष्टः । तेन चस्य नेत्वम् । विद्ययावित्तो विद्याचुञ्चुः । विद्याचणः । **वेः शालच् शंकटचौ**।५।२।२८।क्रियाविशिष्टसाधनवाचकात्स्वार्थे । विस्तृतं विशालम् । विशंकटम् । **सम्प्रोदश्च कटच्** ।५।२।२९। सङ्कटम् । प्रकटम् । उत्कटम् । चाद्विकटम् । ( अलाबूतिलोमाभङ्गाभ्योरजस्युपसंख्यानम् ) । अलाबूनां रजोऽलाबूकटम् । तिलकटम् । ( गोष्ठजादयः स्थानादिषु पशूनामभ्यः ) । गवां स्थानं गोगोष्ठम् । ( सङ्घाते कटच् ) । अवीनां संघातोऽविकटः । ( विस्तारे पटच् ) । अविपटः । ( द्वित्वे गोयुगच् ) । द्वावुष्ट्रौ उष्ट्रगोयुगम् । ( षट्त्वे षड्गवच् ) । अश्वषड्गवम् । ( स्नेहे तैलच् ) । तिलतैलम् । सर्षपतैलम् । **अवात्कुटारच्च** ।६।२।३०। चात्कटच् । अवकुटारः । अवकटः । **नते नासिकायाः संज्ञायां टीटच् नाटच् भ्रटचः**।५।२।३१। अवादित्येव । नतं नमनम् । नासिकाया नतम् । अवटीटम् । अवनाटम् । अवभ्रटम् । तद्योगान्नासिकावटीटा । पुरुषोऽटवीटः । **उपाधिभ्यांत्यकन्नासन्नारूढयोः** ।५।२।३४। पर्वतस्यासन्नं स्थलं उपत्यका । आरूढं स्थलमधित्यका । **कर्मणि घटोठच्** ।५।२।३५।

---

१ कर्ण, अक्षि, नख, मुख, केश, पाद, गुल्फ, भ्रू, शृङ्ग, दन्त, ओष्ठ, पृष्ठ, इति कर्णादिः ॥

कर्मणि घटते कर्मठः । **तदस्य संजातं तारकादिभ्य इतच्** ।५।२।३६ तारकाः संजाता अस्य तारकितं नभः । पण्डितः । आकृतिगणोऽयम् । **प्रमाणे द्वयसज्दघ्नञ्मात्रचः** ।५।२।३७। ऊरू प्रमाणमस्य ऊरुद्वयसम् । ऊरुदघ्नम् । ऊरुमात्रम् । 'प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ मम । ऊर्ध्वमानङ्किलोन्मानम्परिमाणं तु सर्वतः' । **पुरुषहस्तिभ्यामण् च** ।५।२।३८। पुरुषः प्रमाणमस्य पौरुषम् । पुरुषद्वयसम् । हास्तिनम् । हस्तिद्वयसम् । **यत्तदेतेभ्यः परिमाणे वतुप्** ।५।२।३९। यत्परिमाणमस्य यावान् । तावान् । एतावान् । **किमिदंभ्यां वो घः** ।५।२।४०। आभ्यां वतुब्वस्य च घः । **इदंकिमोरीश्की** ।६।३।९०। दृग्दृशवतुषु । कियान् । **किमः संख्यापरिमाणे डति च** ।५।२।४१। चाद्वतुप् । तस्य च घः । का संख्या येषां ते कति । कियन्तः । **संख्याया अवयवे तयप्** ।५।२।४२। पञ्च अवयवा अस्य पञ्चतयम् । **द्वित्रिभ्यां तयस्यायज्वा** ।५।२।४३। द्वयम् । द्वितयम् । त्रित-

---

१ तारका, पुष्प, कर्णक, मञ्जरी, ऋजीष, क्षण, सूत्र, निष्क्रमण, पुरीष, उच्चार, प्रचार, विचार, कुण्डल, कण्टक, मुसल, कुसुम, कुतूहल, स्तबक, किसलय, पल्लव, खण्ड, वेग, निद्रा, मुद्रा, बुभुक्षा, धेनुष्या, पिपासा, श्रद्धा, अभ्र, पुलक, अङ्गारक, वर्णक, द्रोह, दोह, सुख, दुःख, उत्कण्ठा, भर, व्याधि, वर्मन्, व्रण, गौरव, शास्त्र, तरङ्ग, तिलक, चन्द्रक, अन्धकार, गर्व, मुकुर, हर्ष, उत्कर्ष, रण, कुवलय, गर्ध, क्षुध्, सीमन्त, ज्वर, गर, रोग, रोमाञ्च, पण्डा, कज्जल, तृष्, कोरक, कल्लोल, स्थपुट, फल, कञ्चुक, शृङ्गार, अङ्कुर, शैवल, बकुल, श्वभ्र, अराल, कलङ्क, कर्दम, कन्दल, मूर्छा, अङ्गार, हस्तक, प्रतिबिम्ब, विघ्नतन्त्र, प्रत्यय, दीक्षा, गर्ज, गर्भादप्राणिनी ॥ इति तारकादिराकृतिगणः ॥

यम् । त्रयम् । **उभादुदात्तो नित्यम्** ।५।२।४४। उभशब्दात्तयपोऽयच् स्यात् सचाद्युदात्तः । उभयम् । **तदस्मिन्नधिकमितिदशान्ताड्डः** ।५।२।४५। एकादश अधिका अस्मिन्नेकादशम् । शतसहस्रयोरेव । नेह एकादशाऽधिका अस्यां विंशत्याम् । 'प्रकृतिप्रत्ययार्थयोः समानजातीयत्व एवेष्यते' । नेह एकादश माषा अधिका अस्मिन् सुवर्णशते । **शदन्तविंशतेश्च** ।५।२।४६। डः स्यादुक्तेर्थे । त्रिंशदधिका अस्मिन्त्रिंशतम् । विंशम् । **तस्य पूरणे डट्** ।५।२।४८। संख्याया इत्येव । एकादशानां पूरण एकादशः । **नान्तादसंख्यादेर्मट्** ।५।२।४९। डटो मडागमः । पञ्चानां पूरणः पञ्चमः । नान्तात्किम् । विंशः । असंख्यादेः किम् । एकादशः । **षट्कति कतिपयचतुरांथुक्** ।५।२।५१। डटि । षण्णां पूरणः षष्ठः । कतिथः । कतिपयशब्दस्यासंख्यात्वेपि अत एव ज्ञापकात् डट् । कतिपयथः । चतुर्थः । ( चतुरश्छयतावाद्यक्षरलोपश्च ) । तुरीयः । तुर्यः । **बहुपूगगणसंघस्य तिथुक्** ।५।२।५२। डटि । बहुतिथः । **वतोरिथुक्** ।५।२।५३। डटि । यावतिथः । **द्वेस्तीयः** ।५।२।५४। डटोऽपवादः । द्वयोः पूरणो द्वितीयः । **त्रेः संप्रसारणं च** ।५।२।५५। तृतीयः । इह 'हल' इति दीर्घो न । द्वितीयतृतीयेति निर्देशात् । **विंशत्यादिभ्यस्तमडन्यतरस्याम्** ।५।२।५६। डटः । विंशतितमः । विंशः । एकविंशतितमः । एकविंशः । **नित्यं शतादिमासार्द्धमाससंवत्सराच्च** ।५।२।५७। शतस्य पूरणः शततमः । मा-

---

१. ( डट् स्तोमे वक्तव्यः ) पञ्चदशः स्तोमः । ( शन्शतोर्डिनिः ) । त्रिंशिनो मासाः । पञ्चदशिनोऽर्धमासाः । ( विंशतेश्च ) विंशिनोऽङ्गिरसः ॥

सादेरतएव ज्ञापकात् डट् । मासतमः । **षष्ठ्यादेश्चासंख्यादेः ।५।२।५८।** षष्टितमः । संख्यादेस्तु विंशत्यादिभ्य इति विकल्प एव । एकषष्टः । एकषष्टितमः । **मतौ छः सूक्तसाम्नोः ।५।२।५९।** मत्वर्थे । अच्छावाक् शब्दोऽस्त्यस्मिन्नच्छावाकीयं सूक्तम् । वारवन्तीयं साम । **श्रोत्रियंश्छन्दोऽधीते ।५।२।८४।** श्रोत्रियः । वेत्यनुवृत्तेः । छान्दसः । **श्राद्धमनेन भुक्तमिनिठनौ ।५।२।८५।** श्राद्धी । श्राद्धिकः । **पूर्वादिनिः ।५।२।८६।** पूर्वंकृतमनेन पूर्वी । **सपूर्वाच्च ।५।२।८७।** कृतपूर्वी । **इष्टादिभ्यश्च ।५।२।८८।** इष्टमनेनेष्टी । अधीती । **अनुपद्यन्वेष्टा ।५।२।९०।** अनुपदमन्वेष्टा अनुपदी गवाम् । **साक्षाद्द्रष्टरि संज्ञायाम् ।५।२।९१।** साक्षाद्द्रष्टा साक्षी । **तदस्यास्त्यस्मिन्निति मतुप् ।५।२।९४।** गावोस्यास्मिन्वा सन्ति गोमान् । **तसौमत्वर्थे ।१।४।१९।** तान्तसान्तौ भसंज्ञौ स्तो मत्वर्थे प्रत्यये परे । संप्रसारणम् । विदुष्मान् । गुणवचनेभ्यो मतुपो लुगिष्टः । शुक्लोगुणोऽस्यास्ति शुक्लः पटः । कृष्णः । **प्राणिस्थादातोलजन्यतरस्याम् ।५।२।९६।** चूडालः । चूडावान् । प्राणिस्थात्किम् । शिखावान्दीपः । प्राण्यङ्गादेव ।

---

१ इष्ट, पूर्त, उपसादित, निगदित, परिगदित, परिवादित, निकथित, निषादित, निपठित, संकलित, परिकलित, संरक्षित,परिरक्षित, आर्चित, गणित, अवकीर्ण, आयुक्त, गृहीत, आम्नात, श्रुत, अधीत, अवधान, आसेवित, अवधारित, अवकल्पित, निराकृत, उपाकृत, अनुयुक्त, अनुगणित, अनुपठित, व्याकुलित, इतीष्टादिः ॥

नेह मेधावान् । **सिध्मादिभ्यश्च** ।५।२।९७। लज्वा । सिध्मलः । सिध्मवान् । ( वातदन्तबलललाटानामूङ्च ) । वातूलः । दन्तूलः । बलूलः । ललाटूलः । **वत्सांसाभ्यां कामबले** ।५।२।९८। लज्वा यथासंख्यं कामवति बलवति चार्थे । वत्सलः । अंसलः । **फेनादिलच्च** ।५।२।९९। चाल्लच् । अन्यतरस्यां ग्रहणं मतुप्समुच्चयार्थमनुवर्त्तते । फेनिलः । फेनलः । फेनवान् । **लोमादिपामादिपिच्छादिभ्यः शनेलच्** ।५।२।१०१। लोमादिभ्यः शः । लोमशः । लोमवान् । रोमशः । रोमवान् । पामादिभ्यो नः । पामनः । (अङ्गात्कल्याणे) अङ्गना । (लक्ष्म्या अच्च) । लक्ष्मणः । ( पिच्छादिभ्य इलच्) । पिच्छिलः । पिच्छवान् । उरसिलः। उरस्वान् । **प्रज्ञा श्रद्धार्चाभ्यो णः** ।५।२।१०१। प्राज्ञो व्याकरणम् । प्राज्ञा ।श्राद्धः । आर्चः । वृत्तेश्च । वार्त्तः । **तपःसहस्राभ्यां विनीनी**।५।२।।१०२। विनीन्योरिकारो नकारपरित्राणार्थः । तपस्वी । सहस्री।

---

१ सिध्म, गडु, मणि, नाभि, बीज, वीणा, कृष्ण, निष्पाव, पांसु, पार्श्व, पर्शू, हनु, सक्तु, मांस, पार्ष्णिधमन्योर्दीर्घश्च, वातदन्तबलललाटानामूङ्च, जटा, घटा, कटा, कालाः. क्षेपे, पर्ण, उदक, प्रज्ञा, सग्धि, कर्ण, स्नेह, शीत, श्याम, पिङ्ग,पित्त, पुष्क, पृथु, मृदु, मञ्जु, मणु पत्र, चटु, कपि, गण्ड, ग्रन्थि, श्री, कुश, धारा, वर्ष्मन्, श्लेष्मन्, पक्ष्मन्, पेश, विष्पाद, कुण्ड, क्षुद्रजन्तूपतापयोश्च, **इति सिध्मादिः** ।। २ लोमन्, रोमन्, बभ्रु, अरि, गिरि, कर्क, कपि, मुनि, तरु, **इति लोमादिः**।। ३ पामन्, वामन्, वेमन्, हेमन्, श्लेष्मन्, कद्रु, बलि, सामन्, ऊष्मन्, कृमि, अङ्गात्कल्याणे, शाकी पलालीन्दद्रूणां ह्रस्वत्वंच विष्यगित्युत्तरपदलोपश्चाकृतसन्धेः । लक्ष्म्या अच, **इति पामादिः** ।। ४ पिच्छा, उरस्, ध्रुवक, धुवक, जटा, घटा, कालाः, क्षेपे, वर्ण, उदक, पङ्क, प्रज्ञा, **इति पिच्छादिः** ।।

अणूच ।५।२।१०३। तापसः। साहस्रः। (ज्योत्स्नादिभ्य उपसंख्यानम्)। ज्यौत्स्नः। तामिस्रः। सिकताशर्कराभ्यां च ।५।२।१०४ सैकतो घटः। शार्करः। देशेलुबिलचौ च ।५।२।१०५। चादण् मतुप्। सिकताः सन्त्यस्मिन्देशे सिकता। सिकतिलः। सैकतः। सिकतावान्। एवं शर्करेत्यादि। दन्तउन्नत उरच् ।५।२।१०६। उन्नता दन्ता अस्य दन्तुरः। ऊषसुषिमुष्कमधो रः ।५।२।१०७। ऊषरः। सुषिरः। मुष्कोऽण्डः। मुष्करः। मधुरः। (रप्रकरणेखमुखकुञ्जेभ्यउपसंख्यानम्)। खरः मुखरः। कुञ्जो हस्ति हनुः। कुञ्जरः (नगपांसुपाण्डुभ्यश्च)। नगरम्। पांसुरः पाण्डुरः। (कच्छ्वा ह्रस्वत्वं च)। कच्छुरः। द्युद्रुभ्यां मः ।५।२।१०८। द्युमः। द्रुमः। केशाद्वोन्यतरस्याम्।५। २।१०९। प्रकृतेनान्यतरस्यां ग्रहणेन मतुपि सिद्धे पुनर्ग्रहणं इनिठनोः समावेशार्थम्। केशवः। केशी। केशिकः। केशवान्। 'अन्येभ्योपि दृश्यते'। मणिवो नागविशेषः। हिरण्यवो निधिविशेषः। (अर्णसोल्लोपश्च)। अर्णवः। गाण्डयजगात्संज्ञायाम् ।५।२।१०१। ह्रस्वदीर्घयोर्यणातन्त्रेण निर्देशः। गाण्डीवम्। गाण्डिवम्। अर्जुनस्य धनुः। अजगवं पिनाकः। काण्डाण्डादीरन्नीरचौ ।५।२।१११। काण्डीरः। आण्डीरः। रजः कृष्यासुतिपरिषदो वलच् ।५।२।११२। रजस्वला स्त्री। कृषीवलः। वल इति दीर्घः। आसुतीवलः। शौण्डिकः। परिषद्वलः। पर्षदितिपाठान्तरम्। पर्षद्वलः। 'अन्येभ्योपिदृश्यते'

---

१ ज्योत्स्ना, तमिस्रा, कुण्डल, कुतप, विसर्प, विपादिका, इति ज्योत्स्नादिः।

भ्रातृवलः । पुत्रवलः । शत्रुवलः । **दन्तशिखात्संज्ञायाम्** ।५।२।११३। दन्तावलो हस्ती । शिखावलः केकी । **अत इनिठनौ** ।५।२।११५। दण्डी । दण्डिकः । **व्रीह्यादिभ्यश्च** ।५२।११६। व्रीही । व्रीहिकः **तुन्दादिभ्य इलच्च** ।५।२।११७। चादिनिठनौ । मतुप्च । तुन्दिलः । तुन्दी । तुन्दिकः।तुन्दवान् उदर पिचण्ड यव व्रीहि तुन्दादिः। **रूपादाहतप्रशंसयोर्यप्** ।५।२।१२०। आहतं रूपमस्यास्तीति रूप्यः कार्षापणः । प्रशस्तं रूपमस्यास्तीति रूप्यो गौः । 'अन्येभ्योपिदृश्यते' । हिम्याः । पर्वताः । गुण्या ब्राह्मणाः । **अस्मायामेधास्रजोविनिः** ।५।२।१२१। यशस्वी । यशस्वान् । मायावी । मायावान् । व्रीह्यादिपाठान्मायी । मायिकः । स्रग्वी । ( शृङ्गवृन्दाभ्यामारकन् )। शृङ्गारकः । वृन्दारकः । ( फलबर्हाभ्यामिनच् ) । फलिनः । बर्हिणः 'हृदयाच्चालुरन्यतरस्याम्' । हृदयालुः । हृदयी । हृदयिकः । हृदयवान् । ( शीतोष्णतृप्रेभ्यस्तदसहने ) । तं नसहते शीतालुः । उष्णालुः । तृप्रः पुरोडाशस्तन्न सहते तृप्रालुः । ( तप्पवमरुद्भ्याम् ) । पर्वतः । मरुत्तः । ( **ऊर्णाया युस्** ।५।२।१२३। ऊर्णायुः । **वाचोग्मिनिः** ।५।२।१२४। वाग्मी । **आलजाटचौ बहुभाषिणि** ।५।२।१२५। ( कुत्सित इति वक्तव्यम् । ) कुत्सितं बहुभाषते वाचालो वाचाटः । यस्तु । सम्यग्बहुवदति तत्र वाग्मीत्येव । **स्वामिन्नैश्वर्ये** ।५।२।१२६। ऐश्वर्यवाचकात् स्वश-

---

१ व्रीहि, माया, शाला, शिखा, माला, मेखला, केका, अष्टका, पताका, चर्मन्, कर्मन्, दंष्ट्रा, संज्ञा, वडवा, कुमारी, नौ, वीणा, बलाका, यवखद, शीर्षामयः । इति व्रीह्यादिः ॥

न्द्वान्मत्वर्थे आमिनिच् । स्वामी । अर्शआदिभ्योऽच् ।५।२।१२७। अर्शांसि अस्य विद्यन्ते अर्शसः । आकृतिगणोऽयम् । वातातीसाराभ्यां कुक् च ।५।२।१२९। चादिनिः वातकी । अतिसारकी । ( पिशाचाच्च ) । पिशाचकी । हस्ताज्जातौ ।५।२।१३३। हस्ती । वर्णाद्ब्रह्मचारिणि ।५।२।१३४। वर्णी । कंशंभ्यां बभयुस्तितुतयसः ।५।२।१३८। कमित्युदकसुखयोः शमितिसुखे आभ्यां सप्त-प्रत्ययाः स्युः युसूयसोः । सकारः पदत्वार्थः । कंबः । कंभः । कंयुः । कंतिः । कंतुः । कंतः । कंयः । एवं शंब इत्यादि । तुन्दिवलिवटेर्भः ।५।२।१३९। तुंदिभः वलिभः । वटिभः । अहंशुभमोर्युस् ।५।२।१४०। अहंयुः, अहङ्कारवान् । शुभंयुः शुभान्वितः ॥ इतिमत्वर्थीयाः॥

प्राग् दिशो विभक्तिः ।५।३।१४१। दिक्शब्देभ्य इत्यतः प्राग्वक्ष्यमाणाः प्रत्यया विभक्तिसंज्ञाः स्युः । अथस्वार्थिकाः । किं सर्वनामबहुभ्योऽद्व्यादिभ्यः ५।३।२। किमः सर्वनाम्नो बहुशब्दाच्चेति प्राग्दिशोऽधिक्रियते । पञ्चम्यास्तसिल् ।५।३।७। पञ्चम्यन्तेभ्यः क्रिमादिभ्यस्तसिल् वा । कुतिहोः ।७।२।१०४। किमः कुस्तादौ हादौ च विभक्तौ । कुतः । अकस्मात् । इदम इश् ।५।३।३। प्राग्दिशीये । इतः । अन् ।५।३।४। एतदः प्राग्दिशीये । अनेकाल्त्वात्सर्वादेशः । अतः । अमुतः । यतः । ततः । बहुतः । द्व्यादेस्तुद्वाभ्याम् । पर्यभिभ्यां च ।५।३।९। तसिल् ।

---

१ अर्शस्, उरस्, तुन्द, चतुर, पलित, जटा, घटा, घाटा, अभ्र, कर्दम, अम्ल, लवण, स्वाङ्गाद्धीनात्, वर्णा, अर्शआदिराकृतिगणः ॥

परितः सर्वत इत्यर्थः। अभितः। उभयतइत्यर्थः। **सप्तम्यास्त्रल्** ।५।३।१०। कुत्र। यत्र तत्र बहुत्र। **इदमोहः** ।५।३।११। त्रलोपवादः। इह। **किमोऽत्** ।५।३।१२। वा स्यात्। **क्वाति** ।७।२।१०५। किमः। क्व। कुत्र। **इतराभ्योपिदृश्यन्ते** ।५।३।१४। पञ्चमीसप्तमीतरविभक्त्यन्तादपि तसिलादयो दृश्यन्ते। दृशिग्रहणाद्भवदादियोग एव। स भवान्। ततो भवान्। तत्र भवान्। तं भवन्तम्। ततो भवन्तम्। तत्र भवन्तम्। एवं दीर्घायुः। देवानांप्रियः। आयुष्मान्। **सर्वैकान्यत्किंयत्तदः काले दा** ।५।३।१५। सप्तम्यन्तेभ्य एभ्यः कालार्थेभ्यः स्वार्थे दास्यात्। **सर्वस्यसोऽन्यतरस्यां दि** ।५।३।६। दादौ प्राग्दिशीये सर्वस्य सो वा। सर्वस्मिन्। काले। सदा। सर्वदा। एकदा। अन्यदा। कदा। यदा तदा। काले। किम्। सर्वत्र देशे। **इदमोर्हिल्** ।५।३।१६। सप्तम्यन्तात्। **एतेतौ रथोः** ।५।३।४। इदम एत इत् एतौस्तो रेफादौ थकारादौ च प्राग्दिशीये परे। अस्मिन्काले एतर्हि। काले किम्। इह देशे। **अधुना** ।५।३।१७। इदमोनिपातोयम्। **दानीं च** ।५।३।१८। इदमो दानीं प्रत्ययः काले। इदानीम्। **तदो दा च** ।५।३।१९। तदा। तदानीम्। **अनद्यतनेर्हिलन्यतरस्याम्** ।५।२।२०। कर्हि। यर्हि। यदा। तर्हि। तदा। **एतदः** ।५।३।४। एत इत् एतौ स्तोरेफादौ थकारादौ च प्राग्दिशीये। एतस्मिन्काले एतर्हि। **सद्यः परुत्परार्यैषमः परे-**

---

१ अत्र तकारस्येत्संज्ञा 'न विभक्तौ'—इति निषेधस्तु नप्रवर्तते, इदमस्थमुः इत्यत्र थमोनकारपरित्राणार्थेन उकारेण तस्यानित्यत्वज्ञापनात्।

**सद्यःपरुत्परार्यैषमःपरेद्यव्यद्यपूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः ।५।३।२२।** एते निपात्यन्ते । ( द्युश्चोभयाद्वक्तव्यः ) उभयेद्युः **प्रकारवचने थाल् ।५।३।२३।** प्रकारवृत्तिभ्यः किमादिभ्यस्थाल् । तेन प्रकारेण तथा । यथा । **इदमस्थमुः ।५।३।२४।** थालोऽपवादः । ( एतदोपि वाच्यः ) । अनेन एतेनवा प्रकारेण इत्थम् । **किमश्च ।५।३।२५।** केन प्रकारेण कथम् । **इतिप्राग्दिशीयाः ॥**

**दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः ।५।२।२७।** सप्तम्याद्यन्तेभ्यो दिशिरूढेभ्यो दिग्देशकालवृत्तिभ्यः स्वार्थेऽस्तातिः । **पूर्वाधरावराणामसिपुरधवश्चैषाम् ।५।३।३९।** एभ्योऽस्तात्यर्थेऽसिस्तद्योगे चैषां पुर् अध् अव् इत्यादेशास्युः । **अस्ताति च ।५।३।४०।** पूर्वादीनां पुरादयः स्युः । पूर्वस्याम । पूर्वस्याः । पूर्वा वा दिक् । पुरः । पुरस्तात् । अधः । अधस्तात् । अवः । **विभाषा वरस्य ।५।३।४१।** अस्तातौ अव्वा स्यात् । अवस्तात् । अवरस्तात् । एवं देशे काले च । दिशिरूढेभ्यः किम् । ऐन्द्र्यां वसति । सप्तम्याद्यन्तेभ्यः किम् । पूर्वं ग्रामं गतः । दिगादिवृत्तिभ्यः किम् । पूर्वस्मिन् गुरौ वसति । अस्ताति चेति ज्ञापकादसिरस्तातिं न बाधते । **दक्षिणोत्तराभ्यामतसुच् ।५।३।२८।** अस्तातेरपवादः । दक्षिणतः । उत्तरतः । **विभाषा पराव-**

---

१ अत्र निपातनाद्विषयविशेषौ लभ्यते स इत्थम्— ( समानस्य सभावोद्यस् चाहनि ) सद्यः । ( पूर्वपूर्वतरयोः परुदारी चसंवत्सरे ) परुत् परारि । ( इदम इश् समसण्प्रत्ययश्च संवत्सरे ) । ऐषमः । ( परस्मादेद्यव्यहनि ) परेद्यवि । ( इदमोऽश् द्यसूच ) अद्य । ( पूर्वादिभ्योऽष्टाभ्योऽहन्येद्युस् ) पूर्वेद्युः । अन्येद्युः । उभयेद्युः । इति ।

**राभ्याम्** ।५।२।२९। परतः । परस्तात् । अवस्तः । अवस्तात् । **अञ्चेर्लुक्** ।६।३।३०। अञ्चत्यन्ताद्दिक्शब्दादस्तातेर्लुक् स्यात् । प्राक् उदक् । **उपर्युपरिष्टात्** ।५।३।३१। निपातावेतौ । **पश्चात्** ।५।३।३२। तथा । **उत्तराधरदक्षिणादातिः** ।५।२।३४। उत्तरात् । अधरात् । दक्षिणात् । **एनबन्यतरस्यामदूरेऽपञ्चम्याः** । ५।३।३५। उत्तरादिभ्य एनब्वास्यादवध्यवधिमतोः सामीप्ये । पञ्चम्यन्तात्तु न । उत्तरेण। अधरेण । दक्षिणेन । पक्षे यथास्वंप्रत्ययाः । इह केचिद्दिक्शब्दमात्रादेनपमाहुः । पूर्वेण ग्रामम् । **दक्षिणादाच्** ।५।३।३६। अस्तातेर्विषये । दक्षिणावसति । अपञ्चम्या इत्येव । दक्षिणादागतः । **आहि च दूरे**।५।३।३३। चादाच् । दक्षिणाहि । दक्षिणा । **उत्तराच्च** ।५।३।३८। उत्तराहि । उत्तरा । **संख्याया विधार्थे धा** । ।५।३।४२। क्रियाप्रकारे वर्त्तमानात् संख्याशब्दात्स्वार्थे धा स्यात् । चतुर्धा । **एकाद्धो ध्यमुञन्यतरस्याम्** ।५।३।४४। ऐकध्यम् । एकधा । **द्वित्र्योश्च धमुञ्** ।५।३।४५।आभ्यां धा इत्यस्य धमुञ्वा । द्वैधम । द्विधा । त्रैधम् । त्रिधा । **एधाच्च** ।५।३।४६। द्वेधा । त्रेधा । **याप्ये पाशप्** ।५।३।४७। कुत्सितो भिषग्भिषक्पाशः । ( तीयादीकक्स्वार्थे वा वाच्यः ) । द्वैतीयिकः । द्वितीयः । तार्तीयिकः । तृतीयः । ( नविद्यायाः ) । द्वितीया विद्येत्येव । **[1]एकादाकिनिच्चासहाये** ।५।

---

१. असहायवाचिन एकशब्दादाकिनिच् स्यादित्यर्थः । असहाय ग्रहणं संख्याशब्दनिरासार्थम् अन्यथा प्रसिद्धत्वात्संख्या प्रकारणाच तस्यैव ग्रहणं स्यात् ।

।३।५२। चात्कलुकौ । एकः । एकाकी । एककः । भूतपूर्वे चरट् ।५।३।५३। आढ्यो भूतपूर्वः । आढ्यचरः । षष्ठ्या रूप्य च ।५।३।५४। षष्ठ्यन्ताद्भूतपूर्वे रूप्यः स्याच्चरट् च । कृष्णस्य भूतपूर्वो गौः कृष्णरूप्यः कृष्णचरः । अतिशायने तमबिष्ठनौ ।५।३।५५। अतिशयविशिष्टार्थे एतौ स्तः । अयमेषामतिशयेनाढ्य आढ्यतमः । लघुतमो लघिष्ठः। तिङश्च।५।३।५६।तिङन्तादतिशये द्योत्ये तमप् स्यात् । तरप्तमपौ घः ।१।१।२२। किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे ।५।४।११।किम एदन्तात्तिङोऽव्ययाच्च यो घस्तदन्तादामुः स्यान्न तु द्रव्यप्रकर्षे। किन्तमाम् । प्राह्णेतमाम् । प्रगेतमाम् । पचतितमाम् । उच्चैस्तमाम् । द्रव्यप्रकर्षे तु उच्चैस्तमस्तरुः । द्विवचनविभज्योपपदे तरबीयसुनौ ।५।३।५७। द्वयोरेकस्याऽतिशये विभक्तव्ये चोपपदे सुप्तिङन्तादेतौ स्तः पूर्वयोरपवादः । अयमनयोरतिशयेन लघुतरो लघीयान् । उदीच्याः प्राच्येभ्यः पटवः । पटुतराः । पटीयांसः । अजादी गुणवचनादेव ।५।३।५८। इष्ठन्नीयसुनौ । नेह । पाचकतरः। पाचकतमः । प्रशस्यस्य श्रः ।५।३।६०। इष्ठेयसोः परतः । प्रकृत्यैकाच् ।६।४।१६३। इष्ठादिष्वेकाच् प्रकृत्या स्यात् । श्रेष्ठः श्रेयान् । ज्य च ।५।३।६१। प्रशस्यस्य ज्यादेश इष्ठेयसोः । ज्येष्ठः । ज्यादादीयसः ।६।४।१६०। 'आदेः परस्य' । ज्यायान् । वृद्धस्य च ।५।३।६२। ज्यादेश अजाद्योः । ज्येष्ठः । ज्यायान् । अन्तिकबाढयोर्नेदसाधौ ।५।३।६३। अजाद्यो-

रिष्ठेयसोः । नेदिष्ठः । नेदीयात् । साधिष्ठः । साधीयान् । **स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः ।६।४।१५६।** एषां यणादिपरं लुप्यते पूर्वस्य च गुण इष्ठादिषु । स्थविष्ठः । दविष्ठः । यविष्ठः । ह्रसिष्ठः । क्षेपिष्ठः । क्षोदिष्ठः । एवमीयसुन् । ( ह्रस्वक्षिप्रक्षुद्राणां पृथ्वादित्वाद्ध्रसिमा ) । क्षेपिमा । क्षोदिमा । **प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः ।६।४।१५७।** प्रियादीनां प्रादयः स्युरिष्ठादिषु । प्रेष्ठः । स्थेष्ठः । स्फेष्ठः । वरिष्ठः । बंहिष्ठः । गरिष्ठः । वर्षिष्ठः । त्रपिष्ठः । द्राघिष्ठः । वृन्दिष्ठः । एवमीयसुन् । प्रियोरुबहुलगुरुदीर्घाणां पृथ्वादित्वात्प्रेमेत्यादि । **बहोर्लोपो भू च बहोः ।६।४।१५८।** बहोःपरयोरिमेयसोर्लोपः स्याद्बहोश्च भूरादेशः । भूमा । भूयान् । **इष्ठस्य यिट् च ।६।४।१५९।** बहोः परस्य इष्ठस्य लोपो यिडागमश्च । भूयिष्ठः । **विन्मतोर्लुक् ।५।३।६५।** इष्ठेयसोः परतः । अतिशयेन त्वग्वान् त्वचिष्ठः । त्वचीयान् । **प्रशंसायां रूपप् ।५।३।६६।** सुबन्तात्तिङन्ताच्च । प्रशस्तः पटुः पटुरूपः । पचतिरूपम् । **ईषदसमाप्तौ कल्पब्देश्यदेशीयरः ।५।३।६७।** ईषदूनो विद्वान् विद्वत्कल्पः । विद्वद्देशीयः । पचतिकल्पम् । **विभाषा सुपो बहुच्पुरस्तात्तु ।५।३।६८।** ईषदूनः पटुर्बहुपटुः । पटुकल्पः । सुपः किम् । यजतिकल्पम् । **प्रागिवात्कः ।५।३।७०।** इवे प्रतिकृतावित्यतः प्राक्काधिकारः । **अव्ययसर्वनाम्नामकच् प्राक् टेः ।५।३।७१।** का-

पवादः । तिङश्चेत्यनुवर्त्तते । **कस्य च दः** ।५।३।७२। कान्तादव्ययस्य दादेशो ऽकच्च । **अज्ञाते** ।५।३।७३। कस्यायमश्वोऽश्वकः । उच्चकैः । नीचकैः । सर्वके । पचतकिम् । धकित् । **कुत्सिते** ।५।३।७४। कुत्सितोऽश्वोऽश्वकः । **अल्पे** ।५।३।८५। अल्पन्तैलम् तैलकम् । ह्रस्वो वृक्षो वृक्षकः । (अस्मिन्प्रकरणे हलादौ प्रत्यये द्वितीयादचःपरस्य लोपो वा वाच्यः ) । देवदत्तकः । देवकः । ( लोपः पूर्वपदस्य च ) । दत्तकः । (विनापिप्रत्ययं पूर्वोत्तरपदयोर्लोपो वा वाच्यः) । सत्यभामा । भामा । सत्या । **कुटीशमीशुण्डाभ्यो रः** ।५।३।८८। ह्रस्वा कुटी कुटीरः । शमीरः शुण्डारः । **कुत्वाडुपच्** ।५।३।८९। ह्रस्वाकुतूः कुतुपः । 'कुतूः कृत्तेः स्नेहपात्रं ह्रस्वा सा कुतुपः पुमान्' । **कासूगोणीभ्यां ष्टरच्** ।५।३।९०। आयुधविशेषः कासूः । ह्रस्वासाकासूतरी । गोणीतरी । **वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे** ।५।३।९१। वत्सतरः । उक्षतरः । अश्वतरः । ऋषभतरः । **किंयत्तदोनिर्द्धारणे द्वयोरेकस्य डतरच्** ।५।३।९२। अनयोः कतरो वैष्णवः । यतरः । ततरः । **वा बहूनां जातिपरिप्रश्ने डतमच्** ।५।३।९३। जातिपरिप्रश्न इति प्रत्याख्यातमाकरे । कतमो भवतां कठः । यतमः । ततमः । वाग्रहणमकजर्थम् । **एकाच्च प्राचाम्**।५।३।९४। डतरच् डतमच्च स्यात् । अनयोरेकतरो मैत्रः । एषामेकतमः । **इति प्रागिवीयाः** ।

**इवे प्रतिकृतौ** ।५।३।९६। कन्स्यात् । अश्व इव प्रतिकृतिरश्वकः

**शाखादिभ्यो यः।५।३।१०४।** शाखेवशाख्यः।मुख्यः। जघन्यः।अग्र्यः। शरण्यः। **कुशाग्राच्छः ।५।३।१०५।** कुशाग्रीयः। **तत्प्रकृतवचने मयट् ।५।४।२१।** प्राचुर्येण प्रस्तुतं प्रकृतं तस्य वचनं प्रतिपादनम्। भावे अधिकरणे वा ल्युट्। आद्ये प्रकृतमन्नं अन्नमयम्। अपूपमयम्। द्वितीये अन्नमयो यज्ञः। अपूपमयं पर्व। **संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच् ।५।४।१७।** आभ्यावृत्तिर्जन्म क्रियाजन्मगणनवृत्तेः संख्यायाः स्वार्थे कृत्वसुच्। पञ्चकृत्वो भुङ्क्ते। संख्यायाः किम्। भूरिवारान्भुङ्क्ते। **द्वित्रिचतुर्भ्यः सुच् ।५।४।१८।** कृत्वसुचोऽपवादः। द्विर्भुङ्क्ते। त्रिर्भुङ्क्ते 'रात्सस्य'। चतुर्भुङ्क्ते। **एकस्य सकृच्च ।५।४।१९।** सकृदादेशः चात्सुच्। सकृद्भुङ्क्ते। **देवतान्तात्तादर्थ्ये यत् ।५।४।२४।** तदर्थएव तादर्थ्यम्। अतएव स्वार्थे ष्यञ्। अग्निदेवतायै इदमग्निदेवत्यम्। पितृदेवत्यम्। **पादार्घाभ्यां च ।५।४।२५।** पादार्थमुदकं पाद्यम। अर्घ्यम्। **अतिथेर्ञ्यः ।५।४।२६।** अतिथये इदमातिथ्यम्। ( नवस्य नूआदेशस्त्नतनप्खाश्च वक्तव्याः )। स्वार्थे। नूत्नं। नूतनम्। नवीनम्। ( भागरूपनामभ्योधेयः )। भागधेयम्। रूपधेयम्। नामधेयम्। ( आग्नीध्रसाधारणादञ् )। आग्नीध्रं। साधारणम्। **देवात्तल् ।५।४।२७।** देवेवएव देवता। **अवेः कः ।५।४।२८।** अ-

१. शाखा, मुख, जघन, मेघ, अभ्र, चरण, स्कन्ध, स्कन्द, उरस्, शिरस्, अग्र, शरण, इति शाखादिः ॥

विरेव अविकः। **यावादिभ्यः कन्** ।५।४।२९। यावएव यावकः। मणिकः। ( सर्वप्रातिपदिकेभ्यः स्वार्थे कन् )। बहुतरकम्। **मृदस्तिकन्** ।५।४।३९। मृदेव मृत्तिका। **सस्नौ प्रशंसायाम्** ।५।४।४०। रूपपोऽपवादः। प्रशस्ता मृन्मृत्सा। मृत्स्ना। **प्रज्ञादिभ्यश्च** ।५।४।३८। अणूस्यात्। प्रज्ञ एव प्राज्ञः। दैवतः। बान्धवः। **पूगाञ्ञ्योऽग्रामणीपूर्वात्** ।५।३।११२। स्वार्थे। नानाजातीया। अनियतवृत्तयोर्थकामप्रधानाः संघाः पूगाः। लौहितध्वज्यः। **ञ्यादयस्तद्राजाः** ।५।३।११९। तद्राजस्येति लुक्। लोहितध्वजाः। व्रातेति ञ्यञ्। कापोतपाक्यः। कपोतपाकाः। कौंजायना इत्यादि। **बह्वल्पार्थाच्छस्कारकादन्यतरस्याम्** ।५।४।४२। बहूनिददाति बहुशः। अल्पशः। बह्वल्पार्थान्मङ्गलामङ्गलवचनम्। नेह। बहुदहात्यनिष्टेषु। अल्पं ददात्याभ्युदयिकेषु। **संख्यैकवचनाच्च वीप्सायाम्** ।५।४।४३। द्वौ द्वौ ददाति द्विशः। माषं माषं ददाति माषशः। परिमाणशब्दा वृत्तावेकार्था एव। संख्यैकवचनात्किम्। घटंघटं ददाति। वी-

---

१ याव, मणि, अस्थि, तालु, जानु, सान्द्र, पीत, स्तम्ब, ऋतावुष्णशीतं, पशौ-लूनविपाते, अण्ड, निपुणे, पुत्रकृत्रिमे, स्नात, वेदसमाप्तौ, शून्यरिक्ते, दानकुत्सिते तनुसत्रे, ईयसश्च, ज्ञात, अज्ञात, कुमारी, क्रीडनकामिच, इति यावादिः ॥

२ प्रज्ञ, वणिज्, उष्णिज्, उशिज्, प्रत्यक्ष, विद्वज्, विद्वन्, षोडन्, विद्या, मनस्, श्रोत्रशरीरे, जुह्वत्, कृष्णमृगे, चिकीर्षत्, चोर, शत्रु, योध, चक्षुस्, वसु, एनस्, मरुत्, क्रुञ्च, सत्वत्, दशार्ह, वयस्, व्याकृत, असुर, रक्षस्, पिशाच, अशनि, अर्षापण, देवता, बन्धु, इति प्रज्ञादिः ॥

प्सायां किम्। द्वौ ददाति। कारकादित्येव। द्वयोर्द्वयोः स्वामी। **प्रतियोगे पञ्चम्यास्तसिः ।५।४।४४।** प्रतिना कर्मप्रवचनीयेन योगे याप-ञ्चमी विहिता तदन्तात्तसिः। प्रद्युम्नः कृष्णतः प्रति। (आद्यादिभ्यस्त-सेरुपसंख्यानम्)। आदौ आदितः। मध्यतः। पृष्ठतः। पार्श्वतः। आ-कृतिगणोऽयम्। स्वरेण स्वरतः। वर्णतः। **कृभ्वस्तियोगे संपद्यक-र्तरिच्विः ।५।४।५०।** (अभूततद्भाव इति वक्तव्यम्)। विकारात्मतां प्राप्नुवत्यां प्रकृतौ वर्त्तमानाद्विकारशब्दात्स्वार्थे च्विर्वा स्यात्करोत्यादि-भिर्योगे। **अस्य च्वौ ।७।४।३२।** ईत्। अकृष्णः कृष्णः संपद्यते तं-करोति कृष्णीकरोति। ब्रह्मीभवति। गङ्गी स्यात्। (अव्ययस्यच्वावी-त्वन्नेति वाच्यम्)। दोषाभूतमहः। दिवाभूता रात्रिः। **क्यच्व्योश्च ।६।४।१५२।** हलः परस्यापत्ययस्य लोपः क्ये च्वौ च परतः। गार्गीभव-ति। **च्वौ च ।७।४।२६।** दीर्घः। शुचीभवति। पटूस्यात्। **अरुर्मनश्च-क्षश्चेतोरहोरजसां लोपश्च ।५।४।५१।** चात्च्विः। अरूकरोति। उन्मनी करोति। उच्चक्षूकरोति। विचेतीकरोति। विरहीकरोति। विरजीकरोति। **विभाषा साति कार्त्स्न्ये ।५।४।५२।** च्विविषये सा-तिर्वा स्यात्साकल्ये। 'सात्पदाद्योः'। कृत्स्नंशस्त्रमग्निः संपद्यते अग्निसा-द्भवति। अग्नीभवति। कार्त्स्न्ये किम्। एकदेशे न शुक्ली भवति पटः। **अभिविधौ संपदा च ।५।४।५३।** संपदा कृभ्वस्तिभिश्च योगे सातिर्वा

---

१ आदि, मध्य, अन्त, पृष्ठ, पार्श्व, इत्याद्याद्यादिराकृतिगणः।

व्याप्तौ । पक्षे कृभ्वस्तियोगे च्विः । सम्पदा तु वाक्यमेव । अग्निसात्सं-
पद्यते अग्निसाद्भवति शस्त्रम् । अग्नीभवति । जलसात्संपद्यते जलीभव-
ति लवणम् । **तदधीनवचने ।५।४।५४।** सातिः कृभ्वस्तिभिः संपदा
च योगे । राजसात्करोति । राजाधीनमित्यर्थः । **देये त्रा च ।५।४।५५।**
तदधीने देये त्रास्यात्सातिश्च कृञादियोगे । विप्राधीनं देयं करोति विप्र-
त्राकरोति । विप्रत्रा संपद्यते । पक्षे विप्रसात्करोति । देये किम् । राज-
साद्भवति राष्ट्रम् । **देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहु-
लम् ।५।४।५६।** एभ्यो द्वितीयान्तेभ्यः सप्तम्यन्तेभ्यश्च त्रा स्यात् । दे-
वत्रावन्देरमे वा[1] । बहुलोक्तेरन्यत्रापि । बहुत्रा जीवतो मनः । **अव्यक्ता-
नुकरणाद्द्व्यजवरार्धादनितौ डाच् ।५।४।५७।** द्व्यजवरं न्यूनं न तु
ततो न्यूनम् । अनेकाजिति यावत् । तादृशमर्धं यस्य तस्माड्डाच्-
कृभ्वस्तिभिर्योगे । ( डाचि बहुलं द्वे भवतः ) । डाचि विवक्षिते द्वित्व-
म् । ( नित्यमाम्रेडिते डाचीति वक्तव्यम् ) । डाच्परं यदाम्रेडितं तस्मिन्परे
पूर्वपरयोर्वर्णयोः पररूपं स्यात् । इति तपयोः पः । पटपटाकरोति । अ-
व्यक्तानुकरणात्किम् । दृषत्करोति द्व्यजवरार्धात्किम् श्रत्करोति । अव-
रेति किम् । खरटखरटाकरोति । अनितौ किम् । पटिति करोति । **कृ-
ञो द्वितीयतृतीयशंबबीजात्कृषौ ।५।४।५८।** द्वितीयादिभ्यो डाच्

---

१ इह देवान् वन्दे देवत्रावन्दे देवेषु रमे देवत्रारमे इत्यर्थोबोध्यः ।। एवंमनुष्यान् गच्छति मनुष्यत्रागच्छति इत्यादि ज्ञेयम् ।

कृञो योग एव । बहुलोक्तेरव्यक्तानुकरणादन्यस्य डाचि न द्वित्वम् द्वितीयं तृतीयं कर्षणं करोति तृतीयाकरोति । शंबाकरोति । बीजाकरोति । **संख्यायाश्च गुणान्तायाः** ।५।४।५९। द्विगुणाकरोति क्षेत्रम् । **समयाच्च यापनायाम्** ।५।४।६०। कृञावित्ति निवृत्तम् । समयाकरोति । कालंयापयतीत्यर्थः । **सपत्रनिष्पत्रादतिव्यथने** ।५।४।६१। सपत्राकरोति मृगम् । सपुंखशरप्रवेशनेन सपत्रं करोतीत्यर्थः । निष्पत्राकरोति । सपुंखस्य शरस्याऽपरपार्श्वे निर्गमनान्निष्पत्रं करोतीत्यर्थः । अतिव्यथने किम् । सपत्रं निष्पत्रं वा करोति भूतलम् । **निष्कुलान्निष्कोषणे** ।५।४।६२। निष्कुलाकरोति दाडिमम् । निर्गतं कुलमन्तरवयवानां समूहो यस्मादिति बहुव्रीहेर्डाच् । **सुखप्रियादानुलोम्ये** ।५।४।६३। सुखाकरोति । प्रियाकरोति गुरुम् । अनुकूलाचरणेनानंदयतीत्यर्थः । **दुःखात्प्रातिलोम्ये** ।५।४।६४। दुःखाकरोति स्वामिनम् । पीडयतीत्यर्थः । **शूलात्पाके** ।५।४।६५। शूलाकरोति । शूलेन पचतीत्यर्थः । **सत्यादशपथे** ।५।४।६६। सत्याकरोति भाण्डंवणिक् । क्रेतव्यमितितथ्यं करोतीत्यर्थः शपथे तु सत्यं करोति विप्रः । **मद्रात्परिवापणे** ।५।४।६७। मद्रशब्दोमङ्गलार्थः । परिवापणं मुण्डनम् । मद्राकरोति कुमारम् । मङ्गल्यमुण्डनेन संस्करोतीत्यर्थः । ( भद्राच्चेति वक्तव्यम् ) । भद्राकरोति । अर्थः प्राग्वत् । परिवापणे किम् । मद्रंकरोति । भद्रंकरोति । **इतितद्धितप्रक्रिया** ।

**सर्वस्य द्वे ।८।१।१।** इत्यधिकृत्य । **परेर्वर्जने ।८।१।५।** परिपरि वङ्गेभ्यो वृष्टो देवः । **उपर्यध्यधसः सामीप्ये ।८।१।७।** उपर्युपरि ग्रामम् । ग्रामस्योपरिष्टात्समीपदेशे इत्यर्थः । अध्यधिसुखम् । सुखस्योपरिष्टात्समीपकाले दुःखमित्यर्थः । अधोऽधो लोकम् । लोकस्याधस्तात्समीपदेशे इत्यर्थः । **वाक्यादेरामन्त्रितस्यासूयासंमतिकोपकुत्सनभर्त्सनेषु ।८।१।८।** सुन्दर सुन्दर वृथा ते सौन्दर्यम् । देवदेव वंद्योसि । दुर्विनीत दुर्विनीत इदानीं ज्ञास्यसि । धानुष्कधानुष्क वृथा ते धनुः । चोरचोर घातयिष्यामि त्वाम् । **एकं बहुव्रीहिवत् ।८।१।९।** द्विरुक्त एकशब्दो बहुव्रीहिवत् । तेन सुब्लोपपुंवद्भावौ। एकैकमक्षरम् । इह द्वयोरपि सुपोर्लुकि सति बहुव्रीहिवद्भावादेव प्रातिपदिकत्त्वात्समुदायात्सुप् । तच्च एकवचनमेव । एकैकयाहुत्या । **आबाधे च ।८।१।१०।** पीडायां द्वेस्तो बहुव्रीहिवच्च । गतगतः।गतगत।। **प्रकारे गुणवचनस्य ।८।१।१२।** सादृश्ये द्योत्ये गुणवचनस्य द्वे स्तस्तच्च कर्मधारयवत् । पटुपट्वी । पटुपटुः । पटुसदृशः ईषत्पटुरिति यावत् । ( आनुपूर्व्ये द्वेवाच्ये ) । मूलेमूले स्थूलः । ( संभ्रमेण प्रवृत्तौ यथेष्टमनेकधा प्रयोगो न्यायसिद्धः)। सर्पः २। बुध्यस्व २। सर्पः ३। बुध्यस्व ३। ( कर्मव्यतिहारे सर्वनाम्नो द्वे वाच्ये समासवच्च बहुलम् )। बहुलग्रहणादन्यपरयोर्न समा-

---

१ 'नित्यवीप्सयोः' इत्येवमादीनां विधेयकार्यिणोरनिर्देशेन आकाङ्क्षायोग्यत्वात् स्वरितत्वप्रतिज्ञानाच्चेति भावः ।

सवत् । इतरशब्दस्य तुनित्यम् । ( असमासवद्भावे पूर्वपदस्थस्य सुपः सुर्वक्तव्यः ) । अन्योन्यं विप्रा नमन्ति । अन्योन्यौ । अन्योन्येन कृतम् । अन्योन्यस्मै दत्तमित्यादि । ( स्त्रीनपुंसकयोरुत्तरपदस्थाया विभक्तेरांभावो वाच्यः) । अन्योन्यां अन्योन्यं परस्पराम् परस्परम् । इतरेतराम् । इतरेतरं वा इमे ब्राह्मण्यौ कुले वा भोजयतः । दलद्वये टाबभावः क्लीबे चाद्विरहः । स्वमोः । समासे सोरलुक् चेति सिद्धं बाहुलकात्रम् । अन्योन्यमित्यादौ दलद्वये टाप् । अड्डतरेत्यदड् च प्राप्तः । अन्योन्यसंसक्तमहस्त्रियाम् अन्योन्याश्रयः । परस्पराक्षिसादृश्यम् । अदृष्टपरस्परैरित्यादौसोर्लुक् च प्राप्तः । सर्वं बाहुलकात्समाधेयम् । इति- द्विरुक्तप्रक्रिया ॥

**स्त्रियाम्** ।४।१।३। अधिकारोऽयम् । समर्थानामिति यावत् । **अजाद्यतष्टाप्** ।४।१।४। अजादीनामकारान्तस्य च वाच्यं यत्स्त्री त्वं तत्र द्योत्ये टाप् स्यात् । अजा । अजादिभिः स्त्रीत्वस्य विशेषणान्नेह । पञ्चाजी । अत्र हि समासार्थसमाहारनिष्ठं स्त्रीत्वम् । अतः । खट्वा । अजा एडका । अश्वा । चटका । मूषिका । बाला । वत्सा । होढा । मन्दा । विलाता । संभस्त्राजिनशणपिण्डेभ्यः फलात् । संफला । भस्त्रफल

१. अज, एडक, अश्व, चटक, मूषिक, बाल, वत्स, होड, पाक, मन्द, विलात. पूर्वापहाण, उत्तरापहाण, क्रुञ्चा, उष्णिहा, देवविशा, ज्येष्ठा, मध्यमेति पुंयोगेऽपि कोकिलाजातौ, दंष्ट्रा, एतेऽजादयः । आकृतिगणोऽयम् ॥ २ अजादिगणे इत्वरहितस्यैव पाठात् 'प्रत्ययस्थात्' इति इत्वं न 'चटकायाऐरक्' इति निपातनात् ।

इत्यादि । सदच्काण्डप्रान्तशतैकेभ्यः पुष्पात् । सत्पुष्पा । प्राक्पुष्पा प्रत्यक्पुष्पा । ( शूद्राचा महत्पूर्वाजातिः) । पुंयोगे[1] तु शूद्री । अमहत्पूर्वाकिम् । महाशूद्री । क्रुञ्चा । उष्णिहा देवविशा। ज्येष्ठा कनिष्ठा मध्यमेति पुंयोगेपि । कोकिला जातावपि । मूलान्नञः । अमूला । **उगितश्च ।४।१।६।** ङीप् । भवन्ती । पचन्ती । **वनोरच ।४।१।७।** वन्नन्तात्तदन्ताच्च ङीप् स्याद्रश्चान्तादेशः सुत्वानमतिक्रान्ता अतिसुत्वरी । अतिधीवरी । शर्वरी ।(वनो न हश इति वक्तव्यम्।) अवावा ब्राणी । राजयुध्वा । बहुव्रीहौ वा। बहुधीवा । बहुधीवरी । **पादोन्यतरस्याम् ।४।१।८।** द्विपदी ।द्विपात् । **टाबृचि ।४।१।** द्विपदा ऋक् । एकपदा । **मनः ।४।१।११।** मन्नन्तान्न ङीप् । सीमानौ । **अनो बहुव्रीहेः ।४।१।१२।** अन्नन्ताद्बहुव्रीहेर्न ङीप् । बहुयज्वा । बहुयज्वानौ । **डाबुभाभ्यामन्यतरस्याम् ।४।१।१३।** सूत्रद्वयोपात्ताभ्यां डाब् वा । सीमा । सीमे । सीमानौ । दामानौ । दामे । **अन उपधालोपिनोऽन्यतरस्याम् ।४।१।२८।** अन्नन्ताद्बहुव्रीहेरुपधालोपिनो वा ङीप् । पक्षे डाब्निषेधौ । बहुराज्ञी । बहुराज्ञ्यौ । बहुराजा । बहुराजानौ । **प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः ।७।३।४४।** प्रत्ययस्थात्ककारात्पूर्वस्याकारस्येकारः स्यादापि परे स आप्सुपः परो न चेत् । सर्विका । कारिका । अतः किम् । नौका । प्रत्ययस्थात्किम् । शक्नोतीति शका ।

---

१ पुंयोगश्च दाम्पत्य एवेति न नियमः किन्तु जन्यजनकभावोपि गृह्यते। तथाच स्मृतिः—'वैश्या शूद्रयोस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ' इति।

असुपः किम् । बहुपरिव्राजका नगरी । (मामकनरकयोरुपसंख्यानम् ) । मामिका । नरिका । (त्यक्त्यपोश्च ) । दाक्षिणात्यिका । इहत्यिका । **नयासयोः** ।७।३।४५। यत्तदोरस्येन्न ।)यकाम् । तकाम् । यका । सका । त्यकनश्च निषेधः ) । उपत्यका । अधित्यका ।( आशिषि वुनश्च न ) । जीवका । भवका । उत्तरपदलोपे न । देवदत्तिका । देवका । ( क्षिपकादीनां च । क्षिपका । ध्रुवका । चटका । कन्यका । ( तारका-ज्योतिषि ) । ( वर्णका तान्तवे ) । ( वर्त्तकाशकुनौ प्राचाम् ) । (अष्टका पितृदेवत्ये ) । ( सूतकापुत्रिकावृन्दारकाणांवेति वक्तव्यम् ) । एषां वा अकारो भवतीत्यर्थः । सूतिका । सूतकेत्यादि । **उदीचामातः स्थाने यकपूर्वायाः** ।७।३।४६। यकपूर्वस्य स्त्रीप्रत्ययस्यातः स्थाने योऽत् तस्य कात्पूर्वस्येद्वा णि परे । केण इतिह्रस्वः । आर्यका । चटकका । चटकिका । आतः किम् । सांकाश्येभवा सांकाश्यिका । यकेतिकिम् । अश्विका । स्त्रीप्रत्ययस्य किम् शुभंयिका । **अभाषितपुंस्काच्च** ।७।३। ४८। एतस्माद्विहितस्यातः स्थाने त इद्वा । गङ्गाका । गङ्गिका । **आदाचार्याणाम्** ।७।३।४९। पूर्वविषये । मङ्गाका । **अनुपसर्जनात्** ।७। १।१४।अधिकारोयं यूनस्तिरित्यभिव्याप्य। **टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः** ।४।१।१५। अनुपसर्जनं यट्टिदादि तदन्तं

---

१ इद्वेति तु फलितार्थकथनम् । 'नयासयोः' इत्यतः नेत्यनुवर्तनात् उदीचां मते इत्वं न इत्येव सूत्रार्थः । २ क्षिपकादिषु इत्वाभावार्थं चटका शब्दस्य पाठो न, तत्यकः अजादिगणे निपातनादेव इत्वाभाव सिद्धः ।

यददन्तं ततो ङीप् । कुरुचरी । उपसर्जनत्वान्नेह । बहुकुरुचरा । नद ट् । नदी । देवट् । देवी । सौपर्णेयी । ऐन्द्री । औत्सी । ऊरुद्वयसी । ऊरुदघ्नी । ऊरुमात्री । पञ्चतयी । आक्षिकी । लावणिकी । यादृशी । इत्वरी । ( नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानम् ) । स्त्रैणी । पौंस्नी । शाक्तीकी । आढ्यंकरणी तरुणी । तलुनी । **यञश्च** ।४।१ ।१६। यञन्तात्प्रातिपदिकाद् ङीप् । अकारलोपे कृते । **हलस्तद्धितस्य** ।४।१।१५०। हलउत्तरस्योपधाभूततद्धितस्य लोप इति । गार्गी । **प्राचां ष्फ[१] तद्धितः** ।३।१।१७। यञन्तात्ष्फो वा । **षः प्रत्ययस्य** ।१।३।६। प्रत्ययादिः ष इत्स्यात् । आयनेयीनीत्यायनादेशः । षित्वसामर्थ्यात्षिद्गौरेति ङीष् । गार्ग्यायणी । **वयसि प्रथमे** ।४।१।२०। प्रथमवयोवाचिनोऽदन्तान्ङीप् । कुमारी । ( वयस्यचरम इतिवाच्यम् ) । वधूटी । चिरंटी । **द्विगोः** ।४।१।२१। अदन्ताद् द्विगोर्ङीप् । त्रिलोकी । अजादित्वात् त्रिफला । त्र्यनीकासेना । **अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि** ।४।१।२२। अपरिमाणान्ताद्बिस्ताद्यन्ताच्च द्विगोर्न ङीप् तद्धितलुकि । पञ्चभिरश्वैः ।

---

१तद्धितग्रहणं ष्फप्रत्ययांतस्य प्रातिपदिकसंज्ञार्थं तेन षिद्गौरेति ङीष्सिध्यति ननु प्राति पदिकसंज्ञांविनापि षित्करणसामर्थ्यादेव. ङीष् भविष्यति किमनेन तद्धितग्रहणेना नच यञन्ते 'यस्येति च' इति लोपार्थं तदितिवाच्यम् । सवर्णदीर्घेणापि रूपसिद्धे लोपस्यानावश्यकत्वात् । एवं तर्हि तद्धितग्रहणमिञन्तादपि क्वचित् ष्फो भवतीति ज्ञापनार्थं तेनासुरेरूपसंख्यानमिति वक्ष्यमाणं सिध्यति ।

क्रीता पञ्चाश्वा । ( आर्हीयष्ठक् ) । अध्यर्द्धेतिलुक् । द्वौ बिस्तौ पच-ति द्विबिस्ता । द्व्याचिता । द्विकंबल्या । परिमाणात्तु द्व्याढकी । तद्धित-लुकि किम् । समाहारे पञ्चाश्वी । **काण्डान्तात्क्षेत्रे ।४।१।२३।** क्षेत्रे यः काण्डान्तो द्विगुस्ततो न ङीप् तद्धितलुकि । द्वे काण्डे प्रमा-णमस्याः द्विकाण्डा क्षेत्रभक्तिः । मात्रचः प्रमाणेलोद्विगोर्नित्यमिति लुक् । क्षेत्रे किम् । द्विकाण्डी रज्जुः । **पुरुषात्प्रमाणेऽन्यतरस्याम् ।४। १।२४।** प्रमाणे यः पुरुषस्तदन्ताद्द्विगोर्ङीप् वा स्यात्तद्धितलुकि । द्वौ पुरुषौ प्रमाणमस्या द्विपुरुषी द्विपुरुषा वा परिखा । **ऊधसोऽनङ् । ५।४।१३१।** ऊधोन्तस्य बहुव्रीहेरनङ् स्त्रियाम् । **बहुव्रीहेरूधसो ङी-प् ।४।१।२५।** ऊधोन्ताद्बहुव्रीहेः । कुण्डोध्नी स्त्रियां किम् । कुण्डोधो धैनुकम् । **दामहायनान्ताच्च ।४।१।२६।** संख्यादेर्बहुव्रीहेर्दामान्ता-द्धायनान्ताच्च ङीप् । द्विदाम्नी । द्विहायनी बाला । ( त्रिचतुर्भ्यां हा-यनस्य णत्वं वाच्यम् )। वयोवाचकहायनस्य ङीप् णत्वं चेष्यते । त्रिहायणी । चतुर्हायणी । वयसोऽन्यत्र । त्रिहायना । चतुर्हायना शाला । **अन्तर्वत्पतिवतोर्नुक् ।४।१।३२।** नान्तत्वान् ङीप् । अन्तर्वत्नी । पतिवत्नी । गर्भभर्तृसंयोगएवेष्यते । अन्यत्र तु । अन्तरस्त्यस्यां शाला-यां वटः । पतिमतीपृथिवी । **पत्युर्नो यज्ञसंयोगे ।४।१।३३।** वसिष्ठस्य पत्नी । **विभाषा सपूर्वस्य ।४।१।३४।** पतिशब्दान्तस्य नो वा । गृ-हपत्नी । गृहपतिः । दृढपत्नी । दृढपतिः । **नित्यं सपत्न्यादिषु ।४।१**

६५। सपत्नी । एकपत्नी । वीरपत्नी । **पूतक्रतोरैच** ।४।१।३६। पूतक्रतोः स्त्री पूतक्रतायी । **वृषाकप्यग्निकुसितकुसिदानामुदात्तः** ।४।१।३७। एषामुदात्त ऐआदेशो ङीप् च । वृषाकपेः । स्त्री वृषाकपायी । अग्नायी । कुसितायी । कुसिदायी। **मनोरौ वा** ।४।१।३८। मनुशब्दस्यौकारादेशः स्यादुदात्तैकारश्च वा ङीप्च । मनायी मनावी मनुः । **वर्णादनुदात्तात्तोपधात्तोनः** ।४।१।३९। वर्णवाची यो नुदातान्तस्तोपधस्तदन्ताद्वा ङीप् तस्य नः। एता । एनी । रोहिता । रोहिणी । **षिद्गौरादिभ्यश्च** ।४।१।४१। ङीष् । नर्त्तकी । गौरी । अनडुही । अनड्वाही। 'पिप्पल्यादयश्च' । आकृतिगणोयम् । (मत्स्यस्य ङ्याम्) । यलोपः । मत्सी । **जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद्वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनाऽयोविकारमैथुनेच्छाकेशवेशेषु** ।४।१।४२। एकादशभ्यः क्रमाद्वृत्त्यादिष्वर्थेषु ङीष् । जानपदी वृत्तिश्चेत् । अन्याजानपदी । अञन्तत्त्वान् ङीपि आद्युदात्तः । कुण्डी अमत्रंचेत् कुण्डान्या । गोणी आवपनं चेत् । गोणान्या । स्थली आकृत्रिमाचेत् स्थलान्या । भाजी श्राणाचेत् भाजान्या । 'यवागूरुष्णिकाश्राणा विलेपी तरला च सा' इत्यमरः । नागी स्थूलाचेत् । नागान्या । काली वर्णश्चेत् कालान्या । नीली अनाच्छादनं चेत् । नीलान्या । नील्या रक्ताशाटीत्यर्थः । कुशी अयोविकारश्चेत् । कुशान्या । कामुकी मै-

---

१ शिल्पिनिष्वुन्, इतिसूत्रेणष्वुन् । 'युवोरनाकौ' इत्यकारेशः षित्वात् ङीष्

थुनेच्छावती चेत्। कामुकान्या। कबरीकेशानां सन्निवेशविशेषश्चेत्। कबरान्या। **शोणात्प्राचाम्** ।४।१।४३। शोणी। शोणा। **वोतो गुणवचनात्** ।४।१।४४। उदन्ताद्गुणवाचिनो वा ङीष्। मृद्वी। मृदुः। उतः किम्। शितिः। गुणेति किम्। आखुः। खरुसंयोगोपधान्न। खरुः। पाण्डुः। **बह्वादिभ्यश्च** ।४।१।४५। वा ङीष्। बह्वी। बहुः। कृदिकारादक्तिनः। रात्री रात्रिः। सर्वतोऽक्तिन्नर्थादित्येके। शकटी। शकटिः। **पुंयोगादाख्यायाम्** ।४।१।४८। या पुमाख्या पुंयोगात्स्त्रियां वर्तते ततो ङीष्। गोपस्य स्त्री गोपी। पालकान्तान्न। गोपालिका। अश्वपालिका। सूर्याद्देवतायां चाप्। सूर्यस्य स्त्री देवता सूर्या। देवतायां किम्। सुरी कुन्ती मानुषीयम्। **इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक्** ।४।१।४९। ङीष् च। इन्द्राणी। हिमाऽरण्ययोर्महत्त्वे। महद्धिमं हिमानी। यवाद्दोषे। दुष्टो यवो यवानी। यवनाल्लिप्याम्। यवनानां लिपिर्यवनानी। मातुलोपाध्याययोरानुग्वा। मातुलानी। मातुली। उपाध्यायानी। उपाध्यायी। आचार्यादणत्वं च। आचार्यानी। ( अर्यक्षत्रियाभ्यां वा स्वार्थे )। अर्याणी। अर्या। क्षत्रियाणी। क्षत्रिया। पुंयोगे तु। अर्यी।

---

१. 'सत्वे निविशतेऽपैति पृथग्जातिषु दृश्यते। आधेयश्चाक्रियाजश्च सोऽसत्वप्रकृतिर्गुणः' इति महाभाष्ये। सत्वं' द्रव्यम्। सत्व एव निविशत इति सावधारणं व्याख्येयम्। एतेन सत्ताव्यावर्त्यते। सा हि न केवलं द्रव्ये वर्तते किंतु द्रव्यगुणक

क्षत्रियी। **क्रीतात्करणपूर्वात्। ४।१।५०।** क्रीतान्तादन्तात्करणादेर्ङीष्। वस्त्रक्रीती[1]। क्वचिन्न। धनक्रीता। **बहुव्रीहेश्चान्तोदात्तात्। ४।१।५२।** क्तान्तान्ङीष्। ऊरुभिन्नी। **अस्वाङ्गपूर्वपदाद्वा। ४।१।५३।** पूर्वेण नित्ये प्राप्ते विकल्पोऽयम्। सुरापीती। सुरापीता। **स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्। ४।१।५४।** असंयोगोपधमुपसर्जनं यत्स्वाङ्गं तदन्ताद्वा ङीष्। अतिकेशी। अतिकेशा। चन्द्रमुखी। चन्द्रमुखा। संयोगोपधात्तु सुगुल्फा। अद्रवं मूर्त्तिमत्स्वाङ्गं प्राणिस्थमविकारजम्। अतत्स्थं तत्र दृष्टं च तेनचेत्तत्तथा युतम्॥ १॥ सुस्वेदा। द्रवत्वात्। सुज्ञाना। अमूर्त्तत्वात्। सुमुखाशाला। अप्राणिस्थत्वात्। सुशोफा। विकारजत्वात्। सुकेशी सुकेशा वा रथ्या। अप्राणिस्थस्यापि प्राणिनि दृष्टत्वात्। सुस्तनी सुस्तना वा प्रतिमा। प्राणिवत्प्राणिशद्दशेस्थितत्वात्। **नासिकोदरोष्ठजंघादन्तकर्णशृङ्गाच्च। ४।१।५५।** वा ङीष्। तुङ्गनासिकी। तुङ्गनासिका। (पुच्छाच्च)। सुपुच्छी। सुपुच्छा। (कबरमणिविषशरेभ्यो नित्यम्,। कबरपुच्छी। उपमानात्पक्षाच्चपुच्छाच्च। उलूकपक्षीशाला। उलूकपुच्छीसेना। **नक्रोडादिबह्वचः। ४।१।५६।** क्रोडादेर्बह्वचश्च स्वांगान्न ङीष्। कल्याणक्रोडा। आकृतिगणोऽयम्। सुजघना। **सहनञ्विद्यमानपूर्वाच्च। ४।१।५७।** न ङीष्। सकेशा।

---

१ वस्त्र भिस् क्रीत इति स्थिते प्राक् सुबुत्पत्तेः कर्तृकरणेति समासे अदंतत्वात् ङीष्।

अकेशा । विद्यमाननासिका । **नखमुखात्संज्ञायाम्** ।४।१।५८। ङीप् ।न शूर्पणखा । गौरमुखा । संज्ञायां किम्। ताम्रमुखीकन्या । **वाहः** ।४।१।६१। वाहन्तान् ङीष् । दित्यौही । **सख्यशिश्वीति भाषायाम्** ।४।१।६२। सखी । अशिश्वी । **जातेरस्त्रीविषयादयोपधात्** ।४।१।६३। जातिवाचि यन्नच स्त्रियां नियतमयोपधं ततो ङीष् । 'आकृतिग्रहणाजातिर्लिङ्गानां च न सर्वभाक् । सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैःसह' ॥ १ ॥ घटी । वृषली । औपगवी । कठी । जातेः किम् । मुण्डा । अस्त्रीविषयात्किम् । बलाका । अयोपधात्किम्। क्षत्रिया । ( योपधप्रतिषेधे गवयहयमुकयमनुष्यमत्स्यानामप्रतिषेधः) । गवयी । हयी । मुकयी । मनुषी । मत्सी । **पाककर्णपर्णपुष्पफलमूलवालोत्तरपदाच्च** ।४।१।६४। पाकाद्युत्तरपदाज्जातिवाचिनः स्त्रीविषयादपि ङीष् । ओदनपाकी । शंकुकर्णी । शालपर्णी । शंखपुष्पी । दासीफली । दर्भमूली । गोवाली । औषधिविशेषे रुढाः । **इतो मनुष्यजातेः** ।४।१।६५। ङीष् । दाक्षी । **ऊङुतः** ।४।१।६६। उकारान्तादयोपधान्मनुष्यजातिवाचिन ऊङ् । कुरूः । **पंगोश्च** ।४।१।६८। पङ्गूः । श्वशुरस्योकाराकारलोपश्च । चादूङ् । पुंयोगलक्षणङीषोपवादः । श्वश्रूः । **ऊरूत्तरपदादौपम्ये** ।४।१।६९। उपमानवाचिपूर्वपदमुरू-

---

१ पूर्वपदात्संज्ञायामिति णत्वम् । यदा तु शूर्पवन्नखानियस्याः इतियोगमात्रं विवक्ष्यते नतुसंज्ञा ततो असंज्ञात्वान्न ङीप्निषेधो न तुवाणत्वं तेन राक्षस्यपि योगरूढ्या शूर्पनखी इति भवति.

त्तरपदं यत्तस्मादूङ् । करभोरूः । **संहितशफलक्षणवामादेश्च ।४।१।७०।** संहितोरूः । (सहितभ्यां च) । सहितोरूः । सहोरूः । **शार्ङ्गरवाद्यञोङीन् ।४।१।६३।** शार्ङ्गरवादेरञोकारस्तदन्ताच्च जातिवाचिनो ङीन् । शार्ङ्गरवी । बैदी । 'नृनरयोर्वृद्धिश्च' । नारी । **यङश्चाप् ।४।१।७४।** यङन्ताच्चाप् । आंबष्ठ्याकारीषगन्ध्या ( षाद्यञश्चापूवाच्यः ) । पौतिमाष्या । **आवट्याच्च ।४।१।७५।** अस्माच्चाप् । यञश्चेति ङीपोऽपवादः । अवटशब्दो गर्गादिः । आवट्या । **यूनस्तिः ।४।१।७७।** युवन् शब्दात्तिः । युवतिः । अनुपसर्जनादित्येव । बहवो युवानो यस्यां बहुयुवा । युवतीति तुयौतेः शत्रन्तान्ङीपि बोध्यम् । **इतिस्त्रीप्रत्ययाः ॥**

**षष्ठीयुक्तः श्छन्दसि वा ।१।४।९।** पतिशब्दोघिसंज्ञः । क्षेत्रस्यपतिना वयम् । इह वेति योगं विभज्य छंदसीत्यनुवर्त्तते । तेन सर्वे विधयश्छन्दसि वैकल्पिकाः । बहुलं छन्दसीत्यादिरस्यैव प्रपञ्चः । **अयस्मयादीनिच्छन्दसि ।१।४।२०।** साधूनि । भपदसंज्ञाधिकाराद्यथायोगं संज्ञाद्वयं बोध्यम् । तथाच । वार्त्तिकम् । उभयसंज्ञान्यपीति वक्तव्यमिति ) । सस्रुष्टुभासऋक्कता गणेन । पदत्वात्कुत्वम् । भत्वाज्जश्त्वाभावः । नैनं हिन्वंत्यपि वाजिनेषु । अत्र पदत्वाज्जश्त्वं भत्वात्कुत्वाभावः । 'तेमाग्धातोः' । **छन्दसि परेपि ।१।४।८१।** **व्यवहिताश्च**

---

१ तथाच कालिदासः– 'किं शीतलैःक्लमविनोदिभिरार्द्रवातान् संचारयामि नलिनीदलतालवृन्तैः । अंकेनिधाय करभोरु यथासुखं ते संवाहयामि चरणावुत पद्मताम्रौ' इति.

।१।४८२ हरिभ्यांयाह्योकआ । आमन्द्रैरिन्द्रहरिभिर्याहि । **तृती-या च होश्छन्दसि ।२।३।३।** जुहोतेः कर्मणि तृतीयास्याद् द्वितीया च । यवाग्वाग्निहोत्रंजुहोति । **मन्त्रे श्वेतवहोक्थशस्पुरोडाशोण्विन् ।३।२।७१।** ( श्वेतवाहादीनां डस्पदस्येति वक्तव्यम् )। यत्र पदत्वं भावि तत्रण्विनोऽपवादो डस्वक्तव्य इत्यर्थः । श्वेतवाः। श्वेतवाहौ श्वेतवाहः। उक्थानि उक्थैर्वा शंसति उक्थशा यजमानः। उक्थशासौ। पुरो दास्यते दीयते पुरोडाः। **अवेयजः ।३।२।७२।** अवयाः। अवयाजौ। अवयाजः । **अवयाःश्वेतवाः पुरोडाश्च ।८।२।६७।** एते संबुद्धौ कृतदीर्घानिपात्यन्ते । चादुक्थशाः । **लिङर्थेलेट् ।३।४।७। सिब्बहुलं लेटि ।३।१।३४। इतश्च लोपः परस्मैपदेषु ३।४।९७।** लेटस्तिङांवा। **लेटोऽडाटौ ।३।४।९४।** स्तो वा तौ च पितौ। ( सिब्ब हुलं णिद्वक्तव्यः )। वृद्धिः । प्रणआयुंषितारिषत् । सुपेशसस्करतिजोषिपद्धि । आसाविषदर्शसानाय । सिप इलोपस्य चाभावे । पताति विद्युत्। प्रियःसूर्य्ये प्रियो अग्ना भवाति । **स उत्तमस्य ।३।४।९८।** लेट उत्तमस्य वा लोपः। करवावः। करवाव। टेरेत्वम्। **आत ऐ ।३।४।९५।** लेटआकारस्य। सुतेभिः सुप्रयसामादयैते । आतामित्याकारस्य ऐं । **वैतोन्यत्र ।३।४।९६।** लेट एकारस्य ऐः स्याद्वा आत ऐ इत्यस्य विषयं विना । पशूनामीशै । ग्रहागृह्यंते । अन्यत्र किम् । सुप्रयसामादयैते । **उपसंवादाशङ्कयोश्च।३।४।८।** पणवन्धे आशंकायां च लेट् । अहमेवपशूनामीशै । नेज्जिह्मायंतो नरकं पताम । **व्यत्ययो बहुलम् ।३।१।८५।** विकरणानां छन्दसि

आण्डा शुष्णस्य भेदति। भिनत्तीति प्राप्तम्। जरसा मरते पतिः। म्रियत इति प्राप्ते। इन्द्रो वस्तेन नेषतु। नयतेर्लोट्। शप्सिपौ विकरणौ। इन्द्रेण युजा तरुषेम वृत्रम्। तरेमेत्यर्थः। तरतेर्विध्यादौ लिङ्। उः सिप् शप् चेति त्रयो विकरणाः। सुप्तिङुपग्रहलिंगनराणां कालहलच्स्वरकर्तृयङां च व्यत्यय मिच्छति शास्त्रकृदेषां सोपि च सिध्यति बाहुलकेन' धुरि दक्षिणायाः। दक्षिणस्यामिति प्राप्ते। चषालं ये अश्वयूपाय तक्षति। तक्षन्तीति प्राप्ते। उपग्रहः परस्मैपदात्मनेपदे ब्रह्मचारिणमिच्छते। इच्छतीति प्राप्ते। प्रतीपमन्यऊर्मिर्युध्यति। युध्यत इतिप्राप्ते। मधोस्तृप्ता इवासते। मधुन इतिप्राप्ते। नरः पुरुषः। अधासवीरैर्दशभिर्वियूयाः। वियूयादितिप्राप्ते। कालः कालवाचकाः प्रत्ययाः। श्वोग्नीनाधास्यमानेन। लुटो विषये लृट्। तमसोगा अदुक्षत्। अधुक्षदिति प्राप्ते। मित्र वयं च सूरयः। मित्रावयमिति प्राप्ते। स्वरव्यत्ययस्तु वक्ष्यते। कर्तृशब्दः कारकमात्रपरः। तथाच तद्वाचिनां कृत्तद्धितानां व्यत्ययः। अन्नादायः। अणिविषये अच्। यङो यशब्दादारभ्य लिङ्याशिष्यङिति ङकारेण प्रत्याहारः। तेषां व्यत्ययो भेदतीत्यादिरुक्त एव। **छन्दस्युभयथा।३। ४।११७।** धात्वधिकारोक्तः प्रत्ययः सार्वधातुकार्द्धधातुकोभयसंज्ञः स्यात्। वर्द्धतु त्वा सुष्टुतयः। वर्द्धयन्त्वित्यर्थः। आर्द्धधातुकत्वाण्णिलोपः। विश्रृण्विरे। सार्वधातुकत्वात् श्नुः श्रृभावश्च। हुश्नुवोरिति यण्। **तुमर्थेसेसेनसेअसेन्क्सेकसेनध्यै अध्यैन्कध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेनः।३।४।९।** से वक्षेरायः। सेन्। तावामेषे। असे। शरदोजीवसेधाः। असे नित्याद्युदात्तः। क्से। प्रेषे। कसेन्। गवामिवश्रियसे। अध्यै।

अध्यैन् । जठरं पृणध्यै । पक्षे । आद्युदात्तम् । कध्यै । कध्यैन् । आहुवध्यै । शध्यै । राधसः सहमादयध्यै । शध्यैन् । वायवे पिबध्यै । तवै । दातवाउ । तवेङ् । सूतवे । तवेन् । कर्त्तवे । **प्रयैरोहिष्यै अव्यथिष्यै** ।३।४।१२। एते निपात्यन्ते । प्रयातुं रोढुं अव्यथितुमित्यर्थः **दृशेविख्ये च** ।३।४।११। निपातौ द्रष्टुं । विख्यातुमित्यर्थः । **कृत्यार्थेतवैकेन्केन्यत्वनः** ।३।४।१४। धातोरेते स्युः । तवै । अन्वेतवै । केन्। अवगाहे । केन्य । दिदृक्षेण्यः । त्वन । कर्त्वम् । **सृपितृदोः कसुन्** ।३।४।१७। तुमर्थे । पुराक्रूरस्य विसृपो विरप्शिन् । पुरा जतृभ्य आतृदः । **प्रकृत्यान्तः पादमव्यपरे** ।६।४।११५। ऋक्पादमध्यस्थ एङ्प्रकृत्यास्यान्न तु वकारपरे अति । उपप्रयंतो अध्वरम् । सुजाते अश्वसूनृते । अन्तः पादं किम् । एतास एतेर्चंति । अव्यपरे किम् । तेवदन् । **अव्यादवद्यादवक्रमुरव्रतायमवंत्ववस्युषु च** ।६।४।११६। एषु व्यपरेण्यतिएङ्प्रकृत्या । वसुभिर्नो अव्यात् । मित्र महो अवद्यात्। मासीवासो अवक्रमुः । तेनोअव्रत । शतधारो अयंमणिः । तेनो अवन्तु । कुशिकासो अवस्यवः । **सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः** ।७।१।३९। ऋजवः संतुपंथाः । पंथान इति प्राप्ते । परमेव्योमन् । व्योमनीति प्राप्ते । धीती मती सुष्टुती । धीत्या । मत्या । सुष्टुत्येतिप्राप्ते पूर्वसवर्णः । यासुरथा रथीतमा । यौ सुरथाविति प्राप्ते । आ। नताद्ब्रह्मणम् । नत मितिप्राप्ते आत् । यादेवविद्मतात्वा । यमिति प्राप्ते । नयुष्मे वाजबन्धवः । अस्मे इन्द्राबृहस्पती । युष्मासु अस्मभ्यमितिप्राप्ते शे । उरुया । धृष्णुया । उरुणा धृष्णुनेति प्राप्ते या नाभापृथिव्याः । ना-

भाविति प्राप्ते डा । ता अनुष्ठचोच्यावयतात्। आङो ड्या। साधुया । साध्विति प्राप्ते याच् । वसंता यजेत । वसंत इति प्राप्ते आल् । ( इयाड्याजीकाराणामुपसंख्यानम् ) । उर्विया । उरुणेति प्राप्ते इया । सुक्षेत्रिया । सुक्षत्रिणेति प्राप्ते डियाच् । दृतिं नशुष्कं सरसी शयानम् । सरस्यामिति प्राप्तेई । **आज्जसेरसुक्** ।७।१।५०। ब्राह्मणासः । (तन्वादीनां वेयङुवङौ)। तन्वं पुषेम । तनुवं पुषेम । विष्वं पश्य । विषुवं पश्य । स्वर्गोलोकः । सुवर्गो लोकः । त्र्यंबकं । त्रियंबकम् । वरेण्यम् । वरेणियम् । ' अतोभिसऐस् ' । **बहुलं छन्दसि** ।७।१।१०। अग्निर्देवेभिः । **मन्त्रेष्वाङ्यादेरात्मनः** ।६।४।१४१। आत्मन्शब्दस्यादेर्लोप आङि । त्मनादेवेषु । अपांभि । ( मासश्छन्दसीतिवक्तव्यम् ) । माद्भिः । शरद्भिः । **प्रसमुपोदः पादपूरणे** ।८।१।६। एषां द्वे स्तः । प्रप्रायमग्निः । संसमिद्युवसे । उपोपमेपरामृश । किन्नोदुदुहर्षसे । **षष्ठ्याःपतिपुत्रपृष्ठपारपदपयस्पोषेषु** ८।१।५३। विसर्गस्य सः स्यात् । वाचस्पतिं विश्वकर्माणम् । दिवस्पुत्राय सूर्य्याय । दिवस्पृष्ठं भन्दमानः । तमसस्पारमस्य । परिवीतइळस्पदे । दिवस्पयोदिधिषणाः । रायस्पोषं यज मानेषु धत्तम् । इति **वैदिकप्रक्रिया** ।

**धातोः** ।६।१।१६३। अन्तउदात्तः स्यात् । **अनुदात्तं पदमेकवर्जम्** ।६।१।१५८। परिभाषेयं स्वरविधिविषया । यस्मिन्पदे यस्योदात्तः स्वरितो वा विधियते तमेकमचं वर्जयित्वा शेषं तत्पदमनुदात्ताच्कं स्यात् । गोपायतन्नः । अत्र ' सनाद्यंताधातव ' इति धातुत्वे धातुस्वरेण यकाराकारउदात्तः । शिष्टमनुदात्तम् । **उदात्तादनुदात्तस्य**

स्वरितः ।८।४।६६। इतितकाराकारः स्वरितः । **स्वरितात्संहितायामनुदात्तानाम् ।१।२।३१।** एकश्रुतिःस्यात् । इतिनकाराकारः प्रचयः । **अनुदात्तस्य च यत्रोदात्तलोपः ।६।१।१५१।** यस्मिन्ननुदात्ते उदात्तो लुप्यते तस्योदात्तः । देवींवाचम् । अत्र ङीबुदात्तः । **आद्युदात्तश्च ।३।१।४।** प्रत्ययस्याद्युदात्तः स्यात् । कर्त्तव्यम् । **अनुदात्तौ सुप्पितौ ।३।१।४।** पूर्वस्यापवादः । यज्ञस्य । नयो युच्छति । शप्तिपोरनुदात्तत्वे स्वरितप्रचयौ । **चितः ।३।१।२६८।** अन्तउदात्तःस्यात् । चितः सप्रकृतेर्बह्वकजर्थम् । चितिप्रत्यये सति प्रकृतिप्रत्ययसमुदायस्यान्तउदात्तो वाच्यइत्यर्थः । नभन्तामन्यकेसमे । यके सरस्वतीम् । तकत्सुते । **तद्धितस्य ।६।१।१६४।** चितस्तद्धितस्यांतउदात्तः । पूर्वेण सिद्धे ञित्स्वरबाधनार्थम् । कौञायनाः । **कितः ।६।१।१६५।** कितस्तद्धितस्यांत उदात्तः । यदाग्नेयः । **तित्स्वरितम् ।६।१।१८५।** क्व नूनं । **उपोत्तमं रिति ।६।१।११७।** रित्प्रत्ययान्तस्योपोत्तममुदात्तं स्यात् । यदाहवनीये । **ञ्नित्यादिर्नित्यम् ।६।१।१९७।** ञिदंतस्य निदन्तस्य चादिरुदात्तः । यस्मिन्विश्वानि पौंस्या । पुंसःकर्मणिब्राह्मणादित्वात्ष्यञ् । सुतेदधिष्वनश्चनः । चायतेरसुन् । चायतेरन्नेह्रस्वश्चेति चकारादसुनोनुडागमः । **लिति ।६।१।१९६।** प्रत्ययात्पूर्वमुदात्तं स्यात् । चिकीर्षकः । अत्र इकारस्योदात्तता । इत्यादिप्रयोगमनुसृत्यान्वाख्यातव्यम् । इति**स्वरप्रक्रिया** । एषा वरदराजेन बालानामुपकारिका । अकारि पाणिनीयानां मध्यसिद्धान्तकौमुदी ॥ १ ॥ कृतिर्वरदराजस्य मध्यसिद्धान्त-

कौमुदी । तस्याःसंख्यातुविज्ञेयाखबाणकरवह्निभिः २ ॥ ३२५०

इति श्रीवरदराजकृता मध्यसिद्धान्तकौमुदी समाप्ता ॥

शुभम् ॥ * ॥ लिङ्गम् । स्त्री । अधिकारसूत्रे एते । ऋकारान्ता मातृदुहितृस्वसृयातृननान्दरः१। एते पञ्चैव स्त्रीलिङ्गाः । अन्यूप्रत्ययान्तो धातुः२ । अनिप्रत्ययान्त ऊप्रत्ययान्तश्च धातुःस्त्रियां स्यात् । अवनिः । चमूः । मिन्यन्तः । ३ । मिनिप्रत्ययान्तौ स्त्रियाम् । भूमिः । ग्लानिः । क्तिन्नन्तः ४। कृतिरित्यादि ईप्रत्ययान्तश्च ।५। लक्ष्मीः । ऊङाबन्तश्च ।६। कुरूः अजा । य्वन्तमेकाक्षरम्ः भ्रू विंशत्यादि रानवतेः ।७॥८।श्री इयं विंशतिः । तलन्तः।९।शुक्लता । भाःस्रक्स्रुग्दिग्गुष्णिगुपानहः ।१०। इयं भाः स्थूणोर्णे नपुंसके च ।११। स्थूणा । स्थूणम् । शष्कुलिराजिकुट्यशनिवर्त्तिभ्रुकुटित्रुटिवलिपंक्तयः।१२। एते स्त्रियां स्युः। इयं शष्कुलिः। अप्सुमनस्समा सिकता वर्षाणां वहुत्वं च ।१३।अवादीनां पञ्चानां स्त्रीत्वं स्याद्बहुत्वञ्च । आप इमाः । ताराधाराज्योत्स्नादयश्च ।१४। इयन्तारा इतिस्त्र्यधिकारः ।

पुमान् । अयमधिकारः घञबन्तः ।१। पाकः । करः । भावार्थ एवेदम् । घाजन्तश्च ।२। विस्तरः । चयः । भयलिङ्गभगपदानि नपुंसके।३। भयमित्यादि । नङन्तः ।४। पुंसि स्यात् । यज्ञ इत्यादि । याञ्चा स्त्रियाम् ।५। पूर्वस्यापवादः । क्यन्तोघुः ।६। आधिः । प्रधिः । इषुधिः स्त्रीच ।७। चात्पुंसि । इयमयं वा इषुधिः । द्यौः स्त्रियाम् ।८।

क्रतुपुरुपकपोलगुल्फामेवाभिधानानि ।९। क्रतुरध्वरः । अभ्रन्नपुंसकम् ।१०। पूर्वस्यापवादः । उदंतः।११। अयं पुंसि स्यात् । प्रभुः । विभुः । धेनुरज्जुकुहुसरयुतनुरेणुप्रियंगवः स्त्रियाम् ।१२। इयं धेनुः । कृत्वंतः ।१३। मेरुः । सेतुः । दारुकसेरुजतुवस्तुमस्तूनि नपुंसके च ।१४। इदं दारु दारुः । सक्तुर्नपुंसकेच ।१५ सक्तु । सक्तुः । अदंत इत्यधिकृत्य । कोपधः ।१६। कोपधोकारान्तः पुंसि स्यात् । स्तवकः । कल्कः । चिबुकादीनि नपुंसके ।१७। चिबुकम् । टोपधः।१८। अदन्तः पुंसि । घटः पटः । किरीटादीनि नपुंसकेच ।१९। किरीटम् किरीटः । णोपधः ।२०। अदन्तः पुंसि । गणः । पाषाणः । ऋणादीनि नपुंके ।२१। ऋणम् । कार्षापणादीनि नपुंके च ।२२। चात्पुंसि । थोपधः ।२३। अदन्तः पुंसि । रथः । यूथः नोपधः ।२४। अदन्तः पुंसि । इनः । फेनः । जघनादीनि नपुंके ।२५। जघनम् । पोपधः ।२६। अदन्तः पुंसि । दीपः । पर्पः । पापादीनिनपुंसके ।२७। पापम् । शूर्पकुतकुणपद्वीपविटपानि नपुंसके च ।२८। चात्पुंसि । भोपधः ।२९। कुंभः । सरभः । तलभं नपुंसकम् ।३०। जूंभन्नपुंसके च ।३१। मोपधः ।३२। होमः । धर्मः । रुक्मादीनि नपुंसके ।३३ इदंरुक्ममित्यादि । संग्रामादीनि नपुंसके च।३४। चात्पुंसि संग्रामः । संग्रामम् । योपधः ।३५। हयः । समयः । किसलयादीनि नपुंसके ।३६। गोमयादीनिनपुंसके च ।३७। रोपधः ।३८। क्षुरः । खुरः । अंकुरः । द्वारादीनि नपुंसके ।३९। इदं द्वारम् । शुक्रमदेवतायाम्

।४०।दिवतायां तु शुक्रः। षोपधः ।४१। वृषः। वृक्षः। शिरीषादीनि नपुंसके ।४२। इदं शिरीषम्। सोपधः ।४३। वायसः। महानसः। पनसविसवुससाहसानि नपुंसके ।४४। चमसादीनि नपुंसके च ।४५।चात्पुंसि। कंसं चाप्राणिनि ।४६। कंसः। कंसं वा पानपात्रम् ।४७। प्राणिनि तु कंसः औग्रसेनिः। रश्मिदिवाभिधानानि ।४८। अत इति निवृत्तम्। दीधितिः स्त्रियाम् ।४९। दिनाहनीनपुंसके ।५०। दिनम्। अहः। मानाभिधानानि ।५१। कुडवः। द्रोणाढकौ नपुंसके च ।५२। चात्पुंसि। खारीमानिके स्त्रियाम् ।५३।इयं खारिः। दाराक्षनलाजासूनां वहुत्वं च ।५४।इमे दाराः। मरुद्गरुत्तरदृत्विजः ।५५।अयं मरुत्। ध्वजगतमूजपुञ्जाः।५६।एते पुंसि। वंशांशपुरोडाशाः ।५७। अयंवंशः। ह्रदकन्दकुन्दवुद्वुदशब्दाः ।५८।अयं ह्रदः। अर्यपथिमथ्यृभुक्षिस्तिम्वनितम्वपूगाः ।५९। अयमर्यः। सारथ्यतिथिकुक्षिविस्तपाण्यञलयः।६०। पल्लवपल्वलकफरेफकटाहनिर्व्यूहमठमणितरङ्गतुरङ्गगन्धस्कन्धमृदङ्गसङ्गसमुद्रपुङ्खाः ।६१। अयं पल्लव इत्यादि। ऋषिराशिदृतिग्रन्थिक्रमिध्वनिवलिकौलिमौलिरविकविकपिमुनयः ।६२। एते पुंसि स्युः। अयमृषिः। हस्तकुन्तान्तव्रातवातदूतधूर्त्तसूतचूतमुहूर्त्ताः ।६३। एतेपुंसि। अयंहस्त इत्यादि॥ इतिपुल्लिङ्गाधिकारः॥ * ॥ * ॥ *

नपुंसकम्। अयमधिकारः। भावे ल्युडन्तः।१। ज्ञानम् हसनम्। भावेकिम्। पचनः। निष्ठा च ।२। भावे या निष्ठा तदन्तं क्लीवं स्यात्।

गीतम् । त्वष्यञौ तद्धितौ ।३। शुक्लत्वम् । शौक्ल्यम् । षित्वसामर्थ्यात्पक्षे स्त्रीत्वे ङीप् । चातुरी । **कर्मणि च ब्राह्मणादिगुणवचनेभ्यः** ।४। ब्राह्मण्यम् । **यद्यढग्यगञण्वुञ्छाश्चभावकर्मणि** ।५। एतानि । क्लीबानि । स्तेयम् । सख्यम् । कापेयम् । सैनापत्यम् । औष्ट्रम् । द्वैहायनम् । पितापुत्रकम् । अच्छावाकीयम् । **अव्ययी भावः** ।६। अधिहरि । **द्वंद्वैकत्वम्** ।७। पाणिपादम् । **अनल्पेछाया** ।८। शरच्छायम् । **इसुसन्तः** ।९। हविः । सर्पिः । धनुः । **आर्चिः स्त्रियां च** ।१०। इद्मियं वार्चिः । **छदिस्त्रियामेव** ।११। इयंछदिः । **मुखनयनलोहवनमांसरुधिरकार्मुकविवरजलहलधनान्नाभिधानानि** ।१२एषामभिधायकानि क्लीबे स्युः । मुखमाननं वक्त्रम् । इत्यादि । **सीरार्थौदनाः पुंसि** ।१३। **वक्त्रनेत्रा रण्यगांडीवानि पुंसिच** ।१४। चात्क्लीबे । **अटवी स्त्रियाम्** ।१५। पूर्वस्येयं निसृत्री बाधिका । **लोपधः** ।१६। कुशलम् । **शीलादीनि पुंसि च** ।१७। चात् क्लीबे । शीलम् । **शतादिः संख्या** ।१८। शतम् । सहस्रम् । **शतायुतमयुताः पुंसि च** ।१९। **लक्षाकोटिः स्त्रियाम्** ।२०। इयं लक्षा । **सहस्रः पुंसि** ।२१। **मनूव्धचूकोकर्त्तरि** ।२२। मन्प्रत्ययान्तो व्द्यचूकः पुंसि स्यात् चात् क्लीबे नतु कर्त्तरि । वर्मा । वर्म । अकर्त्तरि किम् । ददातीति दामा । **ब्रह्मन्पुंसिच** ।२३। अयं ब्रह्मा । इदं ब्रह्म । **सामरोमणी क्लीबे** ।२४। पूर्वस्यापवादः । **असन्तोद्व्यचूकः** ।२५। यशः । मनः । तपः । अप्सराः । **स्त्रियाम्** ।२६। एता अप्सरसः । **त्रअन्तः** ।२७। पत्रम् । छत्रम् । **यात्रामात्राभस्त्रा दंष्ट्रा वरत्राः स्त्रियामेव** ।२८। इतिनपुंसकाधिकारः ।

स्त्रीपुंसयोः ।१। अयमधिकारः । गोमणियष्टिमुष्टिपाटलिवस्तिशाल्मलितुटिमसिमरीचयः ।२। इयमयं वा गौः। अपत्यार्थतद्धिते ।३। औपगवः । औपगवी । इतिस्त्रीपुंसाधिकारः ।

पुन्नपुंसकयोः । अधिकारोयम् । घृतभूतमुस्तक्ष्वेलितैरावतपुस्तकबुस्तलोहिताः ।१। अयं घृतः । इदं घृतम् । कवन्धौपधायुधांताः ।२। स्पष्टम् । दण्डमण्डखण्डशवसैंधवपार्श्वकाशाङ्कुशकुलिशाः ।३। दण्डः । दण्डम् । इतिपुंन्नपुंसकाः।

अव्ययमवशिष्टलिङ्गम् ।१। कतियुष्मदस्मदः ।२। ष्णान्ता संख्या शिष्टा परवत् ।३। एकः पुरुषः । एकास्त्री । एकंकुलम् । गुणवचनम् ।४। शुक्लः पटः। शुक्ला पटी । शुक्लं वस्त्रम् । कृत्याश्च ।५। करणाधिकरणयोर्ल्युट् च ।६। सर्वादीनि सर्वनामानि ।७। स्पष्टार्थेयं त्रिसूत्री ॥

इतिश्रीवरदराजक्षितविरचितपाणिनीयलिङ्गानुशासनसारभूता लिङ्गानुशासनसूत्रवृत्तिः समाप्ता ॥

---

# शुद्धिपत्रम् ।

| अ० | शु० | पृ० | पं० |
| --- | --- | --- | --- |
| चट्तुव् | चट्तव् | १ | ९ |
| द्वि. शरीवय | शरीराव | २ | १९ |
| उत्तंभनम् | उत्तम्भनम् । | १० | १८ |
| घनाधनः | घना घनः | १३ | १३ |
| सेमामविड्ढि | सेमामविड्ढि | १९ | ९ |
| भिस | भिस् | १९ | १३ |
| सुसुप् | सुप् | १९ | १४ |
| द्वि. द्विक्त | द्विक्स | २० | १७ |
| स्यत्यतुपर० | स्यत्यातुपर० | २२ | १७ |
| क्रोष्टुन् | क्रोष्टून् | २५ | ९ |
| नित्यत्वतुपक्षे | नित्यत्वातुपक्षे | २० | १ |
| अदंतस्य | अदन्तस्य | ३१ | १० |
| अष्टानान् | अष्टानाम् | ३६ | १० |
| असंख्यवङ् | असन्ख्यवङ् | ४६ | १ |
| गंगांवि | गङ्गांवि० | ५८ | १८ |
| ण्यंतस्य | ण्यन्तस्य | ६१ | १३ |
| यदंगं | यदङ्गं | ७५ | ३ |
| ग्रंथः | ग्रन्थः | ७६ | १२ |
| संधि | सन्धिः | ७७ | १८ |
| गुणोन्के | गुणोऽपृक्त | ९७ | ३ |
| द्वि. यणाविवत् | यणाविवत् | १०९ | १२ |
| उपहेहे | उपदेहे | ११० | १२ |
| उंशीकुद्ने | उन्शीकुद्ने | ११४ | ९ |
| वूर्षीट | वूर्षीट | ११८ | १० |
| तपशाहो | तपशाहे० | १२१ | १३ |
| अशुश्रूषत्० | अशूशुषत्— | १२४ | ९ |
| पुङ्णौ० | पुग्णौ | १२५ | ३ |
| संनन्ते | सन्नन्ते | १२६ | १६ |
| हंभ | भम्भ | १२९ | ३ |
| भजयशां | भञ्ज | १३२ | ५ |
| गंङ्गा | गङ्गा | १४२ | ५ |
| हिसा | हिंसा | १४४ | १४ |
| णेर्विभाषा | णेर्विभाषा | १५५ | १३ |
| मित्रम | मित्रम | १७२ | १० |
| भ्राच | भ्राज | १७८ | १४ |
| डस्य | ङस्य | १७९ | १७ |
| द्वि. गच्छन | गच्छन् | १९४ | १७ |
| द्वि. भषत्यो | भापत्योः | १९४ | २० |
| न्त्रान्त | न्तान्त | २२९ | ९ |
| अवसाम | अवसामम् | २३५ | ६ |
| स्य वः | स्य वः | २४१ | ७ |
| काक | काक् | २५६ | ८ |

# ENGLISH EXPLANATIONS OF THE IMPORTANT TECHNICAL TERMS OCCURING IN THE MADHYA SIDHANT KAUMUADI.



सूत्र—A short or concise technical sentence used as a memorial rule an aphorism.

वार्तिक—An explanatary or supplimentary rule which explains the meaning of that which is said, of that which left unsaid, and of that which is imperfectly said.

भाष्य—A commentary which explains aphorism word by word with comments of its own.

संज्ञासूत्र—A heading or presiding rule which gives a particular name to the rules which fall under it and influences them all.

विधि—Commandment. Any precept which enjoins some thing for the first time. A commanding rule.

नियम—A general rule.

आदेश—A substitute.

आगम—The addition or insertion of a letter. An augment.

प्रत्याहार—The comprehension of several letters or affixes into one syllable, effected by combining the first letter a Sutra with its final indicatory letters' or in the case of several sutras with the final letter of the last member.

अच्—Vowals.

हल्—Consonants.

ह्रस्वस्वर—Short vowals.

दीर्घस्वर—Long vowals.

प्लुतस्वर—Protracted vowals.

उदात्त—High.

अनुदात्त—Low.

स्वरित—Circumflex.

स्थान—Uttering place.

प्रयत्न—Effort of the mouth in the production of articulate sounds. Effort in uttering.

सवर्ण—Belonging to the same class of letters' requiring the same Effort ( of the organs of speech ) in pronunciation.

कण्ठ्य—gutturals.

तालव्य—Palatals.

मूर्द्धन्य—Cerebrals.

दन्त्य—Dentals.

ओष्ठ्य—Labials.

अनुनासिक—Nasals.

कण्ठ्यतालव्य—Palato-Gutturals.

कण्ठोष्ठ्य—Labio.-Gutturals

दन्त्योष्ठ्य—Dento-Labials.

परिभाषा—Technical terms.

संहिता—Conjunction of letters.

स्वरसन्धि—Conjunction of vowals.

हल्सन्धि—Conjunction of consonants.

णत्वविधि—Changes of न into ण.

षत्वविधि—Changes of " स " into ष "

अपवाद---Exception.

सुबन्त---Declension.

पुँल्लिङ्ग---Masculan gender.

स्त्रीलिङ्ग---Feminine.

क्लीबलिङ्ग---Nuter.

सर्वनाम---Pronouns.

सर्वनामस्थान---Name for the nominative (all numbers) and accusative singular & dual of masculine & feminine names.

अङ्गसंज्ञा---Strong base weak terminations.

असंज्ञा---Weakbase strong terminations.

प्रातिपदिक---The Crude form of a substantive, a name in its uninflected state (before receiving the Case terminations.)

युष्मद् & अस्मद्---Personal pronouns.

तद् &c---Demonstrative Pronouns.

स्वयं & आत्मन्-स्व-निज---Reflexive Pronouns.

तादृश & यादृश---&c Compound. Pronouns.

संख्यावाचक---Numerals.

अव्यय---Indeclinables.

स्त्रीप्रत्यय---Formation of feminines.

विशेष्य---Name.

विशेषण---Adjective.

कारक---Case.

कर्त्ता---Nominative.

कर्म---Accusative.

करण---Instrumental.

सम्प्रदान—Dative.

अपादान—Ablative.

अधिकरण—Locative.

सम्बोधन—Vocative.

सम्बन्ध—Genetive.

विभक्तिनिर्णय—Special applications of case endings.

समास—Compound words.

द्वन्द्व—Capulative Compound.

तत्पुरुष—Determinative Compound.

कर्म्मधारय—Appositional Compounds.

द्विगु—Numeral Compound.

बहुव्रीहि—Relative. Compound.

अव्ययीभाव—Indeclinable compound.

तद्धितप्रत्यय—Nominal affixes.

विकार—Deviation from original state.

व्याप्ति—Pervading.

अवयव—Component part.

संसर्ग—Admixture.

अपृथग्भाव—Not having a separate entity.

अनिर्द्दिष्ट—Indefinite.

परिणत—Complete change.

अधीन—Appropriation.

देय—To be given.

ह्रस्व—Small.

अनुकम्पा—Pity.

पुरुष—person.

वचन—Number.

एकवचन—Singular.
द्विवचन—Dual.
बहुवचन—Plural number.
लट्—Present Tense.
लिट्—Second. Preterite.
लुट्—First Future.
लृट्—Second Future.
लेट्—Subjunctive mood ( this is used in ved only )
लोट्—Imperative.
लङ्—First Preterite.
विधिलिङ्—Potential.
आशीर्लिङ्—Benidictive.
लुङ्—Aorist.
लृङ्—Conditional Tense.
गण—Conjugation.
परस्मैपद—Transitive. A verb the action of which refers to another. ex. ददाति he gives.
आत्मनेपद—Intransitive. A verb the action of which refers to the agent ex अदत्ते he takes.
सार्वधातुक—Special or modified tenses.
आर्द्धधातुक—General or unmodified tenses.
सेट्—The case in which the इ ( Intermediate ) is employed.
अनिट्—The case in which the इ is not employed.
वेट्—The cases in which the इ is optionally emplyed.
कर्तृवाच्य—Active voice.
कर्मवाच्य—Passive voice.
भाववाच्य—Impersonal voice.
कर्मकर्तृवाच्य—Passive active voice.
णिजन्तप्रक्रिया—Causative verbs.
सन्नन्तप्रक्रिया—Desiderative verbs.
यङन्तप्रक्रिया—Frequentative verbs.

यङ्लुगन्तप्रक्रिया—Intensive verbs.
पौनःपुन्य—Frequency.
भृश—Intensity of the action.
नामधातुप्रक्रिया—Denominative verbs.
लकारार्थप्रक्रिया—Signification of the tenses. & moods.
कृदन्तप्रक्रिया—Primary affixes or verbal affixes.
शतृ & शानच्—Present participles.
क्वसु & कानच्—Past participles.
स्यतृ & स्यमान—future participles.
तुमुन्—Infinitive.
क्त्वा & ल्यप्—Perfect participles.
क्त & क्तवतु—Past participle or participle adjective.
तव्य-अनीयर & मतु—Adjectival participles.
सम्प्रसारण—The change of य, व, र & ल to इ उ ऋ & लृ respectively.
वर्तमान—Present लट्.
भूत—Aorist लुङ्.
अनद्यतनभूत—Imperfect लङ्.
परोक्षभूत— perfect लिट्.
भविष्यत्—First future लुट्.
अनद्यतनभविष्यत्— Second. Future
आज्ञा—Imperative लोट्.
विधि—potential विधिलिङ्.
आशीः—Benidictive. आशीर्लिङ्
संकेत—Conditional लृङ्.
लेट्—The Subjunctive is used only in the Ved & is therefore termed "the Vedic subjunctive"

P. T. GANESH DUTT SHASTRI.
Professor of Sanskrit Forman Christian College.
LAHORE.